१० नवंबर ७१ शा मुरा वल्लुं (यं०)

# अभिज्ञानशाकुन्तलम्

## महाकविकालिदासविरचितम्।



नेपालदेशीयपन्तोपनामश्रीडमरुवल्लभ
कृतकृपप्रकाशनामकटीकासमेतम्।

तेनैव पण्डितेन संशोधितम्।






कलिकातायाम्

श्रीयुतभुवनचन्द्रवसाकमहोदयस्य प्रार्थनया
तद्द्वारैव संवादज्ञानरत्नाकरयन्त्रालये
मुद्रितम्

शकाब्दाः १७९२ इं० सन् १८७१।

( निमतला घाट ष्ट्रीट ८ संख्यक भवन )

श्रीगणेशाय नमः ॥

## मङ्गलाचरणम् ।



भगवति तव श्रेयः प्रायः प्रणामपरो नरो
लभत इति हि ख्यातोऽप्यर्थो न मय्यनुभूयते ।
कथमपि कृपादीनश्चैनं जनन्न समर्थयेत्
प्रकृतकरणे दुष्कीर्त्तिस्त्वां कदापि न मोक्ष्यति ॥
व्याचष्टे नाटकञ्चारु कालिदासविनिर्म्मितम् ।
शाकुन्तलं यथार्द्धिं बुधीटो ऽमरवल्लभः ॥

## उपक्रमणिका ।

इह खलु जगति द्विविधेऽदृश्यदृश्यरूपे काव्ये तत्रान्त्यमेवाऽवस्थानुकरणरूपत्वेन रसोत्पादकतया रञ्जयति परिषच्चेतांसि । उक्तञ्च वामनेन । सन्दर्भेषु दशरूपकं श्रेय इति । भरतेनापि । न तज्ज्ञानं न तच्छिल्पं न सा विद्या न ताः कलाः । नासौ न योगो न तत्कर्म्म रूपके यन्न दृश्यत इति च । तेषु च दशविधेषु नाटकं सप्रकरणमित्यादिषु भाणादौ । भाणः समवकारश्च तथेहामृग एव च । उत्सृष्टिकाङ्को व्यायोगो वीथिप्रहसनं डिमः ॥ कैशिकोऽन्तिहीनानि रूपाण्येतानि कारयेदित्यभियुक्तोक्त्या कैशिक्यादिवृत्तीनामाश्रयतया संपूर्णलक्षणलक्षिततया प्रख्यातोदात्तनायकप्रसिद्धवस्तुवर्णनीयतया च प्रथमं नाटकमेव मुख्यतयाऽभिधीयते । अतएव धनञ्जयो दशरूपके । प्रकृतित्वादथान्येषां भूयोरसपरिग्रहात् । संपूर्णलक्षणत्वाच्च पूर्व्वं नाटकमुच्यत इति । तत्र च ।

**नान्द्यन्ते[1] सूत्रधारः[2]। अलमतिविस्तरेण[3]॥**

---

(१) नाटकाद्यपदत्वेन नान्दी। सा च चतुर्धा। तथा च नाट्यशास्त्रे। नमस्कृतिर्माङ्गलिकिराशीः पत्रावली तथा। नान्दी चतुर्धा निर्दिष्टा नाटकादिषु धीमतेति॥ तेषु च नमः प्रधानवाक्येन कोमलेन पदेन वा। कल्पिता शम्भुना युक्ता नमस्कृतिरितीरिता॥ देवस्याद्रीन्दुपुत्रस्य विलासे नोपवर्णिता। मङ्गलाऽनुगतं वाक्यं यत्र माङ्गलिकीति वा॥ देवद्विजनृपादीनामाशिर्वाद परायणा। नान्दी मङ्गलसंयुक्ता स्यादाशीरिति तद्विदः॥ वाक्यार्थबीजरहिता शृङ्गारादिपदान्विता। संयुक्ता चन्द्रपद्माभ्यां पत्रावल्यभिधीयत इति॥ अत्र च देवद्विजनृपादीनामिति लक्षणसत्वेनाशीर्वादो नान्दी। सूत्रधारः पठेत्तत्र मध्यमं स्वरमाश्रितः। नान्दीं पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृतिरिति॥ पदञ्चात्र द्विविधम्। श्लोकचतुर्थांशरूपं सुप्तिङन्तरूपञ्च। श्लोकपादं पदं किञ्चित्सुप्तिङन्तमथाऽपर इत्युक्तेः। अत्र तु द्वादशपदेभ्योऽधिकपदत्वात्कथं नान्दीत्वमिति चेन्न। पञ्चविंशत्पदा नान्दी नित्यमेव शुभावहा। स्यान्नायकस्य च कवेर्यदि शम्भुर्विभूषितेत्युक्त्या पञ्चविंशत्पदत्वान्नान्दीत्वम्। यद्वा नाट्यप्रदीपे। पदेऽवान्तरवाक्यञ्च पदमाहुर्विचक्षणा इत्युक्त्याऽष्टपदा चेयम्। केचित्तु नान्द्याः पदनियमो नादृतः। देवतादेर्नमस्कारो गुरूणामपि च स्तुतिः। गोब्राह्मणनृपादीनामाशीर्नान्दीति कोहल इति वचनात्॥ यद्वा नान्दी पदैर्द्वादशभिरष्टभिर्वाप्यलङ्कृता। तां षोडशपदामेव केचिदाहुश्चतुष्पदामित्युक्तेयन्नान्दी चतुष्पदा च। एतेन वेणीसंहारे नान्द्याः षोडशपदत्वापत्त्या नान्द्यन्ते सूत्रधार इत्यनन्तरमेव श्रवणाञ्जलिपुटपेयमिति लिखनं युक्तमित्यालपन्तः परास्ताः। नान्दीति तु पृषोदरादित्वात्साधु।तथाहि। तुष्ट्यर्थे नदि धातौ वा समृद्ध्यर्थे च वा पुनः। पृषोदरादि वा पाठे नान्दीसाधनमीरितमित्यलं बहुना।

(२) सूत्रधार इति। काव्यार्थस्य स्थापनात्स्थापक इत्यर्थः। सूत्रधारइति व्यवहारस्तूपचारात्। उक्तञ्च शातकर्णेन। सूत्रधारगुणाकारः स्थापकः प्रविशेत्ततः। उपचारेण सोऽप्यत्र सूत्रधारोऽभिधीयते इति॥ एतेन सूत्रधारेण मङ्गलपाठानन्तरं नान्दी कर्त्तव्या नान्द्यनन्तरं सूत्रधारप्रवेश इत्यन्योन्याश्रयमाधाय नान्दी अन्येनैव

नेपथ्याभिमुखमवलोक्य। आर्य्ये![1] यदि नेपथ्यविधानमवसितं तदिहागम्यताम् ।

नटी प्रविश्य। अज्ज! इअम्हि, आणवेदु अज्जो को णिओओ अणुचिट्ठीअदु त्ति[2] ।

सूत्र। आर्य्ये! इयं हि रसभावविशेषदीक्षागुरोर्विक्रमादित्यस्याभिरूपभूयिष्ठा[3] परिषत्, अस्याञ्च कालिदासग्रथितवस्तुना नवेनाभिज्ञानशाकुन्तलनामधेयेन[4] नाटकेनोपस्थातव्यमस्माभिः, तत् प्रतिपात्रमाधीयतां यत्नः ।

नटी। सुविहिदप्पओअदाए अज्जस्स ण किम्पि परिहाइस्सदि[5] ।

---

पठित्वा तदन्ते सूत्रधारः प्रविशति वदति च वक्ष्यमाणमिति व्याख्यानन्निरस्तम्। अन्ये तु पटान्तरित एव नान्दीं कृत्वाऽन्ते सूत्रधारः प्रविशति वदति चेत्याहुः।

(३) अलमिति। कार्य्यार्थस्य शीघ्रं कर्त्तव्यतया वाचामतिप्रसङ्गो वारणीय इत्यर्थः। अलं भूषणपर्याप्ति-शक्तिवारणवाचकमित्यमरः। हरिमिश्रस्तु। तृतीयान्तपदसमभिव्याहृतोऽलं शब्दो निष्फलत्वं बोधयतीत्याह।

(१) आर्य्ये इति। सम्बोधनमनवधेयवचनत्वनिराकरणाय।

(२) आर्य इयमस्मि आज्ञापयत्वार्यः को नियोगोऽनुष्ठीयतामिति।

(३) इयमिति। रसाश्च भावाश्च तेषां विशेषास्तेषु दीक्षागुरोः निष्णातस्याभिरूपभूयिष्ठाः पण्डितबहुला बहुशब्दादिष्ठनि बहोर्लोपो भू च बहोरित्यनेन भूरादेशे इष्ठस्य यिट् चेति यिडागमः। अभिरूपो बुधे रम्ये इति मेदिनी।

(४) शकुन्तलाया इदं शाकुन्तलम् अभिज्ञानञ्च तच्छाकुन्तलञ्चेति विग्रहः। शकुन्तलासम्बन्धिपरिचयविशिष्ट इत्यर्थः। नाम कुर्य्यान्नाटकस्य गर्भितार्थप्रकाशकमित्युक्तेः।

(५) सुविहितप्रयोगतया आर्य्यस्य न किमपि परिहास्यते। सुविहितेति सुशिक्षितप्रयोगतयेत्यर्थः।

सूत्र। सस्मितम्। आर्य्ये! कथयामि ते भूतार्थम्[१]।

आपरितोषाद्विदुषां न साधु मन्ये प्रयोगविज्ञानम्।
बलवदपि शिक्षितानामात्मन्यप्रत्ययं चेतः[२]॥

नटी। सविनयम्। एवमेदं। अणन्तरकरणिज्जं दाणिं अज्जो आणवेदु[३]।

सूत्र। आर्य्ये! किमन्यदस्याः परिषदः श्रुतिप्रमोदहेतोर्गीतात् करणीयमस्ति?

नटी। अध कदमं उण उदुं अधिकरिअ गाइस्सम्[४]।

सूत्र। आर्य्ये! नन्विममेव तावदचिरप्रवृत्तमुपभोगक्षमं ग्रीष्मसमयमधिकृत्य गीयताम्। सम्प्रति हि

सुभगसलिलावगाहाः पाटलसंसर्गसुरभिवनवाताः।
प्रच्छायसुलभनिद्रा दिवसाः परिणामरमणीयाः[५]॥

---

( १ ) भूतार्थमिति। युक्ते क्ष्मादावृते भूतमित्यमरः।

( २ ) आपरितोषादिति। विदुषां पण्डितानामापरितोषात्परितोषं मर्य्यादीकृत्य प्रयोगविज्ञानं प्रकृतनाटकप्रयोगज्ञानं साधु सम्यक् न मन्ये न जानामि बलवदत्यन्तमपि शिक्षितानां चेतो हृदयम् आत्मनि अप्रत्ययं प्रतीत्यभावमुत्पादयति। सभासदसन्तोषेणैवास्य प्रयोगस्योत्कृष्टत्वमिति भावः। इदं प्ररोचनानामकं प्रस्तावनाङ्गम्। भावसिद्धिः प्ररोचनेति नाट्यदर्पणः। उन्मुखीकरणं तत्र प्रशंसातः प्ररोचनेति दशरूपकम्।

( ३ ) एवमिदम्। अनन्तरकरणीयमिदानीमार्य्यं आज्ञापयतु।

( ४ ) अथ कतमं पुनर्ऋतुम् अधिकृत्य गास्यामि। ऋतद्वयमुपादाय भारतीं वृत्तिमाश्रित इत्युक्तेरिति भावः।

( ५ ) सुभगेति। शोभनः सलिले जलेऽवगाहः स्नानं येषु ते, पाटलानां पुष्पविशेषाणां संसर्गेण सम्बन्धेन सुरभयः सुगन्धा वनवाता वनवायवो येषु ते, प्रकृष्टा छाया यस्मिन् प्रदेशे प्रच्छायं प्रच्छाये सुलभा निद्रा येषु ते, प्रचण्डातपत्वादिति भावः। एतादृशाः दिवसा परिणामरमणीयाः सन्तीति शेषः।

नटी। तह[1] इति गायति।

खणचुम्बिआइं भमरेहिं उअ सुउमारकेसरसिहाइं।
ओदंसअन्ति दअमाणा पमदाओ सिरीसकुसुमाइं[2]॥

सूत्र। आर्य्ये! साधु गीतम्। अहो रागापहृतचित्तवृत्तिरालिखित इव[3] विभाति सर्व्वतो रङ्गः। तदिदानीं कतमं प्रयोगमाश्रित्यैनमाराधयामः।

नटी। णं पढमं ज्जेव्व अज्जेण आणत्तं अहिणाणसाउन्तलं णाम अउव्वं णाडअं अहिणीअदु त्ति[4]।

सूत्र। आर्य्ये। सम्यगनुबोधितोऽस्मि। अस्मिन् क्षणे खलु विस्मृतं मयैतत्। कुतः

तवास्मि गीतरागेण हारिणा प्रसभं हृतः।
एष राजेव दुष्यन्तः सारङ्गेणातिरंहसा[5]॥

इति निष्क्रान्तौ।

प्रस्तावना[6]।

(१) तथा।

(२) क्षणचुम्बितानि भ्रमरैः पश्य सुकुमारकेशरशिखानि।
अवतंसयन्ति दयमानाः प्रमदाः शिरीषकुसुमानि॥

उवेति निपातः पश्यार्थे।

(३) आलिखित इव। निश्चलत्वादिति भावः।

(४) ननु प्रथममेवार्य्येणाऽऽज्ञप्तमभिज्ञानशाकुन्तलन्नामापूर्व्वन्नाटकमभिनीयतामिति।

(५) तवेति। अतिरंहसाऽत्यन्तवेगवता सारङ्गेण मृगविशेषेण एष राजा दुष्यन्त इव प्रसभं बलात्कारेण हृतोऽस्मीत्यन्वयः।

(६) प्रस्तावनेति। सूत्रधारनट्योरालापादिति भावः। सा चाऽत्र प्रयोगातिशयरूपा। एषोऽहमित्युपक्षेपात्सूत्रधारप्रयोगतः। पात्रप्रयोगो यत्रैष प्रयोगातिशयो मत, इत्युक्त्या एष राजेत्यादिना पात्रस्य दुष्यन्तस्य प्रवेशात्। विश्वनाथस्तु। अवलगिताख्यां प्रस्तावनां मन्यमानो यत्रैकत्र समावेशात्कार्यमन्यत्प्रसाध्यते। प्रयोगे खलु तज्ज्ञेयं नामाऽवलगितम्बुधैरित्यत्रोदाजहार।

ततः प्रविशति रथारूढ़ः शरचापहस्तो मृगमनुसरन् राजा सूतश्च ।

सूतः । राजानं मृगञ्चावलोक्य । आयुष्मन्[1] !

कृष्णसारे ददच्चक्षुस्त्वयि चाधिज्यकार्म्मुके ।
मृगानुसारिणं साक्षात् पश्यामीव पिनाकिनम्[2] ॥

राजा । सूत ! दूरममुना सारङ्गेण वयमाकृष्टाः ।

सोऽयमिदानीमपि

ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः
पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्व्वकायम् ।
शष्पैरर्द्धावलीढ़ैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति[3] ॥

सविस्मयम् । कथमनुपतत एव मे प्रयत्नप्रेक्षणीयः संवृत्तोऽयं मृगः ।

सूतः । उद्घातिनी[4] भूमिरिति रश्मिसंयमनात् रथस्य मन्दीभूतो वेगः, तेनैष मृगो विप्रकृष्टः संवृत्तः । सम्प्रति हि समदेशवर्त्ती न ते दुरासदो भविष्यति ।

---

(१) आयुष्मन्निति । रथी सूतेन चायुष्मानित्युक्तः ।

(२) कृष्णसार इति । कृष्णसारे मृगविशेषे अधिज्यं कार्मुकं यस्य तस्मिन् मृगानुसारिणं मृगमनुसरतीति ताच्छील्ये णिनिः पिनाकिनं महादेवं पश्यामि दृशिर्प्रेक्षणे लट् ।

(३) ग्रीवेति । ग्रीवायाः कन्धरस्य यो भङ्गः सङ्कोचः तेनाऽभिरामं सुन्दरं स्यन्दने रथे मुहुर्वारम्वारं दत्तादृष्टिर्य्यस्य । शरस्य वाणस्य पतनभयात् पतनभीत्या पूर्वकायं भूयसा बाहुल्येन पश्चादर्धन्तेन प्रविष्टः सङ्कुचितः पृषोदरादित्वात्साधुः श्रमेण विवृतं व्यात्तं यन्मुखं तस्माद्भ्रंशते तच्छीलैः शष्पैर्बालतृणैः । शष्पं बालतृणं घास इत्यमरः । वियति आकाशे स्तोकमल्पं प्रयाति गच्छति । पश्य दृशिर्प्रेक्षणे लोट् पाघ्राध्मेति पश्यादेशः ।

(४) उद्घातिनीति । उद्घातिनी उच्चावचा उन्नता वा रश्मिसंयमनादृजुसंकोचात् विप्रकृष्टो दूरः । उद्घातस्तु पुमान् पादस्खलने समुपक्रमे । उन्नते मुद्गरेऽपि स्यादिति मेदिनी ।

राजा । तेन हि मुच्यन्तामभीषवः[1] ।

सूतः । यथाज्ञापयत्यायुष्मान् । इति भूयो रथवेगं रूपयित्वा । आयुष्मन् ! पश्य पश्य । एते हि

मुक्तेषु रश्मिषु निरायतपूर्वकायाः
स्वेषामपि प्रसरतां रजसामलङ्घ्याः ।
निष्कम्पचामरशिखाश्च्युतकर्णभङ्गाः
धावन्ति वर्त्मनि तरन्ति नु वाजिनस्ते[2] ॥

राजा । सत्यम् । नूनमतीत्य हरिणं हरयो[3]वर्त्तन्ते । यतः

यदालोके सूक्ष्मं व्रजति सहसा तद्विपुलतां
यदर्द्धे विच्छिन्नं भवति कृतसन्धानमिव तत् ।

---

(१) अभीषवः रश्मयः । अभीषुः प्रग्रहे रश्मौ इत्यमरः । शकुन्तलोद्धाररूपे मुख्यफले इदं दुष्यन्तस्य मृगानुसरणं बीजम् । अल्पमात्रं समुद्दिष्टं बहुधा यद्विसर्पति । फलस्य प्रथमो हेतु र्बीजन्तदभिधीयते, इत्युक्त्या स्तोकोद्दिष्टस्य मृगयागमनस्य कण्वाश्रमगमनेन विसर्पणात् । अस्य बीजस्य वर्ण्यमानारम्भस्य च सम्बन्धादयं सन्धो मुखसन्धिः तथाचोक्तम् । यत्र बीजसमुत्पत्तिर्नानार्थरससम्भवा । प्रारम्भेणसमायुक्ता तन्मुखं परिकीर्त्तितमिति ॥

(२) मुक्तेष्विति । रश्मिषु रज्जुषु मुक्तेषु निरायतपूर्व्वकायाः नितरामायतः पूर्व्वकायो येषान्ते अतिदीर्घपूर्व्वशरीरा इत्यर्थः । प्रसरतां गच्छतां स्वेषामात्मीयानां रजसां धूलीनां निष्कम्पा निश्चलाश्चामरसदृशाः शिखा येषान्ते च्युतोनष्टः कर्णस्य भङ्गो येषान्ते वाजिनोऽश्वा वर्त्मनि मार्गे धावन्ति तरन्ति तरणङ्कुर्व्वन्ति। नु सम्भावनायाम् । मृगजवाक्षमयेषरथ्या इति पाठान्तरे तु मृगस्य जवो वेगस्तस्याऽक्षमया इव अमी रथ्या वाहाः अश्वा इत्यर्थः । धावन्ति गच्छन्तीत्यर्थः ।

(३) हरिणं मृगं हरयो वाजिनः ।

राजा । अपि[1] सन्निहितोऽत्र कुलपतिः ?

वैखा । इदानीमेव दुहितरं शकुन्तलामतिथिसत्कारायादिश्य दैवमस्याः प्रतिकूलं[2] शमयितुं सोमतीर्थं गतः ।

राजा । भवतु तामेव द्रक्ष्यामि । सा खलु विदितभक्तिं मां महर्षये निवेदयिष्यति ।

वैखा । साधयामस्तावदिति[3], सशिष्यो निष्क्रान्तः ।

राजा । सूत ! चोदयाश्वान् पुण्याश्रमदर्शनेनात्मानं पुनीमहे ।

सूतः । यदाज्ञापयत्यायुष्मान् । इति भूयो रथवेगं निरूपयति ।

राजा । समन्तादवलोक्य । सूत ! अकथितोऽपि ज्ञायत एवायमाभोगस्तपोवनस्य[4] ।

सूत । कथमिव ।

राजा । किं न पश्यति भवान् ? इह हि

नीवाराः शुककोटरार्भकमुखभ्रष्टास्तरूणामधः
प्रस्निग्धाः क्वचिदिङ्गुदीफलभिदः सूच्यन्त एवोपलाः ।
विश्वासोपगमादभिन्नगतयः शब्दं सहन्ते मृगा-
स्तोयाधारपथाश्च वल्कलशिखानिष्यन्दरेखाङ्किताः[5] ॥

---

(१) अपि प्रश्ने ।

(२) प्रतिकूलमिति । अस्याः शकुन्तलाया प्रतिकूलमनिष्टं दैवमभाग्यं शमयितुमपनाययितुमित्यर्थः ।

(३) साधयामः गच्छाम इत्यर्थः । प्रायेण ण्यन्तकः साधिर्गमेरर्थे प्रयुज्यत इति वचनात् ।

(४) आभोगः आसमन्ताद्भुज्यत इति आभोगः पूर्णतेत्यर्थः ।

(५) नीवारेति । शुकानां पक्षिविशेषाणां कोटराणि तेषु ये अर्भकाः शिशवः तेषां मुखानि तेभ्यः भ्रष्टा नीवाराः, क्वचिदिङ्गुदीनां वृक्षविशेषाणां फलानि भिन्दन्तीति भिदिर् विदारणे क्विप् । उपला अश्मानः सूच्यन्ते दृश्यन्ते वल्कलानां शिखाभ्यः निस्यन्दमानस्य जलस्य या रेखा ताभिरङ्किता तोयाधारपथाश्च जलाधारमार्गाश्च दृश्यन्ते विश्वासा-

अपि च

कुल्याम्भोभिः प्रवृतिचपलैः शाखिनो धौतमूला
भिन्नो रागः किसलयरुचामाज्यधूमोद्गमेन ।
एते चार्व्वागुपवनभुवि छिन्नदर्भाङ्कुरायां
नष्टाशङ्का हरिणशिशवो मन्दमन्दं चरन्ति[1] ॥

सूतः । सर्व्वमुपपन्नम् ।

राजा । स्तोकमन्तरं गत्वा । आश्रमोपरोधो माभूत्, तदिहैव रथं स्थापय यावदवतरामि ।

सूतः । धृताः प्रग्रहाः[2], अवतरत्वायुष्मान् ।

राजा । अवतीर्य्य चात्मानमवलोक्य च । सूत ! विनीतवेशेन[3] प्रवेष्टव्यानि तपोवनानि, तदिमानि तावद्गृह्यन्तामाभरणानि धनुश्चेति, सूतस्यार्पयति ।

सूतो गृह्णाति ।

राजा । यावदाश्रमवासिनः प्रत्यवेक्ष्य निवर्त्तिष्ये तावदार्द्रपृष्ठाः क्रियन्तां वाजिनः ।

सूतः । यथाज्ञापयत्यायुष्मान्, इति निष्क्रान्तः ।

राजा । परिक्रम्य अवलोक्य च । इदमाश्रमपदं यावत्

---

नाशुपगमात्शाप्तेरभिन्नगतयः स्वाभाविकगतिविशिष्टाः मृगाः शब्दं सहन्ते शब्दं श्रुत्वा व्याकुलाः सन्तः इतस्ततो न गच्छन्तीत्यर्थः ।

(१) कुल्येति । प्रवृत्या प्रसरणेन चपलानि चञ्चलानि तैः कुल्यानां कृत्रिमनदीनाम् । कुल्याल्पाकृत्रिमासरिदित्यमरः । अम्भोभिः जलैः धौतं मूलं येषान्ते शाखिनः वृक्षाः सन्तीति शेषः । आज्यानां हविषां धूमस्योद्गमेनोर्द्धगमनेन किसलयानां पल्लवानां रुचां कान्तीनां रागो भिन्नोऽस्तीत्यर्थः । छिन्नो दर्भाणां कुशानाम् अङ्कुरो यासान्तस्याम् अर्व्वाक् समीपे उपवनभुवि कृत्रिमवनपृथिव्यां हरिणशिशवो नष्टाशङ्काः शङ्कारहिताः सन्तः मन्दमन्दं चरन्ति शष्पाणि भक्षन्तीत्यर्थः । चरगतिभक्षणयोः । इदन्तपोवने एवं सम्भवन्तीति भावः ।

(२) प्रग्रहाः रश्मयइत्यर्थः ।

(३) विनीतवेशेनेति । शास्त्रेण वर्त्तनाद्गीति ,नामकमाश्वालङ्कारः ।

प्रविशामि । प्रविश्य दक्षिणेन[1] प्रवेष्टकेन निमित्तं सूचयित्वा । अये

शान्तमिदमाश्रमपदं, स्फुरति च बाहुः, कुतः फलमिहास्य ।
अथवा भवितव्यानां द्वाराणि भवन्ति सर्व्वत्र[2] ॥

नेपथ्ये । इदो इदो पिअसहीओ[3] ।

राजा । कर्णं दत्त्वा । अये दक्षिणेन[4] वृक्षवाटिकामालाप इव श्रूयते यावदत्र गच्छामि । परिक्रम्यावलोक्य च । अये एतास्तपस्विकन्यकाः स्वप्रमाणानुरूपैः सेचनघटैर्बालपादपेभ्यः[5] पयो दातुमित एवाभिवर्त्तन्ते । निरूप्य । अहो मधुरमासां दर्शनम् ।

शुद्धान्तदुर्लभमिदं वपुराश्रमवासिनो यदि जनस्य[6] ।

(१) दक्षिणेति । दक्षिणभुजेनेत्यर्थः । भुजबाहू प्रवेष्टो दोरित्यमरः । निमित्तं स्फुरणरूपम् । तच्च स्त्रीलाभसूचकम् । वामेतरभुजस्पन्दो वरस्त्रीलाभसूचक इत्युक्तेः ।

(२) शान्तमिति । इदमाश्रमपदम् आश्रमस्थानम् । पदं व्यवसितत्राणस्थानेत्यमरः । शान्तं चलत्वादिरहितम् । बाहुर्भुजः स्फुरति अस्य स्फुरणस्य फलं स्त्रीलाभरूपं कुतः कस्मात् शान्तेऽस्मिन्नाश्रमे हिंसादिजनाभावेन चलित्वादेरभावात् स्त्रीरूपं फलं कस्मादित्यर्थः । अथवा प्रचान्तरे भवितव्यानां वस्तूनां सर्वत्र सम्भव्यास्तत् द्वाराणि भवन्तीत्यर्थः । शकुन्तलाविवाहरूपस्य काव्यार्थस्य बाहुस्फुरणेनोत्पत्त्योपक्षेपकनामाङ्गम् । तथाचोक्तं काव्यार्थस्य समुत्पत्तिरुपक्षेप इति स्मृत इति ।

(३) इत इतः प्रियसख्यौ ।

(४) दक्षिणेनेति । एनबन्यतरस्यामित्येनप् । तदन्तस्य योगादेनपा द्वितीयेति वृक्षवाटिकामित्यत्र द्वितीया ।

(५) पयोदातुं जलदातुम् । सलिलं कमलं जलं पयः कीलालममृतमित्यमरः । इदं सर्वं काव्यार्थस्य बहुलीकरणात्परिकरनामाङ्गम् । समुत्पन्नार्थबाहुल्यं ज्ञेयः परिकरः पुनरित्युक्तेः ।

(६) शुद्धान्तेति । आश्रमवासिन आश्रमेवसन्ति तच्छीलाः जनस्य स्त्री-

दूरीकृताः खलु गुणैरुद्यानलता वनलताभिः ॥

यावदेतां छायामिमामाश्रित्य प्रतिपालयामीति, विलोकयन् स्थितः ।

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला ।

शकु । इदो इदो सहीओ[1] ।

एका । हला सउन्तले ! तत्तोवि तादकस्सवस्स अस्समरुक्खआ पिअदरा त्ति तक्केमि, जेण णोमालिआकुसुमपरिपेलवावि तुमं एदाणं आलवालपरिऊरणे णिउत्ता[2] ।

शकु । हला अणसूए ! ण केवलं तादस्स णिओओ ममावि एदेसु सहोअरसिणेहो[3] । इति वृक्षसेचनं नाटयति ।

द्वितीया । सहि सउन्तले ! उदअं लम्भिदा एदे गिम्हआलकुसुमदाइणो अस्समरुक्खआ । दाणिं अदिक्कन्तकुसुमसमये वि रुक्खके सिञ्चम्ह, तेण अणभिसन्धिगुरुओ धम्मो भविस्सदि[4] ।

---

जनस्य इदं वपुः शरीरं शुद्धान्तदुर्लभमन्तःपुराप्राप्यं यदि उद्यानानां राजकीयवनानां लता वल्ली वनलताभिः गुणैः सौन्दर्यादिभिः दूरीकृता, खल्विति निश्चये । काव्यार्थस्य निष्पन्त्या परितो न्यसनात्परिन्यासनामाङ्गम् । तन्निष्पत्तिः परिन्यास इति दर्पणः ।

(१) इत इतः सख्यौ ।

(२) अयि शकुन्तले त्वत्तोऽपि तातकण्वस्याश्रमवृक्षाः प्रियतरा इति तर्कयामि येन नवमालिकाकुसुमपरिपेलवापि त्वम् एतेषामालवालपरिपूरणे नियुक्ता । पेलवा मृदुलेत्यर्थः ।

(३) अयि अनसूये न केवलं तातस्य नियोगो ममापि एतेषु सहोदरस्नेहः ।

(४) सखि शकुन्तले उदकं लम्भिता एते ग्रीष्मकालकुसुमदायिन आश्रमवृक्षाः । इदानीमतिक्रान्तकुसुमसमयानपि वृक्षान् सिञ्चामः तेन अनभिसन्धिगुरुको धर्मो भविष्यति ।

शकु। हला पिअम्वदे! रमणिज्जं मन्तेसि[1]। इति भूयो वृक्षसेचनं नाटयति।

राजा। निर्वर्ण्य आत्मगतम्[2]। कथमियं सा कण्वदुहिता शकुन्तला। सविस्मयम्। अहो! असाधुदर्शी[3] खलु भवान् कण्वः। य इमामाश्रमधर्म्मे नियुङ्क्ते।

इदं किलाव्याजमनोहरं वपुस्तपःक्षमं साधयितुं य इच्छति।
ध्रुवं स नीलोत्पलपत्रधारया शमीलतां छेत्तुमृषिर्व्यवस्यति[4]॥

भवतु। पादपान्तरित एव विश्रब्धां तावदेतां पश्यामि, इति तथा करोति।

शकु। हला अणसूए! अदिपिणद्धेण वक्कलेण पियम्वदाए दढ़ं पीडिदाह्मि, ता सिढ़िलेहि दाव णं[5]।

अन। तह(६) इति शिथिलयति।

प्रियं। सहासम्। एत्थ दाव पओहरवित्थारइत्तुअं

---

(१) अयि प्रियंवदे रमणीयं मन्त्रयसि।

(२) आत्मगतमिति। अश्राव्यं खलु यद्वस्तु तदिह स्वगतमिति दर्पणः। एवं सर्वत्र।

(३) असाधुदर्शीति। शकुन्तलाया आश्रमधर्मनियोगकरणमेवासाधुदर्शित्वम्।

(४) इदमिति। य ऋषिः अव्याजेन अकपटेनेत्यर्थः। मनोहरं सुन्दरमिदं वपुः शरीरं तपःक्षमं तपसः तपस्यायाः क्षमं खेदं साधयितुं कर्तुमिच्छति इच्छां करोतीत्यर्थः। सो नीलञ्च तत् उत्पलं तेषां पत्राणि पत्राग्राणि तेषां धारयाऽग्रभागेन शमीलतां शमीनामकवृक्षलतां छेत्तुं द्वैधीकर्त्तुं, छिदिर्द्वैधीकरणे तुमुन्, व्यवस्यति व्यवसायं करोतीत्यर्थः। अयं साहश्यादद्भुतार्थकल्पनया ऽभिप्रायः। तपःक्षममिति वा पाठान्तरम्।

(५) अयि अनसूये अतिपिनद्धेन वल्कलेन प्रियंवदया दढं पीडितास्मि तच्छिथिलय तावदेनम्।

(६) तथा

अत्तणो जोव्वणारम्भं उवालहस्स, मं किं उवाल-हसि[1] ।

राजा । सम्यगियमाह ।

इदमुपहितसूक्ष्मग्रन्थिना स्कन्धदेशे
स्तनयुगपरिणाहाच्छादिना वल्कलेन ।
वपुरभिनवमस्याः पुष्यति स्वां न शोभां
कुसुममिव पिनद्धं पाण्डुपत्रोदरेण[2] ॥

अथवा । काममननुरूपमप्यस्या वपुषो वल्कलं न पुन-रलङ्कारश्रियं न पुष्यति । कुतः

सरसिजमनुविद्धं शैवलेनापि रम्यं,
मलिनमपि हिमांशोर्लक्ष्म लक्ष्मीं तनोति ।
इयमधिकमनोज्ञा वल्कलेनापि तन्वी
किमिव हि मधुराणां मण्डनं नाकृतीनाम्[3] ॥

(१) अत्र तावत्पयोधरविस्तारहेतुकमात्मनो यौवनारम्भम् उपालभस्व मां किमुपालभसे ।

(२) इदमिति । स्तनयोः कुचयोर्युगं युग्मं तस्य परिणाहो विशालता । परिणाहो विशालतेत्यमरः । तमाच्छादयति तेन । स्कन्धदेशे उपहितः न्यस्तः सूक्ष्मग्रन्थिर्यस्य तेन वल्कलेन, अभिनवं सुन्दरम् अस्याः शकुन्तलायाः वपुः शरीरं पाण्डूनि च तानि पत्राणि पलाशानि तेषामुदरेण गर्भेण पिनद्धं वेष्टितं कुसुम-मिव स्वां स्वकीयां शोभां न पुष्यति अपितु पुष्यत्येवेति काकुः । पुषपुष्टौ लट् दिवादित्वात् श्यन् ।

(३) सरसिजमिति । अनुविद्धं खचितं सरसिजं कमलं सरसि-जातइत्यर्थे जनेर्डः संज्ञायामिति डप्रत्यये तत्पुरुषेकृतीति ङेरलुक् । शैवलेन जलनील्या । जलनीली तु शैवालं शैवल इत्यमरः । रम्यं रमणीयं भवतीत्यर्थः । मलिनमपि हिमांशोश्चन्द्रस्य लक्ष्म चिह्नं कलङ्कइत्यर्थः, लक्ष्मीं सौभाग्यन्तनोति विस्तारयति । वल्कलेनापि । वल्कं वल्कलमस्त्रियामित्यमरः । इयं तन्वी कृशशरीरा शकुन्तलेति

अपिच

कठिनमपि मृगाक्ष्या वल्कलं कान्तरूपं
न मनसि रुचिभङ्गं स्वल्पमप्यादधाति ।
विकचसरसिजायाः स्तोकनिर्म्मुक्तकण्ठं
निजमिव कमलिन्याः कर्कशं वृन्तजालम्[१] ॥

शकु । (पुरतोऽवलोक्य ।) रत्तौओ एस वादेरिदपल्लवाङ्गुलीहिं किम्पि आअरेदि विअ मं चूअरुक्खओ. जाव णं सम्भावेमि[२] । (इति तथा करोति ।)

प्रियं । हला सउन्तले ! इध ज्जेव मुहुत्तअं चिट्ठ[३] ।

शकु । किंणिमित्तं[४] ?

यावत् । अधिकमनोज्ञा सौन्दर्यातिशयवती हि यस्मात् मधुराणामाकृतीनां सुन्दरस्वरूपाणामित्यर्थः, मण्डनं प्रसाधनं किमिव न अपितु सर्व्वमेव भवतीत्यर्थः ।

(१) कठिनमपीति । मृगाक्ष्या मृगस्येवाक्षिणी यस्या स्तस्याः । बहुव्रीहौ सक्थ्यक्ष्णोरिति षचि षित्वान्ङीष् । शकुन्तलायाः कठिनस्पर्शमपि कान्तरूपं सुन्दररूपं वल्कलं मनसि चित्ते । चित्तं तु चेतो हृदयं स्वान्तं हृन्मानसं मन इत्यमरः । स्वल्पमपि स्तोकमपि रुचेः प्रीतेः भङ्गं नादधाति न करोति इत्यर्थः । विकचसरसिजायाः विकचः सरसिजो यस्यास्तस्याः विकचपद्माया इत्यर्थः । विकचपद्मिन्या इत्यर्थस्तु न सम्यक् । कमलिनीपदवैयर्थ्यापत्तेः । कमलिन्याः पद्मिन्याः । स्तोकं निर्मुक्तः कण्ठो येन तत् । कर्कशं कठोरं निजं स्वकीयं वृन्तजालमित्यर्थः । अनेन शकुन्तलाया गुणाख्यानमाहित्तोभवामाङ्गम् ।

(२) रक्तौ एष वातेरितपल्लवाङ्गुलिभिः किमपि आह्वयतीव मां चूतवृक्षः यावदेनं सम्भावयामि ।

(३) अयि शकुन्तले इत एव मुहूर्त्तकं तिष्ठ ।

(४) किन्निमित्तम् ।

प्रियं । तए समीवट्ठिदाए लदासणाहो विअ अअं चूअ-
रुक्खओ पडिहादि[1] ।

शकु । अदो क्खु तुमं पिअंवदत्ति भणीअसि[2] ।

राजा । अवितथमाह प्रियंवदा । तथाह्यस्याः

अधरः किसलयरागः, कोमलविटपानुकारिणौ बाहू ।
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्[3]॥

अन । हला सउन्तले ! इअं सअंवरवहू सहआरस्स तुए किदणामहेआ वणदोसिणी त्ति णोमालिआ, णं विसुमरिदासि[4] ?

शकु । तदो अत्ताणं पि विसुमरिस्सं[5] । लतामुपेत्य अवलोक्य च । हला रमणीओ क्खु कालो इमस्स पादवमिहुणस्स वदिअरो संवुत्तो, जेण इअं णवकुसुमजोव्वणा णोमालिआ, अअं पि बद्धफलदाए उवभोअक्खमो सहआरो[6] । इति पश्यन्ती तिष्ठति ।

(१) त्वया समीपस्थितया लतासनाथ इव अयं चूतवृक्षः प्रतिभाति । चूतवृक्षः आम्रवृक्षः । आम्रश्चूतो रसालोऽसावित्यमरः ।

(२) अत एव त्वं प्रियंवदेति भण्यते ।

(३) अधर इति । अधर ओष्ठः किशलयरागः पल्लववद्रक्तोऽस्तीत्यर्थः । बाहू हस्तौ कोमललतासदृशौ अङ्गेषु अवयवेषु । अङ्गं प्रतीकोऽवयव इत्यमरः । कुसुममिव पुष्पमिव लोभनीयं यौवनं वयोविशेषं सन्नद्धं लग्नमस्तीत्यर्थः । लतासादृश्यात्सनाथत्वं युक्तमेवेति भावः । अयमर्थोऽनुरूपाधरादिपदानां सम्बन्धात्मदोऽन्वयः ।

(४) अयि शकुन्तले इयं स्वयम्बरवधूः सहकारस्य त्वया कृतनामधेया वनतोषिणीति नवमालिकामेनां विस्मृतासि । वणजोसिणित्ति च पाठान्तरम् । वनज्योत्स्नेति सं० ।

(५) तदाऽऽत्मानमपि विस्मरिष्यामि । अतिसन्निहितया न विस्मरिष्यामि इत्यर्थः ।

(६) अयि रमणीयः खलु कालोऽस्य पादपमिथुनस्य रतिकरः

प्रियं । सस्मितम् । अणसूए ! जाणासि किं णिमित्तं सउन्तला वणदोसिणीं अदिमेत्तं पेक्खदि ? त्ति[१] ।

अन । ण क्खु विभावेमि, ता कधेहि मे[२] ।

प्रियं । जह वणदोसिणी अणुरूवेण पादवेण सङ्गदा, तह अहं पि अत्तणो अणुरूवं वरं लहेअं त्ति[३] ।

शकु । एस दे अत्तणो चित्तगदो मणोरहो[४] ।

इति कलशमावर्जयति ।

अन । हला सउन्तले ! इअं तादकस्सेण तुमं विअ सहत्थेण संवड्ढिदा माहवीलदा, ता कधं इमं विसुमरिदासि[५] ?

शकु । तदो अत्ताणं पि विस्समरिस्सं[६] । लतामुपेत्य अवलोक्य च सहर्षम् । अच्चरीअं अच्चरीअं । पिअंवदे । पिअं दे णिवेदेमि[७] ।

---

संवृत्तः येनेयन्नवकुसुमयौवना नवमालिकाऽयमपि बद्धफलतयोपभोगक्षमः सहकारः । रमणीए क्खु काले इमस्स लतापाअवमिहुणस्स वइअरो संवुत्तो । णवकुसुमजोव्वणा वणजोसिणी बद्ध-पल्लवदाए उवभोअक्खमो इति पाठान्तरे तु, रमणीये खलु काले एतस्य लतापादपमिथुनस्य व्यतिकर (सम्पर्कः) संवृत्त नवकुसुमयौवना वनज्योत्स्ना बद्धपल्लवतयोपकारक्षमः इति सं० ।

(१) अनसूये ! जानासि किंनिमित्तं शकुन्तला वनतोषिणीमतिमात्रं प्रेक्षते इति ।

(२) न खलु विभावयामि, तत् कथय मे ।

(३) यथा वनतोषिणी अनुरूपेण पादपेन सङ्गता, तथा अहमपि आत्मनोऽनुरूपं वरं लभेय इति ।

(४) एष ते आत्मनश्चित्तगतो मनोरथः ।

(५) अयि शकुन्तले इयं तातकण्वेन त्वमिव स्वहस्तेन संवर्द्धिता माधवीलता, तत् कथमिमां विस्मृतासि ।

(६) तदा आत्मानमपि विस्मरिष्यामि ।

(७) आश्चर्यम् आश्चर्यम् । प्रियम्वदे प्रियं ते निवेदयामि ।

प्रियं । सहि ! किं मे पिअं[1] ?

शकु । असमए क्खु एसा आमूलादो मुउलिदा माह-
वीलदा[2]।

उभे । सत्वरमुपगम्य । सहि सच्चं सच्चं[3]?

शकु । सच्चं किं ण पेक्खध[4] ?

प्रियं । सहर्षं निरूप्य । सहि ! तेण हि पडिप्पिअं
दे णिवेदेमि[5] ।

शकु । किं मे पडिप्पिअं[6] ?

प्रियं । आसण्णपाणिग्गहणासि तुमं[7] ।

शकु । सासूयमिव । एस दे अत्तणो चित्तगदो मणो-
रहो, ता ण दे वअणं सुणिस्सम्[8]।

प्रियं । सहि ! ण क्खु परिहासेण भणामि, सुदं मए
तादकस्सस्स मुहादो तुह कल्लाणसूअअं एदं णिमित्तं
त्ति[9] ।

अन । हला पियम्वदे ! अदो ज्जेव्व सणिणेहा सच-
न्तला माहवीलदं सिञ्चदि[1]।

(१) सखि कि मे प्रियम् ?

(२) असमये खलु एषा आमूलात्मुकुलिता माधवीलता।

(३) सखि सत्यं सत्यम् ?

(४) सत्यं किं न प्रेक्षध्वे ?

(५) सखि तेन हि प्रतिप्रियं ते निवेदयामि।

(६) किं मे प्रतिप्रियम् ?

(७) आसन्नपाणिग्रहणासि त्वम्।

(८) एष ते आत्मनश्चित्तगतो मनोरथः, तत् न ते वचनं श्रोष्यामि।

(९) सखि न खलु परिहासेन भणामि, श्रुतं मया तातकण्वस्य मुखात् तव कल्याणसूचकमिदं निमित्तमिति ।

(१) अयि प्रियम्वदे ! अतएव सस्नेहा शकुन्तला माधवीलतां सिञ्चति।

शकु । जदो बहिणो मे भोदि तदो किं त्ति ण सिञ्चेमि[1] । इति कलसमावर्जयति ।

राजा । अपि नाम कुलपतेरियमसवर्णक्षेत्रसम्भवा[2] भवेत् ? अथवा कृतं सन्देहेन

असंशयं क्षत्रपरिग्रहक्षमा, यदार्य्यमस्यामभिलाषि मे मनः ।
सतां हि सन्देहपदेषु वस्तुषु प्रमाणमन्तःकरणप्रवृत्तयः[3] ॥

तथापि तत्त्वत एवैनामुपलप्स्ये ।

शकु । ससम्भ्रमम् । अम्मो सलिलसेअसम्भमुग्गदो णोमालिअं उज्झिअ अअणं मे महुअरो अहिवट्टदि[4] ।

इति भ्रमरबाधां नाटयति ।

राजा । सस्पृहं विलोक्य । साधु बाधनमपि रमणीयमस्याः ।

यतो यतः षट्चरणोऽभिवर्त्तते
ततस्ततः प्रेरितवामलोचना ।
विवर्त्तितभ्रूरियमद्य शिक्षते
भयादकामापि हि दृष्टिविभ्रमम्[5] ॥

(१) यतो भगिनी मे भवति ततः किमिति न सिञ्चामि ।

(२) कुलपतेः काश्यपस्येयं शकुन्तला असवर्णक्षेत्रसम्भवा क्षत्रियादिकन्यायामुत्पन्नेत्यर्थः ।

(३) असंशयमिति । मे मम मनोहृदयं यदस्यां शकुन्तलायाम् अभिलाषि तत्तस्मादसंशयं क्षत्रस्य क्षत्रियस्य परिग्रहे आलिङ्गने क्षमा । हि यस्मात्कारणात् सन्देहानां संशयानां पदेषु स्थानेषु सतां शिष्टानाम् अन्तःकरणप्रवृत्तयः अन्तःकरणव्यापाराः प्रमाणं भवन्तीत्यर्थः ।

(४) अहो सलिलसेकसंभ्रमोद्गतो नवमालिकाम् उज्झित्वा (त्यक्त्वा) वदनं मे मधुकरोऽभिवर्त्तते (धावति) । अत्राम्मशब्दो दुःखे विस्मये दुःखे अम्म इति भरतात् ।

(५) यत इति । षट् चरणानि पदानि यस्य सो भ्रमरः यतो यतः यस्मिन्यस्मिन्देशे सार्वविभक्तिकस्तसिः आभीक्ष्ण्ये द्विरुक्तिः । अभिवर्त्तते धावति, ततस्ततः तस्मिंस्तस्मिन्देशे प्रेरितं वामलोचनं यया ।

अपि च, साद्भुतमिव ।

चलापाङ्गां दृष्टिं स्पृशसि बहुशो वेपथुमतीं,
रहस्याख्यायीव स्वनसि मृदु कर्णान्तिकचरः ।
करं व्याधुन्वत्याः पिबसि रतिसर्वस्वमधरं,
वयं तत्त्वान्वेषान्मधुकर ! हतास्त्वं खलु कृती[1] ॥

अपि च

लोलां दृष्टिमितस्ततो वितनुते सभ्रूलताविभ्रमां,
साभुग्नेन विवर्त्तिता वलिमता मध्येन मन्दस्तनी ।
हस्ताग्रं विधुनोति पल्लवनिभं, शीत्कारभिन्नाधरा,
जातेयं भ्रमराभिलङ्घनभिया वाद्यैर्विना नर्त्तकी[2] ॥

विवर्त्तिता भ्रूर्यया इयं शकुन्तला भयाद्भीत्या। भीतिर्भीः साध्वसं भयमित्यमरः। अद्य अकामाऽपि अनिच्छन्त्यपि दृष्टेनैतस्य विभ्रमं विलासं शिक्षत इत्यर्थः।

(१) चलेति। हे मधुकर भ्रमरः बहुशः वेपथुमतीं, टुवेपृ कम्पने इत्यस्माद्ट्वितोऽथुजित्यनेनाऽथुच् ततस्तदन्तान्मतुप् उगितश्चेति ङीप्। कम्पयुक्तामित्यर्थः। चलानि चञ्चलानि अपाङ्गानि नेत्रान्तभागानि यस्याः तां दृष्टिं त्वं स्पृशसि स्पर्शं करोषीत्यर्थः। कर्णयोरन्तिकौ समीपौ तयोः चरतीति चरेष्ट इति अधिकरणे उपपदे टप्रत्ययः। एतादृशः सन् रहस्यं गोप्यम् आख्यायति कथयति इव मृदु कोमलं स्वनसि शब्दं करोषि, करं व्याधुन्वन्त्या भ्रामयन्त्या शकुन्तलाया इत्यर्थः। रतेः सर्वस्वभूतम् अधरम् ओष्ठं पिबसि पानं करोति। तत्त्वस्य परिणयाऽपरिणययोग्यस्य अन्वेषान्मार्गणात् वयं हताः मृताः त्वं कृती कुशलः। कृती कुशल इत्यपीत्यमरः। खल्विति निश्चये।

(२) लोलामिति। भ्रूलतायाः विभ्रमो विलासस्तेन सहितां लोलाञ्चलां दृष्टिमितस्ततो यस्मिंस्तस्मिन्देशे वितनुते विस्तारं करोतीत्यर्थः। मन्दौ सुन्दरौ स्तनौ कुचौ यस्याः सा शकुन्तला इत्यर्थः। वलिमता त्रिवलिमता आभुग्नेन नम्रेण मध्येन मध्यभागेन विवर्त्तिता भ्रामितेत्यर्थः। पल्लवनिभं हस्ताग्रं करापभागं

शकु। हला! परित्ताअध परित्ताअध मं दुम्मिणा दुट्ठमहुअरेण अहिहूअमाणं[1]।

उभे। सस्मितम्। का अह्मो परित्ताणे, एत्थ दाव दुस्सन्तं अक्कन्द, जदो राअरक्खिदाइं तवोवणाइं[2]।

राजा। अवसरः खल्वयमस्माकमात्मानं दर्शयितुम्। न भेतव्यम्, इत्यर्द्धोक्ते स्वगतम्। एवं हि राजाहमस्मीति परिज्ञानं भविष्यति, भवतु अतिथिसमाचारमेवावलम्बिष्ये।

शकु। ण एसो दुव्विणीदो विरमदि, ता अस्सदो गमिस्सं। पदान्तरे सदृष्टिक्षेपम्। हद्धी! हद्धी! कधं इदो वि मं अणुसरदि, ता परित्ताअध मं[3]।

राजा। सत्वरमुपगम्य। आः

कः पौरवे वसुमतीं शासति शासितरि दुर्विनीतानाम्।
अयमाचरत्यविनयं मुग्धासु तपस्विकन्यकासु[4]॥

---

विधुनोति कम्पयति। शीत्कारेणाभिन्नोऽधरो यस्याः। भ्रमराणां योऽभिलङ्घनः परिभवः तस्य भिया भयेन वाद्यैर्विना इयं शकुन्तला नर्त्तकी जातेत्यर्थः।

(१) अयि परित्रायध्वं परित्रायध्वं मामनेन दुष्टमधुकरेण अभिभूयमानाम्।

(२) का वयं परित्राणे अत्र तावद्दुष्मन्तमाक्रन्द यतो राजरक्षितानि तपोवनानि।

(३) न एष दुर्विनीतो विरमति, तदन्यतो गमिष्यामि। हा धिक् हा धिक् कथमितोऽपि मामनुसरति तत्परित्रायध्वं माम्। कधं इदो विमं अनुसरदि इत्येव क्वचित्पाठः।

(४) क इति। दुर्विनीतानां दुष्टानां शासितरि शिक्षके पौरवे पुरोरपत्ये वसुमतीं पृथ्वीं शासति पालयति सति, अयं भ्रमरो मुग्धासुन्दरीषु। मुग्धस्तु सुन्दरे मूढे इति कोषः। तपस्विकन्यासु तपस्विनः कण्वस्य कन्यकासु शकुन्तलासु अविनयम् आचरतीत्यर्थः।

सख्यौ राजानं दृष्ट्वा किञ्चिदिव सम्भ्रान्तः।

सख्यौ। अज्ज! ण किम्पि अच्चाहिदं, किन्तु खु इयं पिअसही दुट्ठमहुअरेण आउलीकिअमाणा कादरीभूदा[1]।

इति शकुन्तलां दर्शयतः।

राजा। शकुन्तलामुपेत्य। अयि! तपो वर्द्धते[2]?

शकु। ससाध्वसावनतमुखी (३) तिष्ठति।

अन। दाणिं अदिधिविसेसलाहेण[4]।

प्रियं। साअदं अज्जस्स? हला सउन्तले! गच्छ, उडआदो फलमिस्सं अग्घभाअणं उवहर, इदम्पि पादोदअं भविस्सदि[5]। इति घटं दर्शयति।

राजा। भवतीनां सूनृतयैव वाचा कृतमातिथ्यम्।

अन। इमस्सिं दाव पच्छाअसीदलाए सत्तवण्णवेदिआए उवविसिअ अज्जो परिस्समं अवणेदु[6]।

राजा। नूनं यूयमप्यनेन धर्म्मकर्म्मणा परिश्रान्ताः, तन्मुहूर्त्तमुपविशत।

---

(१) आर्य न किमप्यत्याहितं किन्तु खलु इयं प्रियसखि दुष्टमधुकरेणाऽऽकुलीक्रियमाणा कातरीभूता।

(२) तपोवर्द्धत इति। अयं प्रश्रयेणानुवृत्त्या अनुवर्त्तनसामनाटकाऽलङ्कारः।

(३) ससाध्वसेति। भीतिर्भीः साध्वसं भयमित्यमरः। ससाध्वसाऽवचना तिष्ठतीत्येव क्वचित्पाठः।

(४) इदानीमतिथिविशेषलाभेन।

(५) स्वागतमार्यस्य? अयि शकुन्तले गच्छ, उटजात् (पर्णशालायाः) फलमिश्रमर्घ्यभाजनमुपहर, इदमपि पादोदकं भविष्यति।

(६) अस्यान्तावत् प्रच्छायशीतलायां सप्तपर्णवेदिकायामुपविश्याऽऽर्यः परिश्रममपनयतु। परिश्रमविनोदं करेदु अज्जो इत्यपि पाठान्तरम्। परिश्रमविनोदं करोतु आर्यः॥

प्रियं। जनान्तिकम्[1]। हला सउन्तले! उइदं णो अदिधिपज्जुबासणं, ता एहि उवविसम्ह[2]। इति सर्व्वा उपविशन्ति।

शकु। आत्मगतम्। कधं इमं जणं पेक्खिअ तवोवणविरोहिणो विआरस्स गमणीयाम्हि संवुत्ता[3]?

राजा। सर्व्वा अवलोक्य। अहो समानवयोरूपरमणीयं सौहार्द्दमत्रभवतीनाम्।

प्रियं। जनान्तिकम्। हला अणसूए! को णु क्खु एसो दुरवगाहगम्भीराकिदी मधुरं आलवन्तो पहुत्तदाक्खिणं वित्थारेदि[4]?

अन। हला! ममावि अत्थि कोदूहलं, ता पुच्छिस्सं दाव णं। प्रकाशम्। अज्जस्स महुरालावजणिदो वीसम्भो मं आलावेदि, कदमो राएसिवंसो अलङ्करीअदि अज्जेण, कदमो वा देसो विरहपज्जुस्सुअजणो करीअदि, किंणिमित्तं वा अज्जेण सुउमारेण तवोवणागमणपरिस्समे अप्पा उवणीदो? त्ति[5]।

---

(१) जनान्तिकमिति। यस्य न श्राव्य तस्यान्तरे वक्रानामिकत्रिपताकालक्षणं कृत्वा यदन्योन्यामन्त्रणन्तज्जनान्तिकम्। त्रिपताककरेणान्यानपवार्य्यान्तरा कथाम्। अन्योन्यामन्त्रणं यत्स्याज्जनान्ते स्याज्जनान्तिकमिति दशरूपकात्। एवं सर्व्वत्र।

(२) अयि शकुन्तले उचितं नोऽतिथिपर्य्युपासनं तदेहि उपविशाम.।

(३) कथमिमं जनं प्रेक्ष्य तपोवनविरोधिनो विकारस्य गमनीयास्मि संवृता।

(४) अयि अनसूये को नु खल्वेष दुरवगाहगम्भीराकृतिमधुरमालपन् प्रभुत्वदाक्षिण्यं विस्तारयति।

(५) अयि ममाप्यस्ति कौतूहलम् (आश्चर्य्यम्) तत् प्रक्ष्यामि तावदेनम्। आर्य्यस्य मधुरालापजनितो विश्रम्भो (विश्वासः) मामालापयति, कतमो राजर्षिवंशोऽलंक्रियत आर्य्येण, कतमो वा देशो

शकु। हिअअ! मा उत्तम्म, जं तुए चिन्तिदं तं अणसूआ मन्तेदि[1]।

राजा। स्वगतम्। कथमिदानीमात्मानं निवेदयामि, कथं वात्मनः परिहारं करोमि, भवत्वेवं तावत्[2]। प्रकाशम्। भवति! वेदविदस्मि, राज्ञः पौरवस्य नगरधर्म्माधिकारे नियुक्तः, पुण्याश्रमदर्शनप्रसङ्गेन धर्म्मारण्यमिदमायातः।

अन। अज्ज सणाधा धम्मआरिणो[3]।

शकु। शृङ्गारलज्जां नाटयति।

सख्यौ। उभयोराकारं विदित्वा। हला सउन्तले! जइ अज्ज तादो इध सन्निहिदो भवे[4]।

शकु। सरोषम्। तदो किं भवे[5]?

सख्यौ। तदो जीविदसव्वस्सेणावि इमं अदिधिविसेसं कदत्थं करेदि[6]।

शकु। सकृतककोपम्। अवेध तुह्मे किम्पि हिअए कदुए मन्तेध, ण वो वअणं सुणिस्सम्[7]।

---

विरहपर्य्युत्सुकः क्रियते, किन्निमित्तं वा आर्य्येण सुकुमारेण तपोवनगमनपरिश्रमे आत्मोपनीयत इति।

(१) हृदय मा उत्ताम्य यत्त्वया चिन्तितं तदनसूया मन्त्रयति।

(२) प्रकाशमित्यादि। सर्वश्राव्यं प्रकाशं स्यादिति रूपकम्। अनेन शकुन्तलासमागमहेतोर्वीजस्य वनागमनस्य पुनरुपादानात् समाधानं नामाङ्गम्। वीजागमः समाधानमित्युक्तेः।

(३) अद्य सनाथा धर्म्मचारिणः।

(४) अयि शकुन्तले यद्यद्य तात इह सन्निहितो भवेत्।

(५) तदा किं भवेत्?

(६) तदा जीवितसर्व्वस्वेनापि इममतिथिविशेषं कृतार्थं कुर्य्यात्।

(७) अपेत यूयं, किमपि हृदये कृत्वा मन्त्रयध्वे, न वो वचनं श्रोष्यामि।

राजा । वयमपि भवत्योः सखीगतं किञ्चित् पृच्छामः ।

सख्यौ । अज्ज । अणुग्गहेवि अब्भत्थणा ?[१]

राजा । तत्रभवान् कण्वः शाश्वते[२] ब्रह्मणि वर्त्तते, इयञ्च वः सखी तस्यात्मजा; कथमेतत् ? ।

अन । सुणादु अज्जो, अत्थि कोसिओ त्ति गोत्तणामहेओ महाप्पहावो राएसी[३]।

राजा । स खलु भगवान् कौशिकः ।

अन । तं सहीए पहवं अवगच्छ, उज्झिदाए सरीरसंवड्ढणादिहिं उण तादकस्सो वि एदाए पिदा[४]।

राजा । उज्झितशब्देन जनितं नः कुतूहलं, तदामूलाच्छ्रोतुमिच्छामि ।

अन । सुणादु अज्जो, पुरा किल तस्स राएसिणो उग्गे तवसि वत्तमाणस्स कधम्पि जादसङ्केहिं देवेहिं मेणआ णाम अच्छरा णिअमविग्घआरिणी पेसिदा[५]।

राजा । अस्त्येवान्यसमाधि[६]भीरुत्वं देवानां, ततस्ततः ।

(१) आर्य्य ! अनुग्रहेऽप्यभ्यर्थना ?

(२) शाश्वते इति । नैष्ठिकब्रह्मचर्य्ये कण्वो वर्त्तते वो युष्माकं सखी तस्य कण्वस्य आत्मजा पुत्री एतत्कथमित्यर्थः । इदं परिभावनानामाङ्गम् । कुतूहलोत्तरावाचः प्रोक्ता तु परिभावनेत्युक्तेः ।

(३) छायोत्वार्यः अस्ति कौशिकेति नामधेयो महाप्रभावो राजर्षिः ।

(४) तं सख्याः प्रथमभवगच्छोज्झितायाः शरीरसंवर्द्धनादिभिः पुनः तातकण्वोऽप्येतस्याः पिता ।

(५) छायोत्वार्थः, पुरा किल तस्य राजर्षेरुग्रे तपसि वर्त्तमानस्य कथमपि जातशङ्कैर्देवैर्मेनका नामाप्सरा नियमविघ्नकारिणी प्रेषिता ।

(६) अस्तीति । देवानामिन्द्रादीनामन्येषां समाधिस्तपसि चित्तैकाग्रता तद्भीरुत्वमस्त्येवेत्यर्थः ।

अन । तदो वसन्तावदाररमणीए समए उम्मादहेतुअं ताए रूवं पेक्खिअ[1] इत्यर्द्धोक्तेन लज्जां नाटयति ।

राजा । पुरस्तादवगम्यत[2] एव, सर्व्वथा अप्सरःसम्भवैषा।

अन । अभ इं[3]

राजा । उपपद्यते ।

मानुषीभ्यः कथं नु स्यादस्य रूपस्य सम्भवः ।
न प्रभातरलं ज्योतिरुदेति वसुधातलात् ॥[4]

शकु । सव्रीड़ाधोमुखी तिष्ठति ।

राजा । आत्मगतम् । हन्त ! लब्धावकाशो मे मनोरथः।

प्रियं । सस्मितं शकुन्तलां विलोक्य । पुणोवि वत्तुकामो विअ अज्जो लक्खीअदि[5]।

शकु । सखीमङ्गुल्या तर्ज्जयति ।

राजा । सम्यगुपलक्षितं भवत्या, अस्ति नः सच्चरितश्रवणलोभादन्यदपि प्रष्टव्यम् ।

---

(१) ततो वसन्तावतारमणीये समये उन्मादहेतुकं तस्या रूपं प्रेक्ष्य । स्मरपरवशस्तस्याङ्गर्भमाधत्त तत इत्युत्प्रेक्षार्थकमर्द्धं लज्जयानोक्तम् ।

(२) पुरस्तादिति । एषा शकुन्तला सर्वथाऽप्सरोभ्यो मेनकायाः सम्भूतेत्यर्थः । इदं मुनिकन्याव्यपदेशगूढायाः शकुन्तलायाः तातकरवो वि पदाए पिता इत्यादिना अनसूयावचनेन कौशिकजत्वेनोद्भेदादुद्भेदनामाङ्गम् । उद्भेदो गूढभेदनमिति दशरूपकात् ।

(३) अथ किम् ।

(४) मानुषीभ्य इति । अस्य रूपस्य शकुन्तलास्वरूपस्य सम्भवः प्राप्तिः मानुषीभ्यः कथं स्यात् । एतादृशः स्वरूपो मनुष्यजातिषु न सम्भवतीत्यर्थः । वसुधातलात् पृथिव्याः प्रभया कान्त्या तरलं चञ्चलं भास्वरं वा । ज्योतिः सूर्यो नोदेति । ज्योतिर्हिमेशेति-विश्वकोषः ।

(५) पुनरपि वक्तुकाम इवार्य्यो लक्ष्यते ।

प्रियं । तेण हि अलं विआरिदेण अणिज्जसणाणजोओ क्खु तवस्सिजणो[1] ।

राजा । एतत् पृच्छामि ।

वैखानसं किमनया व्रतमाप्रदानाद्
व्यापाररोधि मदनस्य निषेवितव्यम्?
अत्यन्तमेव सदृशेक्षणवल्लभाभि-
राहो निवत्स्यति समं हरिणाङ्गनाभिः?[2]॥

प्रियं । अज्ज! धम्माअरणपरवसो एस जणो, गुरुणो उण से अणुरूअवरप्पदाणे संकप्पो[3] ।

राजा । सहर्षमात्मगतम् ।

भव हृदय साभिलाषं, संप्रति सन्देहनिर्णयो जातः ।
आशङ्कसे यदग्निं, तदिदं स्पर्शक्षमं रत्नम्[4]॥

---

(१) तेन हि अलं विचारितेन, अनियन्त्रणाऽनुयोगः खलु तपस्विजनः ।

(२) वैखानसमिति । अनया शकुन्तलया आप्रदानात्प्रदानं मर्य्यादीकृत्य । मदनस्य कामस्य । व्यापाररोधि व्यापारं रुणद्धीति साकाङ्क्षत्वात्समासः । विवाहानर्हमित्यर्थः । वैखानसं वैखानसस्येदं तस्येदमित्यण् । ब्रह्मचारिसम्बन्धि व्रतम् निषेवितव्यङ्कि व्रतमेवाक्रियते किमिति प्रश्नः । सदृशेक्षणेन तुल्यनेत्रेण वल्लभाभिः प्रियाभिः हरिणाङ्गनाभिः मृगीभिरत्यन्तमेव निरन्तरमेव निवत्स्यति आहो इति वितर्के ।

(३) आर्य धर्माऽऽचरणपरवश एष जनः गुरोः पुनरस्या अनुरूपवरप्रदाने संकल्पः ।

(४) भवेति । हे हृदय साभिलाषम् इच्छासहितं भव भूधातोर्लोट् । संप्रति इदानीम् । सन्देहनिर्णयः सन्देहप्रतिबन्धकीभूतनिर्णयो निश्चयो जातः यद्वा । सन्देहोऽस्मिन्निति सन्देहोर्शआद्यच् तस्य निश्चयो जातः इयम् कण्वकन्या किन्तु मेनकानामकाऽप्सरोऽस्य उत्पन्नेति निश्चय इत्यर्थः । यत् अग्निं आशङ्कसे शङ्काविषयङ्करोषीत्यर्थः । कण्वदुहितृ-

शकु । सरोषमिव । अणसूए अहं ! गमिस्सं[1] ।

अन । किं णिमित्तं[2]? ।

शकु । इमं असम्बद्धप्पलाविणीं पिअम्बदं अज्जाए गोदमीए गदुअ णिवेदइस्सं[3] इत्युत्तिष्ठति ।

अन । सहि! ण जुत्तं अस्समवासिणो जणस्स अकिदसक्कारम् अदिधिविसेसम् उज्झिअ सच्छन्ददो गमणम्[4] ।

शकु । उत्तरमदत्त्वैव प्रस्थिता ।

राजा । स्वगतम्[5] । कथमियं गच्छति । जिघृक्षुरिव पुनरिच्छां निगृह्य । अहो चेष्टानुरूपिणी कामिजनमनोवृत्तिः ।

अहं हि

अनुयास्यन् मुनितनयां सहसा विनयेन वारितप्रसरः ।
स्वस्थानादचलन्नपि गत्वेव पुनः प्रतिनिवृत्तः[6]॥

---

त्वादिति भावः । तदिदं रत्नं शकुन्तलारूपं स्पर्शक्षमं स्पर्शे क्षमं योग्यमित्यर्थः । इदं युक्तिनामकमङ्गम् । संप्रधारणमर्थानां युक्तिरिति दशरूपकात् ।

(१) अनसूये अहं गमिष्यामि । इदं भेदनामकमङ्गम् । भेदः संहतिभेदनमित्युक्तः ।

(२) किन्निमित्तम् ।

(३) इमामसम्बद्धप्रलापिनीं प्रियम्वदामार्य्यायै गौतम्यै गत्वा निवेदयिष्यामि ।

(४) सखि न युक्तम् आश्रमवासिनो जनस्याऽकृतसत्कारम् अतिथिविशेषमुज्झित्वा स्वच्छन्दतो गमनम् । अयं शिक्षाकरणादुपदेशनामकनाटकाऽलङ्कारः । शिक्षास्यादुपदेशनमिति दर्पणः ।

(५) स्वगतमिति । अश्राव्यं स्वगतं मतमिति दर्पणः ।

(६) अनुयास्यन्निति । सहसा तत्क्षणे विनयेन नम्रत्वेन वारितो रुद्धः प्रसरो गमनं यस्य सोऽहं मुनितनयां मुनेः कण्वस्य तनयामनु-

प्रियं। शकुन्तलामुपेत्य। हला चण्डि! ण अरिहसि गन्तुम्[1]।

शकु। परिवृत्य सभ्रूभङ्गम्। किं त्ति?[2]।

प्रियं। दुवे मे रुक्खसेअणके धारेसि, तेहिं दाव अत्ताणं मोआवेहि, तदो गमिस्ससि[3]। इति बलान्निवर्त्तयति।

राजा। भद्रे! वृक्षसेचनादेवात्रभवतीं परिश्रान्तां तर्कयामि। तथा ह्यस्याः

स्रस्तांसावतिमात्रलोहिततलौ बाहू घटोत्क्षेपणा-
दद्यापि स्तनवेपथुं जनयति श्वासः प्रमाणाधिकः।
बद्धं कर्णशिरीषरोधि वदने घर्म्माम्भसा जालकं,
बन्धे स्रंसिनि चैकहस्तयमिताः पर्य्याकुला मूर्द्धजाः[4]॥

तदहमेनामनृणां करोमि। इत्यङ्गुरीयकं ददाति।

सख्यौ प्रतिगृह्य नामाक्षराणि वाचयित्वा। परस्परमवलोकयतः।

कोऽपन्नां शकुन्तलामित्यर्थः अनुयास्यन् पश्चाद्यास्यन् सन् स्वस्थानाद-चलन्नितस्ततोऽगच्छन्नपि गत्वा पुनः प्रतिनिवृत्त आगत इव स्थितोऽस्मीत्यर्थः।

(१) अयि चण्डि नार्हसि गन्तुम्।

(२) किमिति।

(३) द्वे मे वृक्षसेचनके धारयसि ताभ्यां तावदात्मानं मोचय ततो गमिष्यसि।

(४) स्रस्तांसाविति। घटस्योर्द्ध्वप्रक्षेपणात् स्रस्तावधः पतितावंसौ स्कन्धौ ययोस्तौ अतिमात्रं अत्यन्तं लोहितौ रक्त तले ययोस्तौ बाहू भुजौ स्तः प्रमाणाऽधिकः स्वाभाविकप्रमाणरहितः आयामकरणा-दित्यर्थः श्वासः अद्यापीदानीमपि स्तनयोः कुचयोः वेपथुं कम्पं जन-यति। वदने आनने कर्णशिरीषरोधि श्रोत्रस्थशिरीषपुष्पावरणकर्त्तृ जालकं घर्माम्भसा स्वेदेन बद्धम् एकहस्तेन यमिता स्थापिताः मूर्द्धजाः केशाः पर्याकुलाः परितो व्याकुलास्सन्तीत्यर्थः।

राजा । अलमन्यथासम्भावनया, राज्ञः प्रतिग्रहोऽयमिति राजपुरुषं मामवगच्छथ ।

प्रियं । तेण हि णारिहदि एदम् अङ्गुरीअअं अङ्गुली विओअं अज्जस्स वअणादो ज्जेव अणिणा एसा भोदु[1] ।

अन । हला सउन्तले मोआविदासि अणुकम्पिणा अज्जेण अहवा राएसिणा, ता तु कहिं दाणिं गमिस्ससि[2]।

शकु । आत्मगतम् । ण एदं जणं परिहरिस्सं जइ अत्तणो पहविस्सं[3] ।

प्रियं । किं दाणीं ण गच्छीअदि?[4] ।

शकु । दाणीं किं तुह आअत्ताह्मि ! जदो मे रोअदि तदो गमिस्सं[5] ।

राजा । शकुन्तलां विलोकयन्नात्मगतम् । किं खलु यथा वयमस्यामियमपि अस्मान् प्रति तथा स्यात् ? अथवा लब्धावकाशा मे मनोवृत्तिः । कुतः

---

(१) तेन हि नार्हति इदमङ्गुलीयकं अङ्गुलीवियोगम् आर्यस्य वचनादेवाऽनृणेषा भवतु ।

(२) अयि शकुन्तले मोचितासि अनुकम्पिना आर्येण अथवा राजर्षिणा तत्कुत्रेदानीं गमिष्यसि । कह वा महाराएण गच्छदाणीमित्यपि पाठान्तरम् । अथवा महाराजेन गच्छेदानीमिति सं॰ ।

(३) नैतं जनं पर्य्यहरिष्यं यद्यात्मनः प्राभविष्यम् । जइ अत्तणो पहविस्सम् प्रकाशम् । का तुमं विसज्जितव्वस्स रुन्धिदव्वस्स वेति पाठान्तरम् । कात्वं विस्रष्टव्यस्य रोद्धव्यस्य वेति सं॰ ।

( ४ ) किमिदानीं न गम्यते ।

( ५ ) इदानीं किन्तवायत्तास्मि यदा मे रोचते तदागमिष्यामि ।

वाचं न मिश्रयति यद्यपि मद्वचोभिः,
कर्णं ददात्यवहिता मयि भाषमाणे ।
कामं न तिष्ठति मदाननसम्मुखीयं,
भूयिष्ठमन्यविषया न तु दृष्टिरस्याः[१]॥

नेपथ्ये । भो भोस्तपस्विनः ! तपोवनसन्निहितसत्त्वरक्षणाय सज्जीभवन्तु भवन्तः प्रत्यासन्नः किल मृगयाविहारी राजा दुष्यन्तः ।

तुरगखुरहतस्तथाहि रेणुर्विटपविषक्तजलार्द्रवल्कलेषु ।
पतति परिणतारुणप्रकाशः शलभसमूह इवाश्रमद्रुमेषु[२] ॥

राजा स्वगतम् । अहो ! धिक्, ममान्वेषिणः सैनिकास्तपोवनमभिरुन्धन्ति ।

पुनर्नेपथ्ये । भो भोस्तपस्विनः ! पर्य्याकुलयन् वृद्धस्त्रीकुमारानेष गजः प्राप्तः

तीव्राघातादभिमुखतरुस्कन्धलग्नैकदन्तः,
पादाकृष्टव्रततिवलयासङ्गसञ्जातपाशः ।

---

(१) वाचमिति । यद्यपि मद्वचोभिः सह वाचं वचनं न मिश्रयति । अवहिता प्रमादरहिता निश्चलीभूता सती यावत् भाषमाणे मयि कर्णं ददाति शृणोतीत्यर्थः । मदाननसम्मुखी ममसुखाभिमुखवर्त्तिनीयं शकुन्तला काममत्यन्तं न तिष्ठति अस्याः शकुन्तलायाः दृष्टिर्नयनं भूयिष्ठं बहुधाऽन्यविषया न मामेवोद्दिश्य पश्यतीत्यर्थः ।

(२) तुरगेति । तुरगाणामश्वानां ये खुराः तैर्हतः ताडितः । रेणुर्धूली । विटपेषु शाखाविस्तारेषु । विसक्तानि लग्नानि जलेनार्द्राणि शीतानि वल्कलानि येषु तेषु । आश्रमद्रुमेषु आश्रमवृक्षेषु । परिणतः प्राप्तः अरुणप्रकाशो रक्तातपो यस्य सः । शलभसमूह इव पतति विस्तारो विटपोऽस्त्रियामित्यमरः ।

(३) तीव्राघातादिति । तीव्राघातात् नितान्ताघातात् तीव्रैकान्तनितान्तानीत्यमरः । । अभिमुखस्य सम्मुखस्य तरोर्यः स्कन्धस्तस्मिन्

मूर्त्तो विघ्नस्तपस इव नो, भिन्नसारङ्गयूथो,
धर्म्मारण्यं विशति गजः स्यन्दनालोकभीतः ॥

सर्व्वाः श्रुत्वा ससम्भ्रममुत्तिष्ठन्ति ।

राजा । स्वगतम् । अहो । धिक्, कथमपराद्धस्तपस्विनामस्मि, भवतु प्रतिगच्छामि तावत् ।

सख्यौ । महाभाग! इमिणा हत्थिसम्भमेण पज्जाउलाह्म, अणुजाणीहि णो उडअगमणं[1] ।

अन । शकुन्तलां प्रति । हला सउन्तले ! पज्जाउला अज्जा गोदमी भविस्सदि, ता एहि सीग्घं एकत्था होम्ह[2] ।

शकु । गतिरोधं रूपयित्वा । हद्धी! हद्धी! ऊरुत्थम्भविब्भलाह्मि संवुत्ता[3] ।

राजा । स्वैरं स्वैरं[4] गच्छन्तु भवत्यः । आश्रमबाधा यथा न भवति तथाहमपि यतिष्ये ।

लग्न एकदन्तो यस्य । पादेनाकृष्टः व्रततीनां वल्लीनां यो वलयस्तस्य सङ्गेन सञ्जातः पाशो यस्य । भिन्नो विदारितः सारङ्गाणां पशूनां यूथः समूहो येन । स्यन्दनस्य रथस्य आलोको दर्शनं तेन भीतः । एतादृशो गजो हस्ती । नः अस्माकम् । तपसः तपस्यायाः । मूर्त्तः विघ्न इव । धर्मारण्यं विशति दुःखं ददातीत्यर्थः ।

(१) महाभाग अनेन हस्तिसंभ्रमेण पर्याकुलास्मः तदनुजानीहि न उटजगमने (उटजः पर्णशाला) अज्ज इमिणा अरण्णवुत्तन्तेनेत्यपि पाठः अनेन अरण्यवृत्तान्तेनेति सं० ।

(२) अयि अनसूये पर्याकुला आर्या गौतमी भविष्यति तदेहि शीघ्रमेकस्था भवामः ।

(३) हा धिक् हा धिक् ऊरुस्तम्भविह्वलास्मि संवृत्ता ।

(४) स्वैरमिति । इदं भेदनामकमङ्गम् आश्रमबाधां निराकरिष्यामीत्यनेन प्रोत्साहनात् । भेदः प्रोत्साहनामतेति धनञ्जयमते ।

# अभिज्ञानशाकुन्तलम् ।



## द्वितीयोऽङ्कः ।

ततः प्रविशति विदूषकः(१) ।

विदू[२]। निश्वस्य । भो हदोह्मि एदस्स मिअआसीलस्स रस्सो वअस्सभावेण णिव्विसो, अअं मिओ, अअं वराहो, अअं सद्दूलो त्ति मज्झन्दिणेवि गिह्मे विरलपा- दाअ- -वच्छाआसु वणराइसुं आहिण्डिअ पत्तसङ्करसा- अविरसाइं उसकडुआइं पिज्जन्ति गिरिणईसलिलाइं, अणिअदवेलञ्च उसोसमंसभुइट्ठं भुज्जीअदि. तुरअगआणाञ्च सद्देण रत्तिंपि मे णत्थि पकामम् दूदव्वं, महन्ते ज्जेव पच्चूसे दासीए पुत्तेहिं साउणि-

(१) विदूषकलक्षणम् । कुसुमवसन्ताद्यभिधः कर्म्मवपुर्वेशभाषाद्यैः । हास्यकरः कलहरतिर्विदूषकः स्यात्स्वकर्मज्ञः । आदिपदाद्वसन्तादिः ।

(२) अतः प्रतिमुखसन्धिः। पूर्वं व्यक्तस्य पुनर्नर्मसचिववचनेनालक्षितस्य दुष्यन्तोद्योगस्य पुनरुद्भेदात् । उक्तं च, लक्ष्याऽलक्ष्यस्य बीजस्य व्यक्तिः प्रतिमुखमतमिति विन्दुयत्नानुगुण्येनास्य सन्धेस्त्रयोदशाङ्गानि भवन्ति तेषु च परिसर्पप्रशमवज्रोपन्यासपुष्पाणां प्राधान्यम् । इतरेषां यथासम्भवं योग इति रूपककारः । विन्दुयत्नौ चाग्रे वक्ष्येते ।

(१) भो हतोस्मि एतस्य मृगयाशीलस्य राज्ञो वयस्यभावेन निर्व्विसः अयं मृगः अयं वराहः अयंशार्दूल इति मध्यदिनेऽपि ग्रीष्मे विरलपादपच्छायासु वनराजिषु आहिण्ड्य (गत्वा) पत्रसङ्करकषायविरसानि उष्णकटुकानि पीयन्ते गिरिनदीसलिलानि, अनियतवेलञ्च उष्णोष्णमांसभूयिष्टं भुज्यते तुरगगजानाञ्च शब्देन रात्रावपि मे नास्ति प्रकामशयितव्यं महत्येव प्रत्यूषे दास्याः पुत्रैः शाकुनिकलुब्धैः

कुलुड्डेहिं कण्णोवघादिणा वणगमणकोलाहलेण प-
डिबोधिदोम्हि, एत्तिकेणवि मे पीडा ण संवुत्ता,
जदो अअं गण्डस्स उवरि विप्फोडओ संवुत्तो, तेण
हि किल अह्मेसु अवहीणेसु तत्थभवदा मिआणु-
सारिणा अस्समपदं पविट्ठेण मम अधण्णदाए सउ-
न्तला णाम कावि तवस्सिकण्णआ दिट्ठा, तं पे-
क्खिअ सम्पदं णअरगमणस्स कधम्पि ण करेदि, एवं
ज्जेव चिन्तअन्तस्स मे पाहादा अच्छिसु रअणी,
का गदी जाव णं किदआरपरिग्गहं पिअवअस्सं
पेक्खामि। परिक्रम्यावलोक्य च। एसो वाणासणहत्थो
हिअअणिहिदपिअअणो वणपुप्फमालाहारी इदो
ज्जेव आअच्छदि पिअवअस्सो भोदु अङ्गभङ्गविअलो

कर्णोपघातिना वनगमनकोलाहलेन प्रतिबोधितोऽस्मि एतावताऽपि
मे पीडा न संवृत्ता यतोऽयं गण्डस्योपरि विस्फोटकः संवृत्तः तेन
हि किल अस्मास्ववहीनेषु (पश्चाद्भागेषु सत्सु) तत्र भवता मृगाऽनु-
सारिणा आश्रमपदं प्रविष्टेन ममाऽधन्यतया शकुन्तलानाम काऽपि
तपस्विकन्या दृष्टा, तां प्रेक्ष्य साम्प्रतन्नगरगमनकथामपि न करोति
एवमेव चिन्तयतो मे प्रभाता अक्षिषु रजनी. का गतिर्यावदेनं कृतदा-
रपरिग्रहं प्रेक्षे। एष बाणासनहस्तः हृदयनिहितप्रियजनो वन-
पुष्पमालाधारी इत एव आगच्छति प्रियवयस्यः भवतु अङ्गभङ्ग-
विकलो भूत्वा स्थास्यामि। एवमपि नाम विश्रामं लभेय। एत्त-
एण दाणिम्पि पीडा ण णिक्कमदि। तदो गण्डस्स उवरि पिडिआ
संवुत्ता हिअ किल अह्मेसु इत्यादि पाठान्तरे तु इयता इदानीमपि
पीडा न निष्क्रामति ततो गण्डस्योपरि पीडका संवृत्ता ह्यः किल
अस्मास्वित्यादि सं०। इयं पताका। प्रासङ्गिकस्येतिवृत्तस्य व्याप्तेः।
व्याप्तिः प्रासङ्गिकं वृत्तं पताकेत्यभिधीयत इति। अस्य पताकानायकस्य
गर्भसन्धौ विमर्शसन्धौ वा निर्वाह इति केचित्। अन्ये तु आग-

भविअ चिट्ठिस्सं, एअम्मि दाव विस्सामं लहेअं ।

इति दण्डकाष्ठञ्चलस्थितः[1] ।

ततः प्रविशति यथानिर्द्दिष्टो राजा ।

राजा । आत्मगतम् ।

कामं प्रिया न सुलभा, मनस्तु तद्भावदर्शनाश्वासि ।

अकृतार्थेऽपि मनसिजे रतिमुभयप्रार्थना कुरुते[1]॥

स्मितं कृत्वा । एवमात्माभिप्रायसम्भावितेष्टजनचित्त-

वृत्तिः प्रार्थयिता विप्रलभ्यते । कुतः

स्निग्धं वीक्षितमन्यतोऽपि नयने यत्प्रेरयन्त्या तया,

यातं यच्च नितम्बयोर्गुरुतया मन्दं विलासादिव ।

मागा इत्युपरुद्धया यदपि सा सासूयमुक्ता सखी,

सर्व्वं तत् किल मत्परायणमहो कामः स्वतां पश्यति[2]॥

---

भीटाविमर्षोद्वा पताका विनिवर्त्तत इति मुनिवचनच्चाद्रियन्ते निर्व्व-

हणसन्धिपर्य्यन्तमपि पतानायकस्य महायार्थं प्रवृत्तिदर्शनात् ।

(१) काममिति । प्रिया शकुन्तला कामं सुलभा सुखेन लभ्यत

इति सुलभा नास्ति परवशत्वादित्यर्थः । मनस्तु चित्तन्तु । तस्या

भावोऽभिप्रायस्तस्य दर्शनेनाश्वासते इति आश्वासि विश्वस्तम् ।

मनसिजे मनसिजातस्तस्मिन् । सप्तम्यां जनेर्ड इति डप्रत्यये तत्पुरुषे

कृतीति मनश्शब्दोत्तरवर्त्तिङेरलुक् । अकृतार्थेऽपि कृतार्थभिन्नेऽपि ।

उभयोः प्रार्थना रतिं रागं कुरुत इति । इदं विलासनामकनाट-

काङ्गम् । समीहारतिभोगार्थो विलास इति कथ्यत इत्युक्तेः ।

(२) स्निग्धमिति । अन्यतोऽपि मदन्यतोऽपि । नयने नेत्रे प्रेर-

यन्त्या प्रेरिते कुर्वन्त्या । अन्यत्र पश्यन्त्येत्यर्थः । तया शकुन्तलया

यत्स्निग्धं वीक्षितं दृष्टम् । नितम्बयोः कटिपश्चाद्भागयोर्गुरुतया

गुरोर्भावस्तया गौरवत्वेन । विलासादिव मन्दं धीरं यद्यातम् । मागा

इति मागच्छेति उपरुद्धया आहृतया शकुन्तलया सासखी सासूयम्

असूयया सहितं यदुक्ता (यदा मे रोचते तदा गमिष्यामीति रूपम्)

विदू। तथा स्थित एव। भो महाराअ! ण मे हत्था पसरन्दि, ता वाआमेत्तेण जआवीअसि, जअदु जअदु भवं[1]।

राजा विलोक्य सस्मितम्। कुतोऽयं गात्रोपघातः?

विदू। कधं कुदो त्ति सअं ज्जेव अच्छिं भञ्जिअ अस्सुका-रणं पुच्छसि?[2]।

राजा। न खल्ववगच्छामि, [3]भिन्नार्थमभिधीयताम्।

विदू। भो वअस्स जं वेदसो खुज्जस्स लीलं विडम्बेदि तं किं अत्तणो पहावेण अधवा णईवेअस्स[4]?।

राजा। नदीवेगस्तत्र कारणम्।

विदू। ममावि भवं[5]!

राजा! कथमिव?

विदू। जुत्तं णाम एव्वं जं तए रज्जकज्जाइं उज्झिअ तादिसं अक्खलिदपदं पदेसं च वणचरवित्तिणा

---

तत्रैव मत्परायणं किल कामी पुरुषः स्वताम् आत्मतां पश्यति इत्यिन् प्रेक्षणे कर्त्तरि लट् अहो आश्चर्यं।

(१) भो वयस्य न मे हस्तौ प्रसरतः तद्वाचामात्रेण जाप्यसे।

(२) कथं कुत इति स्वयमेवाक्षि भङ्क्त्वा अश्रुकारणं पृच्छसि। अच्छी-आउलीकरीअ इति पाठे तु अक्षिणी आकुलीकृत्येति सं०।

(३) अवगच्छामि जानामि भिन्नार्थं वक्रोक्तिरहितम् अभिधीयतां कथ्यताम्।

(४) भो वयस्य यद्वेतसः कुब्जस्य लीलां विडम्बयसि (अनुकरोति) तत्किमात्मनः (स्वस्य) प्रभावेण अथवा (णं इति पाठे ननु सं०) नदीवेगस्य।

(५) ममापि भवान्।१ युक्तं नामैवं यत्त्वया राज्यकार्याण्युज्झित्वा तादृशमस्खलितपदं प्रदेशं च, वनचरवृत्तिना भवितव्यमिति किमत्र मन्त्र्यते। अहं पुनर्ब्राह्मणः प्रत्यहं श्वापदानुसरणैः संक्षोभितस-

होदव्वं त्ति, किं एत्थ कन्दीअदु, अहं उण बम्हणो. पच्चूहं सावदाणुसरणेहिं संक्खोहिदसन्धिबन्धणाणं अत्तणो अङ्गाणं अणीसोम्हि, ता पसीद मे एक्काहम्पि दाव विस्समीअदु[1]।

राजा। आत्मगतम्। अयमेवमाह, ममापि कण्व-सुतामनुस्मृत्य मृगयां प्रति निरुत्सुकं चेतः। तथा हि

न नमयितुमधिज्यमुत्सहिष्ये
धनुरिदमाहितसायकं मृगेषु।
सहवसतिमुपेत्य यैः प्रियायाः
कृत इव लोचनकान्तिसंविभागः[2]॥

विदू। राज्ञो मुखमवलोक्य। अत्तभवं किम्पि कदुअ-मन्तेदि, अरणे क्खु मए रुदिदं आसी[3]

---

न्धिबन्धनामात्मनोऽङ्गानाम् अनीशोऽस्मि तत्प्रसीद मे एकाहमपि ताव-द्विश्रम्यताम्। एआरिसे अमाणुससञ्चारे आउलप्पदेसे वणचरवित्तिणा तुए होदव्वं जं सच्चं पच्चूहं सावदाणुसरणेहिं संक्खोहिअ-संधिबन्धणाणं मम गत्ताणं अणीसोम्हि ता पसादइस्सं विस-ज्जिदुं मं एक्काहं पि दाव विस्समिदुं इति पाठान्तरम्। एतादृशे अमानुषसञ्चारे आकुलप्रदेशे वनचरवृत्तिना त्वया भवितव्यं यत्सत्यं (असंभाव्ये तु यत्सत्यमिति भरत) प्रत्यहं श्वापदाऽनुसरणैः संक्षोभित-सन्धिबन्धनानां मम गात्राणाम् अनीशोऽस्मि संवृत्तः तत्प्रसादयिष्ये विस्रष्टुं मामेकाहमपि तावद्विश्रमितुमिति सं०।

(२) न नमयितुमिति। मृगेषु आहितं सायकं यस्मिन्तत्। अ-धिज्यं ज्यामधिगतमधिज्यम्। इदं धनुर्नमयितुं नम्रीकर्तुं महत्तु-मित्यर्थः। नोत्सहिष्ये उत्साहं नकरोमीत्यर्थः। कुत इत्याश-ङ्क्याह। यैर्मृगैः। प्रियायाः प्रियभूतायाः शकुन्तलायाः। सहवसतिं सहवासमुपेत्य प्राप्य। लोचनयोः नेत्रयोः कान्तेः सम्विभागः कृत इवासीत्यर्थः।

(३) अत्र भवान् किमिति हृदये कृत्वा मन्त्रयति अरण्ये खलु

राजा । सस्मितम् । किमन्यत् अनतिक्रमणीयं मे सुहृद्वाक्यमिति स्थितोऽस्मि ।

विदू । सपरितोषम् । तेण हि तुमं चिरं जीव[1] ।

इत्युत्थातुमिच्छति ।

राजा । तिष्ठ, शृणु मे सावशेषं वचः ।

विदू । आणवेदु भवं[2] !

राजा । विश्रान्तेन[3] भवता ममान्यस्मिन्ननायासे कर्म्मणि सहायेन भवितव्यम् ।

विदू । किं मोदअखज्जिआए[4] ? ।

राजा । यद्वक्ष्यामि ।

विदु । गहीदो क्खणो[5] ।

राजा । कः कोऽत्र भोः ?

दौवारिकः प्रविश्य । आणवेदु भट्टा[6] ।

राजा । रैवतक ! सेनापतिस्तावदाहूयताम् ।

दौवा । तह । इति निष्क्रम्य सेनापतिना सह प्र-

मया कथितम् । अरसं मए कहिदं आसि वा पाठः । अरसं मया कथितमासीत् इति स० ।

(१) तेन हि त्वं चिरं जीव । चीरञ्जीवेहिगन्तुमिच्छतीत्यपि पाठान्तरम् । (२) आज्ञापयतु भवान् ।

(३) विश्रान्तेनेति । अन्यस्मिन्मृगयातिरिक्ते । अनायासे आयासरहिते ।

(४) किं मोदकखादिकायाम् ।

(५) गृहीतः क्षणः । समयः प्रतीक्षितः इत्यर्थः ।

(६) आज्ञापयतु भर्त्ता ।

(१) तथा । एतु एतु आर्य्यः, एष आलापदत्तकर्णो भर्त्ता इह

राजा । सेनापते ! आश्रमसन्निकर्षे स्थितोऽस्मीति वचनन्ते नाभिनन्दामि । अद्य तावत्

गाहन्तां महिषा निपानसलिलं शृङ्गैर्मुहुस्ताडितं,
छायाबद्धकदम्बकं मृगकुलं रोमन्थमभ्यस्यतु ।
विस्रब्धैः क्रियतां वराहपतिभिर्मुस्ताक्षतिः पल्वले,
विश्रामं लभतामिदञ्च शिथिलज्याबन्धमस्मद्धनुः[१]॥

सेना । यथा प्रभविष्णवे रोचते ।

राजा । तेन हि निवर्त्तय पुरोगतान् धनुर्ग्राहिणः, यथा च मे सैनिकास्तपोवनं नाभिरुन्धन्ति, दूरात् परिहरन्ति च, तथा निषेद्धव्याः । पश्य

शमप्रधानेषु तपोवनेषु
गूढं हि दाहात्मकमस्ति तेजः ।
स्पर्शानुकूला अपि सूर्य्यकान्ता
स्तं ह्यन्यतेजोऽभिभवाद्वहन्ति[२] ॥

---

कुहे पडिक्खदि इति वा पाठ. नरनासिकालोलुपस्य जीर्णकच्छस्य कस्यापि मुखे पतिष्यसि इति सं- ।

(१) गाहन्तामिति । महिषाः शृङ्गैः मुहुर्वारम्वारं ताडितम् आहतम् । निपानस्य जलाशयस्य सलिलं जलम् । गाहन्ता विलोडनं कुर्व्वताम् । छायासु बद्धः कदम्बः समुदायो यस्य तत् । मृगाणां कुलम् । रोमन्थं चर्वितचर्व्वणम् । अभ्यस्यतु अभ्यस्तं करोतु विस्रब्धैः विश्वासं प्रापितैः । वराहपतिभिः । वराहः शूकरो घृष्टिरित्यमरः । पल्वले अल्पसरसि । पल्वलं चाल्पसरो वापी तु दीर्घिकेत्यमरः । मुस्तायाः क्षतिर्नाशः क्रियताम् । शिथिलः ज्याया मौर्व्या बन्धो बन्धनं यस्मिन् अस्मद्धनुः विश्रामं लभतामित्यन्वयः ।

(२) शमेति । शमएव प्रधानं मुख्यं येषु तेषु । तपसः तपस्याया वनं विपिनं तेषु । गूढं संवृतम् । दाहात्मकं दाहस्वरूपम् । तेजोऽस्ति । हि यस्मात् । स्पर्शे अनुकूला योग्यास्ते सूर्य्यकान्तास्तन्नामकामणय. ।

सेना । यथाज्ञापयति स्वामी ।

विदू । भो उच्छाअहेतुअ ! णिक्कम णिक्कम[1] ।

सेनापतिर्निष्क्रान्तः ।

राजा । परिजनानवलोक्य । मृगयावेशमपनयन्तु भवन्तः ।
रैवतक ! त्वमपि स्वनियोगमशून्यं कुरु ॥

रैव । जं महाराओ आणवेदि[2] । इति निष्क्रान्तः ।

विदू । किदं भवदा सम्पदं णिम्मक्खिअं, ता इमस्सिं पादवच्छाआविरइदविदाणसणाहे सिलाअले उअविसदु भवं, जाव अहम्पि सुहासीणो होमि[3] ।

राजा । गच्छाग्रतः ।

विदू । एदु एदु भवं[4] । उभौ परिक्रम्य उपविष्टौ ।

राजा । सखे माधव्य ! अनाप्तचक्षुःफलोऽसि, येन त्वया द्रष्टव्यानां परं न दृष्टम्[5] ।

---

अन्यस्य तेजसः अभिभवात्सूर्यसंपर्कादित्यर्थः । दहन्ति दाहङ्कुर्वन्तीत्यर्थः । स्पर्शानुकूला इव सूर्यकान्ता तदन्यतेजोभिभवाद्वमन्तीति पाठे तु तपोधनाः स्पर्शानुकूलाः सूर्यकान्ता इव तेजः वमन्तीत्यन्वयः ।

(१) भो उत्साहहेतुक निष्क्राम निष्क्राम । गच्छ भो दासीए-पुत्त धंसिदो दे उत्साहवुत्तन्तो इति वा पाठः । गच्छ भो दास्याः पुत्र ध्वंसितस्ते उत्साहवृत्तान्त, इति सं० ।

(२) यन्महाराज आज्ञापयति ।

(३) कृतं भवता साम्प्रतं निर्म्मक्षिकं, तदस्मिन् पादपच्छायावितानसनाथे शिलातले उपविशतु भवान्, यावदहमपि सुखासीनो ामि । निर्म्मक्षिकमित्यनेन जनशून्यं लक्ष्यते ।

(४) एतु एतु भवान् ।

(५) दर्शनीयानां परम् उत्कृष्टम् । शकुन्तलारूपं वस्तु त्वया न दृष्टमित्यन्वयः ।

विदू । णं भवं ज्जेव मे अग्गदो वट्टदि[1] ।

राजा । सर्व्वः खलु कान्तमात्मीयं[2] पश्यति, अहन्तु तामेवाश्रमललामभूतां शकुन्तलामधिकृत्य ब्रवीमि ।

विदू । स्वगतम् । भोदु ण से पसरं वड्ढइस्सं । प्रकाशम् । भो जइ सा तवस्सिकण्णआ अणब्भत्थणीआ. ता किं ताए दिट्ठआए[3] ।

राजा । धीड्मूर्ख !

निवारितनिमेषाभिर्नेत्रपङ्क्तिभिरुन्मुखः ।
नवामिन्दुकलां लोकः केन भावेन पश्यति[4] ? ॥

न च परिहार्य्ये वस्तुनि दुष्यन्तस्य मनः प्रवर्त्तते ।

---

(१) ननु भवानेव मे अग्रतो वर्त्तते । पुरोवर्त्तित्वेन भवतो द्रष्टव्यतमस्य दर्शनात् द्रष्टव्यानां परं कथन्नदृष्टमित्यर्थः ।

(२) आत्मीयं पुत्रकलत्रमित्यादिकं कान्तं सुन्दरं सर्वो जनः पश्यति । आश्रमस्य ललामभूतां भूषणभूतां शकुन्तलाम् अधिकृत्य अधिकृतं कृत्वोद्दिश्येत्यर्थः । यद्वा आश्रमे प्रधानीभूतामित्यर्थः । ललामं लाञ्छने ध्वजे । शृङ्गे प्रधाने भूषायामिति मेदिनीकोषः । केचित्तु आत्मानमितिपाठेऽपि आत्मीयमित्येवार्थः । स्नेहाधिक्यस्य व्यञ्जकत्वादात्मीयेऽपि आत्मशब्दप्रयोग इति वदन्ति । अन्येतु आत्मानं स्वमिति वदन्ति ।

(३) भवतु नास्य प्रश्रयं वर्द्धयिष्यामि । भो यदि सा तपस्विकन्यका अनभ्यर्थनीया ( प्रार्थनानर्हा ब्राह्मणोत्पन्नतयेत्यर्थः ) तया किं दृष्टया । इदं हि तस्य निरोधाविरोधनवामाङ्कम् ।

(४) निवारितेति । निवारितः निमेषो पक्ष्मपातो याभिः ताभिः । नेत्राणां नयनानां पङ्क्तयः परम्परा ताभिः सहितः । उद्र्द्ध मुखं यस्य । लोकः जनः लोकस्तु भुवने जन इत्यमरः । नवाम् अभिनवाम् । सौन्दर्य्ययुक्तामित्यर्थः । इन्दुकलां चन्द्रकलां केन भावेन केनाभिप्रायेण पश्यतीत्यन्वयः । रविकान्तां सुन्दरवस्तु दर्शनं स्वभावसिद्धमेवेति भावः ।

विदू। ता कधेहि[१]।

राजा। ललिताप्सरोभवं किल
मुनेरपत्यं तदुज्झिताधिगतम् ।
अर्कस्योपरि शिथिलं
च्युतमिव नवमालिकाकुसुमम्[२]॥

विदू। विहस्य। भो जधा पिण्डीखज्जूरेहिं उव्वेजिदस्स तिन्तिडीए सद्धा भोदि, तधा अन्तेउरइत्थिआरअणपरिभोइणो भवदो इअं पत्थणा[३]।

राजा। सखे! तावदेनां न जानासि येन त्वमेवमवादीः।

विदू। तं क्खु रमणीअं णाम, जं भवदोवि विह्मअं उप्पादेदि[४]।

राजा। वयस्य! किं बहुना,
चित्ते निवेश्य परिकल्पितसर्व्वयोगान्
रूपोच्चयेन विधिना विहिता कृशाङ्गी।

---

(१) तत् कथय।

(२) ललितेति। अर्कस्य तन्नामकवृक्षस्योपरि ऊर्द्ध्वम्। शिथिलं शैथिल्ययुक्तम्। नवा या मालिका तस्याः कुसुमं पुष्पमिव। तदुज्झिताधिगतं तेभिरप्सरोभिः उज्झितं त्यक्तं कण्वेनाधिगतं प्राप्तम्। ललिताप्सरोभवं मेनकोत्पन्नम्। मुनेः कण्वस्यापत्यं सन्तानं किलेति निश्चये। अननोपपत्तिकरणादुपन्यासनामकनाटकाङ्गम्। उपपत्तिकृतोयोर्थ उपन्यासः प्रकीर्त्तित इत्युक्तेः।

(३) भो यथा पिण्डीखर्ज्जूरैरुद्वेजितस्य तिन्तिड्याः (चिञ्चायाः) श्रद्धा भवति तथाऽन्तःपुरस्त्रीरत्नपरिभोगिनो भवत इयं प्रार्थना।

(४) तत् खलु रमणीयन्नाम यद्भवतोऽपि विस्मयमुत्पादयति।

(१) चित्त इति। रूपोच्चयेन सौन्दर्य्यराशिना विधिना विश्वसृजा। विधाता विश्वसृड्विधिरित्यमरः। परिकल्पिता प्राङ्निर्म्मिता सर्व्वयोगा इन्द्रद्रव्याणि तान्। चित्ते मनसि। निवेश्य संस्थाप्य। कृशाङ्गी कृशम्

स्त्रीरत्नसृष्टिरपरा प्रतिभाति सा मे
धातुर्विभुत्वमनुचिन्त्य वपुश्च तस्याः[१]॥

विदू । सव्वधा पच्चादेसो क्खु सा रूववदीणं[२] ।

राजा । इदञ्च मे मनसि वर्त्तते

अनाघ्रातं पुष्पं, किसलयमलूनं कररुहै,
रनामुक्तं रत्नं, मधु नवमनास्वादितरसम् ।
अखण्डं पुण्यानां फलमिव च तद्रूपमनघं,
न जाने भोक्तारं कमिह समुपस्थास्यति विधिः[३]॥

विदू । तेण हि लहुं गच्छदु भवं, मा जाव सा कस्सवि तवस्सिणो इङ्गुदीतेल्लचिक्कणसीसस्स हत्थे णिवडिस्सदि[४] ।

अङ्गं यस्या अङ्गगात्रकण्ठस्य इति ङीप् । तनुरूपेत्यर्थः । निर्मिता निर्मिता । धातुर्ब्रह्मणः विभुत्वं निर्माणकुशलत्वं तस्याः शकुन्तलायाः वपुश्च शरीरञ्च अनुचिन्त्य चिन्तयित्वा । सा शकुन्तला । अपरा स्त्रीरत्नस्य सृष्टिः प्रतिभातीत्यर्थः । इदं पुष्पनामकाङ्कम् । पुष्प विशेषवचनं मतमित्युक्तेः ।

(२) सर्वथा प्रत्यादेशः (निराकृतिः अतिरूपवतीत्यर्थः) खलु सा रूपवतीनाम् ।

(३) अनाघ्रातमिति । अनाघ्रातं पुष्पमनवीनपुष्पमित्यर्थः । कररुहैर्नखैरलूनम् अच्छिन्नं किशयलं पल्लवम् । मलिनमारहितमित्यर्थं । अनामुक्तम् अधारितपूर्व्वं रत्नं हीरकादिकम् । अनास्वादितो रसो यस्मिन्नत् एतादृशं नवं नवीनं मधुमद्यम् । मधुमद्ये वसन्ते चेति कोषः । पुण्यानां अखण्डं फलं स्वर्गादिकम् इवेति सर्वत्र सम्बन्धः । एतादृशम् अनघं दोषरहितं तद्रूपम् इह पृथिव्यां भोक्तारं भोगकर्त्तारं कं जनं विधिर्दैवं समुपस्थास्यतीति नजानेत्यर्थः ।

(५) तेन हि लघु लघु गच्छतु भवान्, मा तावत् सा कस्यापि तपस्विन इङ्गुदीतैलचिक्कणशीर्षस्य हस्ते निपतिष्यति । तस्यैव हस्ते- पतिष्यतीत्यर्थः एतेन नायकस्यानुरागोद्घाटनात्मक्य पासनन्नामाङ्कम् ।

राजा । परवती[1] खलु तत्रभवती, न च सन्निहितगुरुजना ।

विदू । अथ तुह उवरि कीदिसो से चित्तराओ[2] ?

राजा । वयस्य! स्वभावादेवाप्रगल्भास्तपस्विकन्यकाः ।

तथापि तु

अभिमुखे मयि संहृतमीक्षितम्,
हसितमन्यनिमित्तकथोदयम् ।
विनयवारितवृत्तिरतस्तया
न विवृतो मदनो न च संवृतः[3] ॥

विदू । विहस्य । किं दिट्ठिमेत्तेण ज्जेव भवदो अङ्कं आरोहदु[4] ? ॥

राजा ॥ सखीभ्यां मिथः प्रस्थाने पुनः सलीलया[5] तत्रभवत्या मयि भूयिष्ठमाविष्कृतो भावः ॥ तथाहि

(१) परवती अस्वतन्त्रेत्यर्थः ।

(२) अथ तवोपरि कीदृशोऽस्य चित्तरागः । प्रश्नेऽत्राथ शब्दः ।

(३) अभिमुख इति । मयि अभिमुखे संमुखे सति ईक्षितं दर्शनम् दृष्टदर्शनाङ्गनयोः क्तः । संहृतं सङ्कुचितम् । अन्येन निमित्तेन कथाया उदयो यस्मिन्कर्मणि यथा स्यात्तथा । अन्यहेतुकां कथामुद्भाव्येत्यर्थः । हसितम् । विनयेन नम्रत्वेन वारितास्तम्भिता वृत्तिर्यस्य एतादृशो मदनः कन्दर्पः न विवृतो न प्रकाशित न च सम्वृतोन सङ्कुचित इत्यर्थः ।

(४) किं दृष्टिमात्रेणैव भवतः अङ्कमारोहतु । इदं प्रत्यक्षनिष्ठुराऽभिधानादस्त्रमामनाटकाङ्गम् ।

(५) सलीलयेति । लीलया विलासेन सहितया । यद्वा । स्त्रीभिर्मधुराङ्गविचेष्टितैः प्रियाऽनुकरणं लीला तया सहितया । भवत्या शकुन्तलया भूयिष्टं बहुलं भावः अभिप्राय आविष्कृतः प्रकटीकृतः । यद्वा भावः शोभादिर्लीलादिश्च ।

(१) दर्भेति । अकाण्डेऽनवसरे दर्भस्य कुशस्याऽङ्कुरेण चरणः

दर्भाङ्कुरेण चरणः क्षत इत्यकाण्डे
तन्वी स्थिता कतिचिदेव पदानि गत्वा ।
आसीद्विवृत्तवदना च विमोचयन्ती
शाखासु वल्कलमसक्तमपि द्रुमाणाम्[१] ॥

विदू । गहीदपाधेओ किदोसि तए, अदो अणुरत्तं तवोवणं त्ति तक्केमि[२] ॥

राजा । सखे । तपस्विभिः कैश्चित् परिज्ञातोऽस्मि. चिन्तय तावत्, केनापदेशेन[३] पुनराश्रमपदं गच्छाम ।

विदू । को अबरो अबदेसो, णं भवं राआ[४] ।

राजा । ततः किम् ।

विदू । णीवारच्छट्ठभाअं तावसा मे उवहरन्तु त्ति[५] ।

राजा ॥ मूर्ख । अन्यमेव[६] भागधेयमेते तपस्विनो मे निर्वपन्ति यो रत्नराशीनपि विहायाभिनन्द्यते । पश्य

---

पादः क्षतो विद्ध इति । कतिचित्पदानि गत्वा तन्वी कृशाङ्गी सा शकुन्तला स्थिता गतिरहिता जातेत्यर्थः । विवृत्तं परावृत्तं वदनं मुखं यस्याः सा शाखासु असक्तम् असम्बद्धं द्रुमाणां वृक्षाणां वल्कलं वल्कमपि । वल्कं वल्कलमस्त्रियामित्यमरः । विमोचयन्ती मोचं कुर्वन्ती णिजन्तान्मुचधातोः शतृप्रत्यये ततः उगितश्चेति ङीप् । आसीत्, अस्धातोर्लुङ् ।

(२) गृहीतपाथेयः कृतोऽसि तया अतोऽनुरक्तं तपोवनमिति तर्कयामि ।

(३) अपदेशेन छलेन । पुनराश्रमदर्शनार्थम् प्रथममेवगतमिति भावः ।

(४) कः अपरोपदेशो ननु भवान् राजा ।

(५) नीवारषष्ठभागं तापसा मे उपहरन्त्विति । पुष्पमूलफलादीनां षष्ठांशस्यादेयत्वादितिभावः ।

(६) अन्यमिति । अन्यं षष्ठांशादन्यं भागधेयं करम् । भागधेयः करो बलिरित्यमरः । मे मह्यं तपस्विनः ऋषयः निर्वपन्ति ददतीत्यर्थः ।

यदुत्तिष्ठति वर्णेभ्यो नृपाणां क्षयि तद्धनम् ।
तपःषड्भागमक्षय्यं ददत्यारण्यका हि नः[१]॥

नेपथ्ये । हन्त सिद्धार्थौ स्वः ।

राजा । कर्णं दत्त्वा । अये प्रशान्तस्वरैस्तपस्विभिर्भवितव्यम् ।

प्रविश्य । दौवारिकः । जअदु जअदु भट्टा, एदे दुवे इसिकुमारआ पडिहारभूमिं उवत्थिदा[२] ।

राजा । अविलम्बं प्रवेशय तौ ।

दौवा । जं भट्टा आणवेदि । इति निष्क्रम्य ऋषिकुमाराभ्यां सह पुनः प्रविश्य । इदो इदो भवन्ता[३] ।

उभौ । राजानं विलोकयतः ।

एकः । अहो दीप्तिमतोऽपि विश्वसनीयतास्य वपुषः, अथवा उपपन्नमेतदस्मिन् ऋषिकल्पे राजनि । कुतः

(१) यदिति । वर्णेभ्य ब्राह्मणेभ्योऽन्यपाणां राज्ञा यद्धनम् उत्तिष्ठति तत् क्षयी अनित्यमित्यर्थः । आरण्यकाः अरण्ये भवा मनुष्या मुनय इत्यर्थः अरण्यान्मनुष्ये इति वुञ् । अक्षय्यम् अखण्डं तपसः षड्भागं षष्ठांशं नः अस्मभ्यं ददति । वर्णाः स्युर्ब्राह्मणादय इति कोषः यदधीते यद्यजते यद्ददाति यदर्चति । तस्य षड्भागभाग् राजेति मनूक्तिरिति भावः ।

(२) जयतु जयतु भर्त्ता एतौ द्वौ ऋषिकुमारकौ प्रतिहारभूमीमुपस्थितौ । स्त्री द्वाद्वारं प्रतीहार इत्यमरः ।

(३) यद्भर्त्ता आज्ञापयति । इत इतो भवन्तौ ।

(४) दीप्तिमतोऽपि कान्तिमतोऽपि अस्य राज्ञः वपुषः शरीरस्य विश्वसनीयता विश्वासयोग्यता अस्त्यहो । ऋषिकल्पे ईषदून ऋषि ऋषिकल्पः तस्मिन् । ईषदसमाप्तौ कल्पप्-देश्य-देशीयर इति कल्पप् । एतद् उपपन्नं युक्तमित्यर्थः ।

(५) अभ्याक्रान्तेति । अमुना राज्ञा । सर्वभोग्ये हर्म्ये इत्यर्थः ।

अध्याक्रान्ता वसतिरमुनाप्याश्रमे सर्व्वभोग्ये
रक्षायोगादयमपि तपः प्रत्यहं सञ्चिनोति ।
अस्यापि द्यां स्पृशति वशिनश्चारणद्वन्द्वगीतः
पुण्यः शब्दो मुनिरिति मुहुः केवलं राजपूर्व्वः[१]॥

द्वितीयः । सखे ! अयं स बलभित्सखो[२]दुष्यन्तः ?

प्रथमः । अथ किम् ।

द्वितीयः । तेन हि

नैतच्चित्रं, यदयमुदधिश्यामसीमां धरित्री-
मेकः कृत्स्नां नगरपरिघप्रांशुबाहुर्भुनक्ति ॥
आशंसन्ते समितिषु सुराः सक्तवैरा हि दैत्यै-
रस्याधिज्ये धनुषि विजयं पौरुहूते च वज्रे[३]॥

---

आश्रमे गृहस्थाश्रमे वसतिं वासमध्याक्रान्ता कृतेत्यर्थः । अयमपि रक्षायाः प्रजापालनरूपायाः योगात्सम्बन्धात् । प्रत्यहं अहरहः इति प्रत्यहं वीप्सायामव्ययीभावे अनश्चेति टचि नस्तद्धित इति टेर्लोपः । तप तपस्यां सञ्चिनोति वर्द्धयतीत्यर्थः । वशिनो जितेन्द्रियस्य अस्य राज्ञ चारणस्य तन्नामकगणस्य यो द्वन्द्वः मिथुनं तेन गीतः । राजपूर्व्व मुनिरिति राजर्षिरिति पुण्यः शब्दः द्यामपि स्पृशति । स्वर्गमपि गच्छ तीत्यर्थः । गृहस्थत्वादिना मुनितुल्यत्वेनोपचर्यते इति भावः । [त्यर्थः

(२) बलभित्सखः षष्ठीतत्पुरुषे राजाहःसखिभ्य इति टच् । इन्द्रस्य सखा

(३) नैतच्चित्रमिति । नगरस्य पत्तनस्य यौ परिघावर्गलौ तद्वत्प्रांशू दीर्घौ बाहू भुजौ यस्य सः एकः सजातीयद्वितीयरहितः अयं दुष्यन्त कृत्स्नां सकलां उदधिभिः समुद्रैः श्यामाः कृष्णवर्णाः सीमा राजक ल्पितचेत्रमानं यस्याम् एतादृशी धरित्रीं पृथिवीं यद्भुनक्ति पालयति एतन्नचित्रमित्यर्थः । दैत्यैर्दानवैः असुराः दैत्यदैतेयदनुजेन्द्रारिदा नवा इत्यमरः । सक्तानि प्रसक्तानि वैराणि येषान्ते एतादृशाः सुराः देवाः अस्य दुष्यन्तस्य अधिज्ये धनुषि चापे पौरुहूते इन्द्रसम्बन्धिनि वज्रे कुलिशे च समितिषु युद्धेषु विजयं आशंसन्ते प्रार्थयन्ते नत्व न्येष्वित्यर्थः ।

उभौ । उपगम्य । विजयस्व राजन् !

राजा । आसनादुत्थाय । अभिवादये भवन्तौ[१] ।

उभौ । स्वस्ति भवते इति फलान्युपनयतः ।

राजा । सप्रणामं परिगृह्य । आगमनप्रयोजनं श्रोतुमिच्छामि ।

उभौ । विदितो भवानिहस्थस्तपस्विभिः, ते च भवन्तमभ्यर्थयन्ति[२] ।

राजा । किमाज्ञापयन्ति ?

उभौ । तत्रभवतः कण्वस्य कुलपतेरसान्निध्यात्[३] रक्षांसि न इष्टिविघ्नमुत्पादयन्ति, तत् कतिपयदिवसमात्र सारथिद्वितीयेन भवता सनाथीक्रियतामाश्रम इति ।

राजा । अनुगृहीतोऽस्मि ।

विदू । अपवार्य[४] । एस दाणिं भअदो अणुऊलो गलहत्थो[५] ।

राजा । स्मितं कृत्वा । रैवतक ! मद्वचनादुच्यतां सारथिः सबाणकार्मुकं रथमुपस्थापयेति ।

---

(१) भवन्तौ पूज्यौ अभिवादये नमस्कारपूर्वकमाशिरादिवाचयामीत्यर्थः ।

(२) अभ्यर्थयन्ति । प्रार्थयन्ति ।

(३) सन्निधेः समीपस्य भावः सान्निध्यं न सान्निध्यं तस्मात् रक्षांसि राक्षसाः नोऽस्माकं इष्टेस्तन्नामकयज्ञस्य विघ्नमन्तरायं उत्पादयन्ति कुर्वन्तीत्यर्थः ।

(४) अपेति । पराहृत्यान्यस्य रहस्यकथनमपवारितम् । रहस्यं कथ्यतेऽन्यस्य पराहृत्याऽपवारितमिति धनञ्जयः ।

(५) एष इदानीं भवत अनुकूलो गलहस्तः ।

दौवा । जं देवो आणवेदि[1] । इति निष्क्रान्तः ।

उभौ । सहर्षम् ।

अनुकारिणि पूर्व्वेषां युक्तरूपमिदं त्वयि ।

आपन्नाभयसत्रेषु दीक्षिताः खलु पौरवा[2]॥

राजा । सप्रणामम् । गच्छतां भवन्तौ, अहमनुपदमागत एव ।

उभौ । विजयस्व । इति निष्क्रान्तौ ।

राजा । माधव्य! अप्यस्ति ते कुतूहलं[3] शकुन्तलादर्शनं प्रति ?

विदू । पढमं अपरिबाधं आसी, सम्पदं रक्खसवुत्तन्तेण सपरिबाधं[4] ।

राजा । मा भैषीः, ननु मत्समीप एव वर्त्तिष्यसे ।

विदू । एष तुह रधचक्करक्खीभूदोह्मि, जइ ण कोवि आअच्छिअ विग्घं करेदि[5] ।

(१) यद्देव आज्ञापयति ।

(२) अनुकारिणीति । पूर्व्वेषां पितृपितामहादीनाम् अनुकारिणि त्वयि इदम् आश्रमस्य विघ्नहरणं रक्षणं योग्यम् आपन्नाभयसत्रेषु आपत्प्राप्तानामभयदानरूपयागेषु पौरवाः पुरुवंशोत्पन्नाः दीक्षिताः निष्णाताः खल्विति वाक्यालङ्कारे ।

(३) कुतूहलं कौतुकम् । कौतूहलं कौतुकञ्च कुतुकञ्च कुतूहलमित्यमरः । शकुन्तलादर्शनमित्यत्र प्रतिशब्दयोगे लक्षणेत्थम्भूतेत्यादिना कर्म्मप्रवचनीयत्वाद्द्वितीया ।

(४) प्रथममपरिबाधमासीत्साम्प्रतं राक्षसवृत्तान्तेन सपरिबाधम् । अपरिबाधं कष्टरहितम् ।

(५) एष तव रथचक्ररक्षीभूतोऽस्मि यदि न कोप्यागत्य विघ्नं करोति । युद्धकाले चक्ररक्षकोऽपेक्ष्यते सोऽहन्ते भविष्यामीत्यर्थः ।

प्रविश्य । दौवारिकः । जअदु जअदु भट्टा, सव्वो रधो भत्तुणो विजअप्पमाणं अवेक्खदि, एस उण णअरादो देवीणं आणत्तिहरो करभओ आअदो[1] ।

राजा । सादरम् । किमम्बाभिः प्रेषितः ?

दौवा । अध इं[2] ।

राजा । तेन हि प्रवेश्यताम् ।

दौवा । तह । इति निष्क्रम्य, पुनः करभकेण सह प्रविश्य। करभअ ! एसो भट्टा, उवसप्पदु भवं[3] ।

करभकः । उपसृत्य प्रणम्य च । जअदु जअदु भट्टा, देवीओ आणवेन्ति[4] ॥

राजा । किमाज्ञापयन्ति ?

कर । आआमिणि चउत्थदिअहे पुत्तपिण्डपालणो णाम उववासो भविस्सदि, तहिं दीहाउणा अवस्सं अह्ने सम्भावइदव्व त्ति[5] ।

राजा । इतस्तपस्विनां[6] कार्य्यं, मितो गुरुजनाज्ञा, उभयमप्यनतिक्रमणीयं, तत् किमत्र प्रतिविधेयम् ।

(१) जयतु जयतु भर्त्ता सर्व्वोरथः भर्त्तुर्विजयप्रमाणमपेक्षते एष पुनर्नगराद्देवीनामाज्ञप्तिहरः करभक आगतः ।

(२) अथ किम् ।

(३) करभक एष भर्त्ता उपसर्पतु भवान् ।

(४) जयतु जयतु भर्त्ता देव्य आज्ञापयन्ति ।

(५) आगामिनि चतुर्थदिवसे पुत्रपिण्डपालनोनाम उपवासो भविष्यति तत्र दीर्घायुषा अवश्यं वयं संभावयितव्या इति ।

(६) इतः एकत्र तपस्विनाम् ऋषीणां कार्य्यम् दृष्टिविघ्ननाशरूपम् । इत एकत्र गुरुजनानां मातृणाम् आज्ञा । उभयमपि द्वयमपि अनतिक्रमणीयं लङ्घनेऽयोग्यम अत्रविषये प्रतिविधेयं कर्त्तुं योग्यं किमिति प्रश्नः ।

विदू । भो तिसङ्कु विअ अन्तरा चिट्ठ[1] ॥

राजा । सत्यमाकुलीभूतोऽस्मि ।

कृत्ययोर्भिन्नदेशत्वाद्द्वैधीभवति मे मनः ।
पुरः प्रतिहतं शैलैः स्रोतः स्रोतोवहां यथा[2] ॥

विचिन्त्य । सखे माधव्य । त्वमप्यम्बाभिः[3] पुत्र इव गृहीतः, स भवानितः प्रतिनिवृत्य तपस्विकार्यव्यग्रतामस्माकमावेद्य तत्रभवतीनां पुत्रकार्य्यमनुष्ठातुमर्हति ॥

विदू । भो । मा रक्खसभीरुअं मं अवगच्छ[4] ।

राजा । स्मितं कृत्वा । भो महाब्राह्मण । कथमिदं त्वयि सम्भाव्यते ।

विदू । तेण हि राआणुअ विअ गच्छिदुं इच्छामि[5] ।

राजा । ननु तपोवनोपरोधः परिहरणीय इति सर्व्वानेवानुयात्रिकांस्त्वयैव सह प्रेषयिष्यामि ।

विदू । सगर्व्वम् । जुअराओ म्हि दाणिं संवुत्तो[6] ।

राजा । आत्मगतम् । चपलोऽयं ब्राह्मणवटुः कदाचिदि-

(१) भो त्रिशङ्कुरिव अन्तरा (मध्ये) तिष्ठ ।

(२) कृत्ययोरिति । शैलैः पर्व्वतैः पुरोऽग्रे प्रतिहतं ताडितं स्रोतोवहानां नदीनां स्रोतो यथा प्रवाह इव भिन्नदेशत्वात् सामानाधिकरण्याभावात् कृत्ययोः कार्ययोः मे मम मनश्चित्तं द्वैधीभवतीत्यर्थः । दुःखप्राप्तेरट विरोधनामकाङ्गम् । विरोधोव्यसनप्राप्तिरिति दर्पणः ।

(३) अम्बाभिर्मातृभिः पुत्र इव इतोऽस्मात्स्थानात्प्रतिनिवृत्य । तपस्विकार्य्यव्यग्रतां मुनिकार्य्येचञ्चलताम् अस्माकम् आवेद्य कथयित्वा तत्रभवतीनां मातृणां पुत्रकार्यम् अनुष्ठातुम् कर्तुम् अर्हति ।

(४) भो मा राक्षसभीरुकं मामवगच्छ ।

(५) तेन हि राजाऽनुज इव गन्तुमिच्छामि ।

(६) युवराजोऽस्मीदानीं संवृत्तः ।

नामस्मत्प्रार्थनामन्तःपुरिकाभ्यो निवेदयेत् । भवत्वेवं तावद्गच्छामि । विदूषकस्य हस्तं गृहीत्वा । प्रकाशम् । सखे माधव्य ! ऋषिगौरवादाश्रमपदं प्रविशामि, न खलु सत्यमेव तापसकन्यायामभिलाषो मे । पश्य

क्व वयं, क्व परोक्षमन्मथो मृगशावैः सह वर्द्धितो जनः ।
परिहासविकल्पितं सखे । परमार्थेन न गृह्यतां वचः[1] ॥

विदू । एवमिदं ।

राजा । माधव्य ! त्वमपि स्वनियोगमनुतिष्ठ, अहमपि तपोवनरक्षार्थं तत्रैव गच्छामि ।

इति निष्क्रान्ताः(२) सर्वे ।

द्वितीयोऽङ्कः ।

---

(१) क्व वयमिति । वयं क्व परोक्षोऽनुत्पन्नो मन्मथः कामो यस्यैतादृशः । मृगाणां शावैः पोतैः । पोतः पाकोर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः । सह वर्द्धितः जनः शकुन्तलारूपस्त्रीजनः क्व । द्वौ क्वशब्दौ महदन्तरं सूचयतः तथाच तद्विषये प्रबन्धकरणं दूरापास्तमित्यर्थः । सखे माधव्य परिहासेन हास्येन विकल्पितं विकल्पीकृतम् इदं वचो वचनं परमार्थेन तात्विकत्वेन न गृह्यतामित्यर्थः ।

(२) एवमिदम् ।

(३) निष्क्रान्ता इति । अङ्कान्ते निष्क्रमणं सर्वेषामावश्यकत्वात् कृतम् ।

इतिश्रीडमरुवल्लभशर्म्मकृतायां शकुन्तलाव्याख्यायां द्वितीयोऽङ्कः ।

# अभिज्ञानशाकुन्तलम्।

---

## तृतीयोऽङ्कः।

ततः प्रविशति कुशानादाय यजमानशिष्यः।

शिष्यः। विचिन्त्य सविस्मयम्[1]। अहो महाप्रभावो राजा दुष्यन्तः। येन प्रविष्टमात्रएवाश्रमं तत्रभवति सारथि द्वितीयेराजनि निरुपप्लवानि नः कर्म्माणि संवृत्तानि।

का कथा बाणसन्धाने ज्याशब्देनैव दूरतः।
हुङ्कारेणेव धनुषः स हि विघ्नान् व्यपोहति[2]॥

यावदेतान् वेदिसंस्तरणार्थं दर्भान् ऋत्विग्भ्य उपाहरामि। परिक्रम्यावलोक्य च। (आकाशे[3]) प्रियंवदे। कस्येदमुशीरानुलेपनं मृणालवन्ति च नलिनीदलानि नीयन्ते? श्रुतिमभिनीय। किं ब्रवीषि, आतपलङ्घनाद्बलवदस्वस्थशरीरा शकुन्तला; तस्याः शरीरनिर्वापणायेति? प्रियंवदे।

---

(१) अहो इति। सारथिद्वितीये सारथिमात्रसहाये तत्र भवति राजनि आश्रमं प्रविष्टमात्र एव प्रवेशं कृतवत्येव नोऽस्माकं कर्म्माणि इष्ट्यादियागकर्म्माणि निरुपद्रवाणि संवृत्तानि जातानि।

(२) का कथेति। बाणस्य सन्धाने का कथा। विघ्नस्य कथैव नास्तीत्यर्थः। धनुषः चापस्य हुंकारेणैव दूरादिति दूरतः पञ्चम्यास्तसिरिति तसिल् प्रत्ययः ज्याया मौर्व्याः शब्देनैव स दुष्यन्तः विघ्नान् अन्तरायान् व्यपोहति हीति निश्चय इत्यर्थः।

(३) आकाश इति। किं ब्रवीषीति यन्नाट्ये विना पात्रं प्रयुज्यते। श्रुत्वेवानुक्तमप्यर्थं तत्स्यादाकाशभाषितमिति दर्पणः।

यत्नादुपचर्य्यतां, सा हि तत्रभवतः कुलपतेर्द्वितीयमुच्छ्वसितम्। अहमपि तावद् वैतानिकं शान्त्युदकमस्या एव गौतमीहस्ते विसर्ज्जयामि। इति निष्क्रान्तः।

विष्कम्भकः[१]॥

ततः प्रविशति समदनावस्थो राजा।

राजा। सचिन्तं निश्वस्य,

जाने तपसो वीर्य्यं, सा बाला परवतीति मे विदितम्।
न च निम्नादिव सलिलं निवर्त्तते मे ततो हृदयम्[२]॥

भगवन् मन्मथ। कुतस्ते कुसुमायुधस्य सतस्तैक्ष्ण्यमेतत्? स्मृत्वा। आ ज्ञातम्।

(१) विष्कम्भक इति। कृतोऽपि स्वेच्छया प्राप्त प्रसङ्गेनोभयोर्वा विष्कम्भकः स विज्ञेयः कथार्थस्यापि सूचकः। विष्कम्भस्तु द्विधा लोके शुद्धः सङ्कीर्ण एव च। शुद्धो मध्यमपात्रेण संकीर्णो मध्यमाधमैरिति भरतः। धनिकस्तु। वृत्तवर्त्तिष्यमाणानां कथांशानां निदर्शकः। संक्षेपार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः इत्याह। वक्त-नचात्र वृत्तानां अतीतानां दृष्टिविघ्ननिवारणरूपाणां वर्त्तिष्यमाणानां म.विना प्रियम्वदाशकुन्तलादीनां च संक्षेपेणार्थस्य कथनम्। मध्यपात्रेण प्रयोगादयं शुद्धविष्कम्भकः।

(२) जान इति। तपसः तपस्यायाः वीर्य्यं प्रभावम् अहं जाने जानामि। बाला किशोरवयस्का सा शकुन्तला परवती परतन्त्रा इति मे मम विदितं ज्ञानमस्तीत्यर्थः। निम्नाद्गभीरात्। निम्नं गभीरं गम्भीरमित्यमरः। सलिलमिव जलमिव ततस्तस्याः मे हृदयं चित्तं न निवर्त्तते निवृत्तिम्नाप्नोतीत्यर्थः। उभयेच्छयाऽपि प्राप्तिर्भविष्यतीति भावः। उपायादर्शनात्तापनन्नामाङ्गम्। उपायादर्शनं यत्तु तापनं नाम तद्भवेदिति दर्पणोक्तेः। धनिकेन तु नेदं प्रतिमुखसन्ध्यावङ्गत्वेनोक्तम्।

(३) अद्यापीति। हे मन्मथ कन्दर्प हरस्य शिवस्य कोप एव वह्निरग्निः। अम्बुराशौ समुद्रे और्वः वड़वानल इव अद्यापि त्वयि

अद्यापि नूनं हरकोपवह्नि-
स्त्वयि ज्वलत्यौर्व्व इवाम्बुराशौ ।
त्वमन्यथा मन्मथ! मद्विधानां
भस्मावशेषः कथमेवमुष्णः[1] ॥

अपि च । त्वया चन्द्रमसा चातिविश्वसनीयाभ्यामभिसन्धीयते कामिसार्थः[2] । कुतः

तव कुसुमशरत्वं, शीतरश्मित्वमिन्दो,-
र्द्वयमिदमयथार्थं दृश्यते मद्विधेषु ।
विसृजति हिमगर्भैरग्निमिन्दुर्मयूखै,-
स्त्वमपि कुसुमबाणान् वज्रसारीकरोषि ॥

अथवा

ज्वलति नूनमिति निश्चये । निर्द्दिते मदने कोपरूपोऽग्निर्निर्व्वाणतान्न प्राप्त इत्यर्थः । अन्यथा भस्म एवावशेषो यस्य सः त्वं मद्विधाना मम विधा प्रकारः येषान्तेषाम् । प्रत्ययोत्तरपदयोश्चेति मपर्य्यन्तस्य युष्मशब्दस्य विधशब्दे उत्तरपदे परे मादेशः । एवं कथम् उष्णः इत्यन्वयः ।

(१) विश्वासे प्रत्यये योग्याभ्याम् अर्हार्थेऽनीयर् । त्वया मदनेन चन्द्रमसा चन्द्रेण च कामिनां सार्थः सङ्घः अभिसन्धीयते प्रतारित क्रियते ।

(२) तवेति । तव कामस्य कुसुमशरत्वं कुसुमशरेतिनामत्वं इन्दोः चन्द्रस्य शीतरश्मित्वं शीतरश्मि इति संज्ञात्वं चेदं द्वयम् । मद्विधेषु मत्सदृशेषु कामिपुरुषेषु अयथार्थं यथार्थभिन्नं दृश्यते यस्मात् हिमानि गर्भेऽन्तरे येषान्तैः मयूखैः किरणैः इन्दुः अग्निं विसृजति विक्षिपति । त्वमपि कुसुमबाणान् पुष्पमयान्बाणान् । वज्रयत् इन्द्रास्त्रवत् सारो बलं येषान्ते वज्रसाराः अवज्रसारान् वज्रसारान् यथा सम्पद्यन्ते तथा करोषि वज्रसारी करोषि कठोरीकरोषीत्यर्थः अभूततद्भावे कृभ्वस्तियोगे सम्पद्यकर्त्तरीति च्विप्रत्यये अस्य च्वावितीत्वम् ।

अनिशमपि मकरकेतुर्मनसो रुजमावहन्नभिमतो मे ।
यदि मदिरायतनयनां तामधिकृत्य प्रहरतीति[1] ॥
भगवन्नेवमुपालब्धस्य ते न मां प्रत्यनुक्रोशः[2] ।

वृथैव सङ्कल्पशतैरजस्रमनङ्ग ! नीतोऽसि मयातिवृद्धिम् ।
आकृष्य चापं श्रवणोपकण्ठे मय्येव युक्तस्तव बाणमोक्षः[3] ॥

सखेदं परिक्रम्य । क्व नु खलु निरस्तविघ्नैस्तपस्विभिरनुज्ञातः खिन्नमात्मानं विनोदयामि, न च प्रियादर्शनादृते[4] शरणमन्यत् । यावदेनामन्विष्यामि । ऊर्द्ध्वमवलोक्य । इमामुग्रतपां[5] वेलां प्रायेण लतावलयवत्सु मालिनीतीरेषु ससखीजना तत्रभवती शकुन्तला गमयति, भवतु तत्रैव तावद्गच्छामि । परिक्रम्यावलोक्य च । अनया बालपादपवीथ्या[6] सुतनुरचिरं गतेति तर्कयामि । कुतः

(१) अनिशमिति । मदिरे इव आयते दीर्घे नयने नेत्रे यस्यास्ताम् । मदिरो मत्तखञ्जन इति कोषः । तां शकुन्तलामधिकृत्योद्दिश्य मकरकेतुरनङ्गो यदि प्रहरति प्रहारं करोति । तदा अनिशं निरन्तरं मनसो रुजं दुःखम् आवहन् सञ्जनयन्नपि मे मम अभिमतः स्यादित्यर्थः ।

(२) उपालब्धस्य दूषितस्य ते तव अनुक्रोशः कृपा ।

(३) वृथैवेति । हे अनङ्ग कन्दर्प । सङ्कल्पशतैर्मनोरथैरनेकैः अजस्रं निरन्तरं वृथैव मयातिवृद्धिं नीतोसि प्रापितोऽसि । यतः श्रवणोपकण्ठे श्रवणयोः कर्णयोरुपकण्ठे समीपे चापं बाणमाकृष्य मयि एव मामुद्दिश्यैव बाणस्य शरस्य मोक्षो युक्तः सम्बद्धः । अनङ्गपदेन प्रहारासामर्थ्यं सूचितम् ।

(४) प्रियादर्शनादिति । प्रियभूतायाः शकुन्तलाया दर्शनमन्तरेणेत्यर्थः । अन्यारादिति ऋतेयोगे पञ्चमी ।

(५) उग्रतपां मध्यन्दिनसम्बन्धिनीं वेलां प्रायेण बाहुल्येन लतावलयवत्सु लतागृहवत्सु मालिनीतीरेषु तन्नामकनदीपुलिनेषु गमयति यापयति । (६) वीथ्या श्रेण्या वीथ्यालिरावलिपङ्क्ति श्रेणीत्यमरः ।

सम्मीलन्ति न तावद्बन्धनकोषास्तयावचितपुष्पाः।
क्षीरस्निग्धाश्चामी दृश्यन्ते किसलयच्छेदाः[१]॥

स्पर्शं रूपयित्वा। अहो प्रवातसुभगोऽयं[२]वनोद्देशः

शक्योऽरविन्दसुरभिः[३]कणवाही मालिनीतरङ्गाणाम्।
अङ्गैरनङ्गतप्तैर्निर्दयमालिङ्गितुं पवनः।

विलोक्य। हन्तास्मिन् वेतसलतामण्डपे सन्निहितया शकुन्तलया भवितव्यम्। तथाहि

अभ्युन्नता पुरस्तादवगाढा जघनगौरवात् पश्चात्।
द्वारेऽस्य पाण्डुसिकते पदपङ्क्तिर्दृश्यतेऽभिनवा[४]॥

---

(१) सम्मीलन्तीति। तया शकुन्तलया अवचितानि लूनानि पुष्पाणि येभ्यस्ते एतादृशाः बन्धनस्य वृन्तस्य कोषास्तावत्ताकल्येन न सम्मीलन्ति किशलयानां पल्लवानाम् अमी छेदाः खण्डानि क्षीरेण स्निग्धा चिक्कणाश्च दृश्यन्ते। चिरप्रयाणेतु एतादृशा न सम्भवन्तीति भावः।

(२) प्रवातेन सुगन्धयुक्तवायुना सुभगः सुन्दरः वनोद्देशः वनप्रदेशः।

(३) शक्येति। अरविन्दैः कमलैः सुरभिः सुगन्धिः मालिन्यास्तरङ्गाणामूर्मीणां कणान् जलकणान् वहति प्रापयतीति शील इत्यर्थः। अनङ्गेन मन्मथेन तप्तैः सन्तापं प्राप्तैः रङ्गैर्निर्दयं यथास्यात्तथाऽऽलिङ्गितुं शक्य इत्यर्थः। रविरलमालिङ्गितुमिति पाठान्तरम्।

(४) अभ्युन्नतेति। पुरस्तादग्रतः विभाषापुरेति अस्तातिः। अभ्युन्नताऽभित उन्नताः जघनयोः कटिप्राग्भागयोः गौरवाद्गुरुत्वेन। पश्चात्पार्ष्णिनिपातभूमौ अवगाढा गभीरा अभिनवा नवीना पाण्डुसिकते पाण्डवः शुभ्राः सिकता वालुका यस्मिन्नेतादृशेऽस्य वेतसलतामण्डपस्य द्वारे पदपङ्क्तिः पादकृतचिह्नस्य परंपरा दृश्यते। पदं शब्दे च वाक्ये च व्यवसाय प्रदेशयोः। पादतच्चिह्नयोरिति मेदिनीकोषः। इदं परिसर्पनामकन्नाटकाङ्गम्। दृष्टनष्टाऽनुसरणं परिसर्पश्च कथ्यत इत्युक्तः।

(१) नेत्रस्य लोचनस्य निर्वाणं तापशान्तिः लब्धमित्यन्वयः। मनोरथस्य प्रिया प्रियभूता एषा शकुन्तला सकुसुमास्तरणं पुष्पशय्यासहितं

यावद्विटपान्तरेणावलोकयामि । तथा कृत्वा सहर्षम् ।

अये लब्धं नेत्रनिर्वाणम्[1]। एषा मनोरथप्रिया मे सकुसुमास्तरणं शिलापट्टमधिशयाना सखीभ्यामुपास्यते। भवतु लतान्यवहितः शृणोमि विस्रब्धकथितान्यासाम् । इति विलोकयन् स्थितः ।

ततः प्रविशति यथोक्तव्यापारा सह सखीभ्यां शकुन्तला[2]।

सख्यौ । उपवीज्य । हला सउन्तले ! अवि सुहाअदि दे णलिणीवत्तवादो[3]? ।

शकु । सखेदम् । किं वीजअन्ति मं पिअसहीओ[4] ? ।

सख्यौ । सविषादं परस्परमवलोकयतः ।

राजा । बलवदस्वस्थशरीरा भवती दृश्यते । सवितर्कम् ।

शिलापट्टं पाषाणफलकम् । अधिशीङ्स्थासाङ्कर्मेति कर्मत्वम् । आसां शकुन्तलादीनां विस्रब्धकथितानि विश्वासवाक्यानि शृणोमि । अयं फलस्याप्राप्तौ दर्शनरूपस्योपायस्य योजनाद्यत्नः । प्रयत्नस्तु तदप्राप्तौ व्यापारोऽतित्वरान्वित इति धनञ्जयोक्तेः ।

(२) ततः प्रविशतीत्यादि सम्बन्धो गर्भसन्धिः । प्रथमाङ्के दृष्टस्य द्वितीयाङ्के विदूषकसंवादरूपया कथया नष्टस्य शकुन्तलारूपबीजस्यान्वेषणात्प्राप्त्याशापताकयोः सम्बन्धाच्च उक्तञ्च गर्भस्तु दृष्टनष्टस्य बीजस्यान्वेषणमुहुः । द्वादशाङ्गः पताकास्यान्न वा स्यात्प्राप्तिसम्भवइति । दर्पणकारस्तु । फलप्रधानोपायस्य प्रागुद्भिन्नस्य किञ्चन । गर्भो यत्र समुद्भेदो ह्रासान्वेषणवान्मुहुरित्याह । व्याख्यातवांश्च फलस्य गर्भीकरणाद्गर्भ इति । अस्य चाभूताहरणादीनि द्वादशाङ्गानि भवन्ति । तेषु चाभूताहरणमार्गतोटकाधिबलाक्षेपाणां प्राधान्यमितरेषां यथासम्भवं योगइति धनिकः । पताकास्यान्नवेत्यनेन पताकाया अनियमं प्राप्तिसम्भवस्यैव प्राधान्यञ्च दर्शितम् ।

(३) अयि शकुन्तले अपि सुखायते ते नलिनीपत्रवातः ।

(४) किं वीजयत मां प्रियसख्यौ ।

तत्किमयमातपदोषः स्यात्, उत[1] यथा मे मनसि वर्त्तते ? । साभिलाषं निर्व्वर्ण्य । अथवा कृतं सन्देहेन

स्तनन्यस्तोशीरं प्रशिथिलमृणालैकवलयं
प्रियायाः साबाधं तदपि कमनीयं वपुरिदम् ।
समस्तापः कामं मनसिजनिदाघप्रसरयो-
र्न तु ग्रीष्मस्यैवं सुभगमपराद्धं युवतिषु[2] ॥

प्रियं । जनान्तिकम् । अणसूए ! अस्स राएसिणो पढमदंसणादो आरम्भिअ पज्जुस्सुअमणा सउन्तला, ण क्खु से अस्सणिमित्तो आतङ्को भवे[3] ।

अन । सहि ! ममवि एआरिसी आसङ्का हिअअस्स, भोदु पच्छिस्सं दाव णम् । प्रकाशम् । सहि ! पुच्छिदव्वासि किम्पि, बलीओ क्खु दे अङ्गाणं सन्दावो[4] ।

राजा । वक्तव्यमेव ।

---

(१) उत इति । यथा मम मनसि सन्तापः तथाऽस्या अपि मनसि स्यादित्यर्थः ।

(२) स्तनेति । स्तनयोः कुचयोः न्यस्तं न्यासीकृतम् उशीरं यत्र तत् प्रशिथिलम् श्लथं मृणालस्य विसस्य एकवलयं यस्मिन्तत् । साबाधं पीडासहितमपि प्रियायाः शकुन्तलायाः इदं वपुः शरीरं कमनीयं सुन्दरम् । मनसिजस्य निदाघस्य मनसिजनिदाघौ तयोः प्रसरयोर्वेगयो कामन्तिकामं तापः समः तुल्यः तथाऽपि युवतिषु ग्रीष्मस्य तन्नामकस्य ऋतोरपराद्धं कामिजनतापकरूपोपराधमेताद्दशं सुभगं सुन्दरो न भवति । अपितु कामस्यैव सन्ताप इत्यर्थः । अनेन कामजन्य सन्तापस्या भ्यूहनादनुमानञ्चामनाटकाङ्गम् । अभ्यूहो लिङ्गतोऽनुमेति रूपकात् ।

(३) अनसूये तस्य राजर्षेः प्रथमदर्शनादारभ्य पर्य्युत्सुकमना (उत्कण्ठितमना) शकुन्तला न खल्वस्या अन्यनिमित्त आतङ्को भवेत् ।

(४) सखि ममाऽपि एताद्दशी आशङ्का हृदयस्य, भवतु, प्रक्ष्यामि तावदेनाम् । सखि प्रष्टव्याऽसि किमपि बलीयांस्तेऽङ्गनां सन्तापः ।

शशिकरविशदान्यस्यास्तथापि दुःसहनिदाघशंसीनि ।
भिन्नानि श्यामिकया मृणालनिर्म्माणवलयानि[1]॥

शकु । पूर्व्वार्द्धेन शयनादुत्थाय । हला ! भण जं वत्तु-कामासि[2] ।

अन । हला सउन्तले ! अनब्भन्तरा अह्मे दे मणोगदस्स वुत्तन्तस्स, किन्तु जादिसी इदिहासकथाणुबन्धेसु कामिअजणाणं अवत्था सुणीअदि तादिसी तुह त्ति तक्केमि, ता कधेहि किं णिमित्तं दे अअं आआस त्ति, विआरं परमत्थदो अआणिअ अणारम्भो किल पडी-आरस्स[3] ।

राजा । अनसूययापि मदीयस्तर्कोऽवगतः[4]।

शकु । बलीओ से आआसो, ण सक्कणोमि सहसा णिवे-दिदुं[5] ।

---

(१) शशिकरेति। शशिनः कराश्चन्द्रस्य अंशवः तद्वत् विशदानि उज्ज्वलानि अस्याः शकुन्तलायाः श्यामिकया कालिम्ना भिन्नानि मिश्रितानि । मृणालनिर्म्माणि वलयानि बिसैर्निर्म्मितानि कटकानि दुःसहं दुःखेन सह्यं निदाघमुष्माणं शंसन्ति इति दुःसहनिदाघशंसीनि भवन्तीति शेषः ।

(२) अयि भण यद्वक्तुकामासि ।

(३) अनभ्यन्तरा वयं ते मनोगतस्य वृत्तान्तस्य किन्तु यादृशी इतिहासकथाऽनुबन्धेषु कामिजनानामवस्था श्रूयते तादृशी तवेति तर्कयामि तत्कथय किन्निमित्तस्तेयमायास इति विकारं परमार्थतोऽज्ञात्वा अनारम्भः किल प्रतीकारस्य । निश्चयेनाऽज्ञात्वा रोगस्य प्रतीकारणमनुचितमिति भावः ।

(४) अनसूययापि मदीयो मद्हृदयविषयस्तर्कः सम्भावितो योऽवगतो ज्ञातः यद्वा मदीयो मत्सम्बद्धस्तर्कः सम्भावनात्माऽवगतः प्राप्तः ।

(५) बलीयान्मे आयासः न शक्नोमि सहसा निवेदयितुम् ।

प्रियं । सुट्ठु क्खु एषा भणादि किं एदं अत्तणो उवद्दवं णिगूहसि ? अणुदिअसं क्खु परिहीअसि अङ्गेसुं, लावस्समई छाया केवलं तुमं ण मुञ्चदि[1] ॥

राजा । अवितथमाह[2] प्रियंवदा । तथाहि

क्षामक्षामकपोलमाननं, उरः काठिन्यमुक्तस्तनं,
मध्यः क्लान्ततरः, प्रकामविनतावंसौ, छविः पाण्डुरा ।
शोच्या च प्रियदर्शना च मदनम्लानेयमालक्ष्यते
पत्राणामिव शोषणेन मरुता स्पृष्टा लता माधवी[3] ॥

शकु । निश्वस्य । कस्स वा अस्साए कधइस्सं, किन्तु आआसहेतुआ वो भविस्सं[4] ।

उभे । सहि ! अदो ज्जेव णिब्बन्धो सिणिद्धजणसंविभत्तं क्खु दुक्खं सज्जवेअणं भोदि[5] ।

---

(१) सुष्ठु खलु एषा भणति किमिदमात्मनः (स्वस्य) उपद्रवं निगूहसि अनुदिवसं खलु परिहीयसेऽङ्गेषु, लावण्यमयी छाया केवलं त्वां न मुञ्चति ।

(२) अवितथं सत्यम् ।

(३) क्षामक्षामेति । क्षामक्षामौ क्षीणतरौ कपोलौ गण्डस्थलौ यस्मिन्तत् । उरः वक्षस्थलम् । काठिन्यङ्कठिनस्य भावः तेन मुक्तौ स्तनौ कुचौ यस्मिन्तत् । तथा मध्यः क्लान्ततरोऽतिदुर्बलः अंसौ स्कन्धौ प्रकाममविनतावत्यन्तमवनतौ । तथा छविः कान्तिः पाण्डुरा पाण्डुवर्णीभूता मदनेन ग्लाना परिभूयमाना इयं शकुन्तला मरुता दक्षिणवायुना स्पृष्टा संयुक्ता पत्राणां पलाशानां शोषणेन माधवीलता इव शोच्याशोकं कर्त्तुं योग्या प्रियं प्रियकरं दर्शनम् ईक्षणं यस्याः एतादृशी चालक्ष्यते दृश्यते इत्यर्थः ।

(४) कस्य वाऽन्यस्य कथयिष्यामि किन्तु आयासहेतुका वो भविष्यामि ।

(५) सखि अतएव निर्बन्धः स्निग्धजनसंविभक्तं खलु दुःखं सह्यवेदनं भवति । स्निग्धजनेन वयस्याजनेन संविभक्तं सम्यक् तया सवि

राजा ।

दृष्टा जनेन समदुःखसुखेन बाला
नेयं न वक्ष्यति मनोगतमाधिहेतुम् ।
दृष्टो विवृत्य बहुशोऽप्यनया सतृष्ण-
मत्रोत्तरश्रवणकातरतां गतोऽस्मि[1]॥

शकु । जदो पहुदि तवोवणरक्खिदा सो राएसी मम दंसणपधं गदो[2] । इत्यर्द्धोक्तेन लज्जां नाटयति ।

उभे । कधेदु कधेदु पिअसही[3] ॥

शकु । तदो पहुदि तग्गदेण अहिलासेण एआवदवत्थ म्हि संवुत्ता[4] ।

---

भागीकृतं दुःखम् । सह्या सोढुं शक्या वेदना यस्य तदेतादृशं भवतीत्यर्थः । वयस्यः स्निग्धवयसा इत्यमरः ।

(१) दृष्टेति । दुःखञ्च सुखञ्च दुःखसुखे समे तुल्ये दुःख-सुखे यस्य सः एतादृशेन जनेन सखीजनेन प्रियंवदाऽनसूयाभ्यामित्यर्थः । दृष्टा इयं बाला किशोरवयस्का शकुन्तलेत्यर्थः । मनोगतं चित्तस्थितं आधिहेतुमाधेः मानसव्यथाया हेतुङ्कारणभूतम् । पुंस्याधिर्मानसीव्यथेत्यमरः । न वक्ष्यति न कथयिष्यति नन्नाऽपि तु कथयिष्यत्येवेति अनया बालया बहुशोऽनेकधा बहुत्वार्थाच्छस्कारकादिति शस् प्रत्ययः । विवृत्य परावृत्य सतृष्णां स्पृहाग्रहितं दृष्टोपि अहमिति शेषः । अत्रास्मिन्विषये उत्तरस्य श्रवणे कातरतामधीरताङ्गतोस्मि प्राप्तोस्मीत्यर्थः । नेयङ्कामबाधेत्युक्तौतु विफलोयं प्रयत्न इति भावः ।

(२) यतः प्रभृति तपोवनरक्षिता सराजर्षिर्मम दर्शनपथं गतः ।

(३) कथयतु कथयतु प्रियसखी ।

(४) ततः प्रभृति तद्गतेनाऽभिलाषेण एतावदवस्थास्मि संवृत्ता । तत्वार्थकथनाम्मार्गनामकन्नाटकाङ्गम् । तत्वार्थकथनान्मार्ग इति दर्पणः ।

(१) टिक्का तेऽनुरूपं वरेऽभिलाषः अथवा सागरमुज्झित्वा कुत्र

उभे। दिट्ठिआ दे अणुरूए वरे अहिलासो, अधवा साअरं उज्झिअ कहिं महाणईए पविसिदव्वं[1]।

राजा। सहर्षम्। श्रुतं यच्छ्रोतव्यम्।

स्मर एव तापहेतुर्निर्वापयिता स एव मे जातः।
दिवस इवाभ्रश्यामस्तपात्यये जीवलोकस्य[2]॥

शकु। ता जइ वो अणुमदं तदो तधा पउत्तिदव्वं जधा तस्स राएसिणो अणुकम्पणीआ होमि त्ति, अणुधा सुमरेध मं[3]।

राजा। अहो विमर्शच्छेदि वचनम्! एतदेव कामफलं, यदफलमन्यत्। एतावदवस्थापि मां सुखयति[4]।

महानद्याः प्रवेष्टव्यम्। तथा चाऽनियुक्तोक्तिः वरं वरयते कन्येति। वरमित्यस्यानुरूपं वरमित्यर्थः।

(२) स्मरेति। तापस्य सन्तापस्य हेतुः कारणम्। स्मर एव काम एव। पूर्वमार्यागीतिश्छन्दः। तपात्यये उष्णापगमे जीवलोकस्य भूतलस्य अभ्रेण मेघेन श्यामः कृष्णवर्णो दिवस इव। स कम मदन काम एव निर्वापयिता तापस्य शमयिता जात इत्यर्थः।

(३) तद्यदि वोऽनुमतं ततस्तथा प्रवर्त्तितव्यं यथा तस्य राजर्षेरनुकम्पनीया भवामीति अन्यथा स्मरत माम्। उपायाऽकरणे जीवलोकं त्यक्ष्यामीति भावः।

(४) विमर्शच्छेदीति। मयि सानुरागाऽपि सान्याऽनुमतिम् अपेक्षिष्यतेन देत्येवं विमर्शस्य वितर्कस्य छेदि नाशकर्त्तृ वचनमुक्तिः। कामस्य फलं एतदेव एतावदेव। अन्यत् विवाहादिकं यत्नस्य प्रयत्नस्य फलं जन्यम्। एतावदवस्थापि एतादृशशोकावस्थापिमामनुरागस्योद्भावनेन सुखयति आनन्दयतीत्यर्थः।

(१) अनन्हये दूरगतोऽस्या मनोरथोऽत्रमेयङ्कालहरणस्य। अस्याः शकुन्तलायाः मनोरथोऽभिलाषः दूरगतो दूरं दूरवर्त्तिनं

प्रियं। जनान्तिकम्। अणसूए! दूरगदो से मणोरहो अक्खमा इअं कालहरणस्स[1]।

अन। पिअंवदे! को णु उवाओ भवे? जेण अविलम्बिदं णिहुदं अ सहीए मणोरहं सम्पादेम्ह[2]।

प्रियं। णिहुदं त्ति चिन्तणीअं, सिग्घं त्ति ण दुक्करं[3]।

अन। कधं विअ[4]?।

प्रियं। णं सो वि राएसी इमस्सिं जणे सिणिद्धदिट्ठिआ सूइदाहिलासो इमेसुं दिअएसुं पजाअरकिसो विअ लक्खीअदि[5]।

राजा। आत्मानमवलोक्य। सत्यमित्थम्भूत एवास्मि। तथाहि

---

राजानं गतो विषयीकृतवान् गत्यर्थाऽकर्मकेति गमेः कर्तरि क्तः। तस्मात् कारणात्कालहरणस्य वृथाकालयापनस्येयं शकुन्तला अक्षमा अयोग्येत्यर्थः। वृथा कालक्षेपेहि स्मरणीया भविष्यतीतिभावः।

(२) प्रियम्बदे कोऽनुउपायो भवेत् येनाऽविलम्बितन्निभृतञ्च सख्या मनोरथं सम्पादयामः। परैरज्ञातं सच्छीघ्रं सख्याः कार्य्यं येनोपायेन भविष्यति सक० इति प्रश्नः।

(३) निभृतमिति। चिन्तनीयं शीघ्रमिति न दुष्करम्। गोपनार्थमेव यत्न आकलनीयो झटितिकरणन्तु सुकरमेवेत्यर्थः।

(४) कथमिव।

(५) ननु सोऽपि राजर्षिः अस्मिन् जने स्निग्धदृष्ट्या सूचिताऽभिलाष एषु दिवसेषु प्रजागरकृश इव लक्ष्यते। राजर्षिः दुष्यन्तोऽपि अस्मिन् जने शकुन्तलायां स्निग्धदृष्ट्या प्रणयसहितया दृष्ट्या सूचितेऽभिलाषो यस्य सएतादृशः सन् प्रजागरान्निद्राच्छेदात्कृश इव लक्ष्यतामस्मिति प्रश्नः। शकुन्तलादर्शनेन सोऽपि दशान्तरग्रस्त इत्यर्थः। चक्षुः प्रीतिर्मनः सङ्गः सङ्कल्पोत्पत्तिरेवच। निद्राच्छेदस्तनुत्वं च व्यावृत्तिर्विषयान्तरात्। लज्जाप्रणाश उन्मादो मूर्च्छामरणमेवचेति।

अशिशिरतरैरन्तस्तापैर्विवर्णमलीमसं
निशि निशि भुजन्यस्तापाङ्गप्रवर्त्तिभिरश्रुभिः ।
अनतिलुलितज्याघाताङ्कान् मुहुर्मणिबन्धनात्
कनकवलयं स्रस्तं स्रस्तं पुनः प्रतिसार्य्यते[1] ॥

प्रियं । विचिन्त्य । हला ! मअणलेहणं दाणिं से करीअदु, अहं तं सुमणोगोविदं कदुअ देवदासेवाबदेसेण तस्स रणो हत्थं पावइस्सं[2] ।

अन । सहि ! रोअदि मे सुउमारो एसो पओओ, किं वा सउन्तला भणादि[3] ।

शकु । सहीणिओओवि विकप्पीअदि ![4] ।

---

(१) अशिशिरेति । अशिशिरतरैरुष्णतरैः अन्तस्तापैः तथा भुजे न्यस्तान्न्यासीकृतादयाङ्गान्नेत्रान्तभागात्प्रवर्त्तिभिः पातिभिः अश्रुभिः । विवर्णञ्चतन्मलीमसम् आदौविशिष्टवर्णरहितं पश्चान्मलीमस मलदूषितम् । मलीमसन्तुमलीनं कच्चरं मलदूषितमित्यमरः कनकस्य स्वर्णस्य वलयं कटकम् । न अतिलुलिताया दृढबद्धाया ज्याया मौर्व्या आघातेनाङ्कश्चिह्न यस्मिन्तत् । मणिबन्धनाद्ध्वान्तटलेति बन्धनं अधिकरणे करणाऽधिकरणयोश्चेति ल्युट् । मणीनां तन्नामक द्रव्याणां बन्धन पाणिपन्थितस्मान्निशि निशि प्रतिरात्रं मुहुर्वारं वारं प्रतिसार्य्यते स्वस्थानन्नीयत इत्यर्थः ।

(२) अयि मदनलेखनमिदानीमस्याः क्रियताम् । अहं तत्सुमनोगोपितं कृत्वा देवतासेवापदेशेन तस्य राज्ञो हस्तं प्रापयिष्यामि । भावप्रकाशिकालिपिर्हिलेखनम् । लेखप्रस्थापनैः स्निग्धैर्वीक्षितैर्मृदुभाषितैः । दूतीसंप्रेषणैर्नार्य्या भावाऽभिव्यक्तिरिष्यत इत्युक्तः । देवतासेवाऽपदेशेन अनेन पुष्पेण देवताऽर्चनङ्क्रियतामित्यनेन छलेनेत्यर्थः ।

(३) सखि रोचते मे सुकुमार एष प्रयोगः किं वा शकुन्तला भणति ।

(४) सखी नियोगोऽपि विकल्प्यते । अपिः किंशब्दार्थे । किं विकल्प्यत अपि तु नेत्यर्थः ।

प्रियं । तेण हि अत्तणो उवण्णासाणुरूवं चिन्तेहि ललिदपदावलिबन्धं गीदिअं[1] ।

शकु । चिन्तेमि, किन्तु अवहीरणाभीरुअं वेवदि मे हिअअं[2] ।

राजा । विहस्य

अयं स ते तिष्ठति सङ्गमोत्सुको,
विशङ्कसे भीरु यतोऽवधीरणाम् ।
लभेत वा प्रार्थयिता न वा श्रियं,
श्रिया दुरापः कथमीप्सितो भवेत्[3] ॥

अपि च

अयं स, यस्मात् प्रणयावधीरणा-
मशङ्कनीयां करभोरु ! शङ्कसे ।

(१) तेन हि आत्मन उपन्यासाऽनुरूपां चिन्तय ललितपदाऽऽवलिबन्धां गीतिकाम् । ललिताभिः मञ्जुलाभिः पदानां सुप्तिङन्तरूपाणां आवलिभिः बन्धो रचनाविशेषो यस्याः सा ताम् ।

(२) चिन्तयामि किन्तु अवधीरणाभीरुकं वेपते मे हृदयम् ।

(३) अयमिति । हे भीरु अप्राणिजातेश्च रज्ज्वादिपर्युदासादुवर्णान्ताद्भीरुशब्दात्स्त्रियामूङि यूस्त्र्याख्याविति नदीत्वादम्बार्थेति ह्रस्वः । यतो यस्मात् अवधीरणां हेलां विशङ्कसे सोयं समीपवर्त्तिजनः ते तव सङ्गमे सम्बन्धे उत्सुकस्तिष्ठति । स्थाधातोर्लटि शपि पाघ्रेति तिष्ठादेशः प्रार्थयिता जनः श्रियं चञ्चलेत्यन्वर्थनामवतीं लक्ष्मीं लभेत वा न लभेत वा । वाद्वयमुभयत्राऽनिश्चयबोधकं श्रिया ईप्सित आप्तुमिष्टः । आप्धातौ सनि तदन्तात् क्तप्रत्यये आप्ज्ञप्यृधामीतीत्वम् । दुरापः दुःखेनलभ्यः कथं भवेन्न कथमपीत्यर्थः । नलोकेति निषेधाच्छ्रियेत्यत्र न षष्ठी ।

(४) अयमिति । करभौ करप्रदेशविशेषाविव ऊरू यस्याः सा

उपस्थितन्त्वां प्रणयोत्सुको जनो,
न रत्नमन्विष्यति, मृग्यते हि तत्[1] ॥

सख्यौ । अइ अत्तगुणावमाणिणि ! को णाम सन्दावणिव्वाणहेतुअं सारदीअं ज्जोसं आदवत्तेण णिवारेदि[2] ? ।

शकु । सस्मितम् । णिओइदाम्हि[3] । इत्युपविष्टा चिन्तयति ।

राजा । स्थाने खलु विस्मृतनिमेषेण चक्षुषाप्रियामवलोकयामि । यतः

उन्नमितैकभ्रूलतमाननमस्याः पदानि रचयन्त्याः ।
पुलकाञ्चितेन कथयति मय्यनुरागं कपोलेन[4] ॥

उद्धृतरपदादीमिप्य इत्यह् । नटीत्वादम्बार्येति हस्व । मणिबन्धादाकनिष्ठं करस्य करभोवहिरित्यमरः यस्माज्जनात् अशङ्कनीया प्रत्याख्यातुमयोग्याम् । प्रणयस्य याच्ञायाः अवधीरणामवहेलनां शङ्के । प्रणयोत्सुकः प्रार्थनोद्युक्तः सोयञ्जनस्त्वामुपस्थित समीपे प्राप्तः हि यस्मात् । रत्नं हीरकादिः नान्विष्यति ग्राहकमिति शेषः । तत् रत्नं ग्राहकैर्मृग्यते । अयं श्लोको बहुषु प्राचीनपुस्तकेषु न दृश्यते ।

(१) अयि आत्मगुणावमानिनि को नाम सन्तापनिर्व्वाणहेतुका शारदी ज्योत्स्नाम् आतपत्रेण निवारयति । आत्मनो गुणान् सौन्दर्य्यादीन् अवमन्यत इति विग्रहः । अवहेलनाभयेनेति भावः ।

(२) नियोजितास्मि ।

(३) स्थाने इति । विस्मृतो निमेषो येन तत्तेन पक्षपात रहितेनेत्यर्थः । प्रियां प्रियभूतां शकुन्तलां यदवलोकयामि पश्यामि तत्स्थाने युक्तम् ।

(४) उन्नमितैकेति । पदानि सुप्तिङन्तरूपाणि रचयन्त्यागीतिकायामिति शेषः । अस्याः शकुन्तलाया उन्नमिता एका भ्रूलता यस्मिन्तत् एतादृशम् आननं वदनं कर्त्तृ मयि अनुरागं पुलकाञ्चितेन

शकु । हला ! चिन्तिदा मए गीदिआ, असण्णिहिदाणि उण लेहणसाहणाणि[1] ।

प्रियं । णं इमस्सिं सुओदरसुउमारे णलिणीवत्ते पदच्छेदभत्तीए णहेहिं आलिहीअदु[2] ।

शकु । यथोक्तं रूपयित्वा । हला ! सुणाध दाव सङ्गदत्था ण व त्ति[3] ।

उभे । अवहिदह्म[4] ।

शकु । वाचयति

तुज्झ ण आणे हिअअं, मम उण मअणो दिवावि रत्तिं पि ।
णिक्किव ! दावइ बलिअं तुअ हत्थमणोरहाइ अङ्गाइम्[5] ॥

राजा । अवसरः खल्वयमात्मानं दर्शयितुम् । सहसोपसृत्य ।

---

कपोलेन गण्डस्थलेन कथयति प्रकाशयति । इदं क्रमनामकनाटकाङ्गम् । क्रमः सञ्चिन्त्यमानाप्तिरिति धनञ्जयः ।

(१) अयि चिन्तिता मया गीतिका असन्निहितानि पुनर्लेखनसाधनानि । हृदये सर्वमाकलितं मसीपात्रादयस्तु समीपे न सन्तीत्यर्थः ।

(२) नन्वस्मिन् शुकोदरसुकुमारे नलिनीपत्रे पदच्छेदभक्त्या नखैरालिख्यताम् । शुकस्य तन्नामकपक्षिणः उदरवद् सुकुमारे मृदुले ।

(३) अयि शृणुतं तावत् सङ्गतार्था नवेति । सङ्गतोऽर्थो यस्याः सा ।

(४) अवहिते स्वः ।

(५) तव न जाने हृदयं, मम पुनर्मदनो दिवाऽपि रात्रिमपि । निष्कृप तापयति बलीयस्त्वद्धस्तमनोरथाया अङ्गानि । हे निष्कृप कृपारहित तव हृदयं चित्तं न जाने मयि साभिलाषं निरभिलाषं वेत्येवन्न जाने इत्यर्थः । तव हस्ते मनोरथोऽभिलाषो यस्या एतादृश्या ममाङ्गानि अस्मच्छरीराणि । दिवाऽपि रात्रिमपि अहर्दिवं व्याप्य अत्यन्तसंयोगे द्वितीया । तापयति । सन्तापं करोति । चौरादिकस्तापेः कर्त्तरि लट् ।

तपति तनुगात्रि ! मदनस्त्वामनिशं मां पुनर्दहत्येव।
ग्लपयति यथा शशाङ्कं न तथाहि कुमुद्वतीं दिवसः[1]॥

सख्यौ। विलोक्य सहर्षमुत्थाय। साअदं जधासमीहिदफ-
लस्स अविलम्बिणो मणोरहस्स[2]।

शकु। उत्थातुमिच्छन्ति।

राजा। अलमलमायासेन।

सन्दष्टकुसुमशयनान्याशुविमर्द्दितमृणालवलयानि।
गुरुपरितापानि न ते गात्राण्युपचारमर्हन्ति[3]॥

शकु। ससाध्वसमात्मगतम्। हिअअ ! तथा उत्तम्मिअ
दाणिं ण किम्पि पडिवज्जसि[4]।

अन। इदो सिलादलेकदेसं अणुगेह्नदु महाभाओ[5]।

शकु। किञ्चिदपसरति।

(१) तपतीति। तनु कृशं गात्रं शरीरं यस्याः साऽङ्गगात्रि सम्बोधने इति ङीप्। मदनः कामस्त्वामनिशम्निरन्तरं तपति। माम्पुनः। पुनस्त्वर्थे। दहत्येव दाहं करोत्येव हि यतः दिवसः शशाङ्कं चन्द्रमसं यथा ग्लपयति ग्लानङ्करोति तथा कुमुद्वतीन्न करोतीत्यर्थः।

(२) स्वागतं यथासमीहितफलस्याऽविलम्बिनो मनोरथस्य। मनोरथस्याविलम्बिनोचिरोत्पन्नस्य समीहितफलस्य वाञ्छितफलभृतस्य भवतः स्वागतमित्यर्थः।

(३) सन्दष्टेति। आशु शीघ्रं विमर्द्दितानि म्रदितानि मृणालानां विसानां वलयानि कटकानि यैस्तानि। सन्दष्टं छादितं कुसुमस्य पुष्पस्य शयनं यैस्तानि। अतएव गुरुःपरितापो येषु तानि एतादृशानि ते गात्राणि तव शरीराणि उपचारन्नार्हन्ति परदुःखकारितया स्वदुःखनिवर्त्तककर्मान्तरं कर्त्तुं योग्यानीत्यर्थः।

(४) हृदय तथोत्ताम्येदानीन्नकिमपि प्रतिपद्यसे।

(५) इतः शिलातलैकदेशम् अनुगृह्णातु महाभागः। अनुगृह्णातु उपवेशनेनाऽनुगृहीतं करोत्वित्यर्थः।

राजा। उपविश्य। कच्चित् सखीं वो नातिबाधते शरीरतापः[१]?

प्रियं। सस्मितम्। दाणिं लद्धोषधो उवसमं गमिस्सदि[२]।

शकु। सलज्जा तिष्ठति।

प्रियं। महाभाअ! दोसुम्पि वो अस्सोणाणुराओ पच्चक्खो, सहीसिणेहो उण मं पुणरुत्तवादिणीं करेदि[३]।

राजा। भद्रे! नैतत् परिहार्य्यं विवक्षितं, ह्यनुक्तमनुतापं जनयति[४]।

प्रियं। तेण हि सुणादु अज्जो[५]।

राजा। अवहितोऽस्मि।

प्रियं। अस्समवासिणो जणस्स रस्सा अत्तिहरेण होदव्वं त्ति णं एसो धम्मो[६]।

---

(१) वो युष्माकं बहुवचनस्य वस्नसाविति वसादेशः। सखीं शकुन्तलामित्यर्थः। शरीरस्य ताप उपतापः नातिबाधते कच्चित् शमताङ्गतः किमित्यर्थः। कच्चित्कामप्रवेदन इत्यमरः।

(२) इदानीं लब्धौषध उपशमं गमिष्यति। लब्धमोषधं यस्येति विग्रहः। उपशमं शान्तिम्। तस्य चिन्तयाऽलमितिभावः। इदमक्षर संघातनामकं लक्षणम्। वर्णनाक्षरसंघातश्चित्रार्थैरक्षरैर्मितैरित्युक्तेः।

(३) महाभाग द्वयोरपि युवयोरन्योन्याऽनुरागः प्रत्यक्षः सखी-स्नेहः पुनर्मां पुनरुक्तवादिनीं करोति। प्रत्यक्षो नानुमेयः स्पष्टत्वेनानुभूय मानत्वात् तथापि सख्याः शकुन्तलाया स्नेहः प्रीतिर्मां पुनरुक्तवादिनीं कथितस्यकथनं पुनरुक्तिर्नचेहतदस्ति किन्तु शकुन्तलाभिप्रायैः कथितप्रायत्वात्। तां वदन्ति तच्छीलाम् एतादृशीं करोतीत्यर्थः।

(४) भद्र इति। एतत् बुद्धिस्थं विवक्षितं वक्तुमिष्टं न परिहार्य्यं परिहारे निवारणेऽयोग्यम् अनुक्तं सदुपतापं सन्तापं जनयति। प्रादुर्भावं करोतीत्यर्थः। [(५) तेन हि शृणोत्वार्य्यः।

(६) आश्रमवासिनो जनस्य राज्ञाऽर्त्तिहरेण भवितव्यमिति ननु एष धर्मः। अर्त्तिहरेण पीड़ाहरेण। भवितव्यमिति भूधातोर्योग्यार्थे तव्यत्।

राजा। अथ्यत्परं किन्तत्[1]।

प्रियं। तेण हि इअं णो पिअसही तुमं ज्जेव उद्दिसिअ भअवदा मअणेण इमं अवत्यन्तरं पाविदा, ता अरिहसि अब्भुववत्तीए जीविदं से अवलम्बिदुं[2]।

राजा। भद्रे! साधारणोऽयं प्रणयः, सर्व्वथानुगृहीतोऽस्मि[3]।

शकु। अनसूयामवलोक्य। हला! अलं वो अन्तेउरविरहपज्जुस्सुएण राएसिणा उवरुद्धेण[4]।

राजा।

इदमनन्यपरायणमन्यथा हृदयसन्निहिते! हृदयं मम।
यदि समर्थयसे मदिरेक्षणे! मदनवाणहतोऽपि हतः पुनः[5]॥

---

(१) अथ्यत्परमस्मन्निष्ठं तत्पीडानिवृत्तिकारणं किं वर्त्तते शेषः। किं शब्दः प्रश्ने।

(२) तेन हि इयमः प्रियसखी त्वामेवोद्दिश्य भगवता मदनेनेदमवस्थान्तरं प्रापिता तदर्हसि अभ्युपपत्त्या जीवितमस्या अवलम्बयितुम्। उद्दिश्य मनसि विषयीकृत्य इदंमवस्थान्तरं लज्जात्यागरूपं दशान्तरं प्रापिता भगवता मदयतीति मदनः कामस्तेन तस्मादभ्युपपत्त्या कृपया अस्याः शकुन्तलाया जीवितमवलम्बयितुं धारयितुमर्हसीत्यर्थः। प्रतीकाराभावेत्वन्तदशाभविष्यतीति भावः। तथाच वात्स्यायनः ह्रीत्यागोन्मादमूर्च्छान्ता इत्यनङ्गदशादर्शित।

(३) भद्र इति। अयं प्रणयो याच्ञा साधारण उभयोः समानः सर्वथा सर्वप्रकारेण। प्रकारवचने थालिति थाल्। अनुगृहीतोस्मि अनुकम्पितोस्मीत्यर्थः तयेतिशेषः।

(४) अलं वोऽन्तःपुरविरहपर्य्युत्सुकेन राजर्षिणोपरुद्धेन। साहित्यदर्पणकारस्तु विधूत नामकोऽङ्गमुदाजहार। तस्य च लक्षणं कृतस्यानुनयस्यादौ विधूतस्त्वपरिग्रह इति।

(५) इदमिति। हे हृदयसन्निहिते चित्तसमीपावस्थिते अन्या परायणम् आश्रयणं यस्य तत् नाऽन्यपरायण मनन्यपरायणं सर्वना-

अन। बहुवल्लहा क्खु राआणो सुणीअन्ति, ता जधा इमं णो पिअसही बन्धुअणसोअणीआ ण होदि तधा करिस्सदि[1]।

राजा। भद्रे! किं बहुना

परिग्रहबहुत्वेऽपि द्वे प्रतिष्ठे कुलस्य मे।
समुद्ररसना चोर्वी सखी च युवयोरियम्[2]॥

उभे। णिव्वुदह्म[3]।

शकु। हर्षं सूचयति।

प्रियं। जनान्तिकम्। अणसूए! पेक्ख पेक्ख मेहवादाहदं विअ गिह्मे मोरीं क्खणे क्खणे पच्चाअदजीविदं पिअसहीं[4]।

---

ऽत्युत्पत्तिमात्रे पुम्बद्भाव इति पुम्बत्। इदं मम हृदयं यदि अन्यथाऽन्यपरतया समर्थयसे। हे मदिरेक्षणे मत्तखञ्जनाविवेक्षणे नयने यस्याः सा सम्बुद्धौ चेत्येकारः। चपलनेत्र इत्यर्थः। तदा मदनस्य कामस्य वाणेन हतो विद्धोऽपि पुनर्हतस्तवाशया हत इत्यर्थः। हतस्य हननमयोग्यमिति भावः।

(१) बहुवल्लभाः खलु राजानः श्रूयन्ते तद्यथेयमः प्रियसखी बन्धुजनशोचनीया न भवति तथा करिष्यति।

(२) परिग्रहेति। परिग्रहाणां पत्नीनां बहुत्वेऽपि समुद्रा अंध्ययएव रसना मेखला यस्याः सा तथोक्तोर्वी युवयोः इयं सखी चेमे द्वे मे मम कुलस्य प्रतिष्ठे प्रतिष्ठा भूते। इदमुदाहरणन्नामनाटकाङ्गम्। यत्रा उत्कर्षोऽभिधानात्। सोत्कर्षं स्यादुदाहृतिरित्युक्तेः।

(३) निर्वृत्ते स्वः। सानन्दीभूते स्वः इत्यर्थः।

(४) अनसूये पश्य पश्य मेघवाताहतामिव ग्रीष्मे मयूरीं क्षणे क्षणे प्रत्याऽऽगतजीविता प्रियसखीम्। मेघवातेन मेघागमानिलेनाहतां ताडितां सतसम्बन्धामिति यावत्। ग्रीष्मे तत्तापसन्तप्तां मयूरीम् इव प्रत्यागतजीवितां राजाङ्गीकरणेन प्राप्तजीवितां। प्रिया चासौ

शकु । हला ! मरिसावेध लोअपालं, जं अह्मेहिं विस्सम्भपलाविणीहिं उवआरादिक्कमेण भणिदं[1] ।

सख्यौ । सस्मितम् । जेण तं मन्तिदं, सो ज्जेव मरिसावेदु, अस्सस्स को अच्चओ[2] ।

शकु । अरिहदि क्खु महाराओ इमं विसोढुं, परोक्खं वा ण किं को मन्तेदि[3] ? ।

राजा । सस्मितम्

अपराधमिमं ततः सहिष्ये,
यदि रम्भोरु ! तवाङ्गसङ्गसृष्टे ।
कुसुमास्तरणे क्लमापहेऽत्र
स्वजनत्वादनुमन्यसेऽवकाशम्[4] ॥

---

सखीव ताम् । पुम्वत्कर्मधारयेति पुम्वद्भावः । क्षणे क्षणे मुहुर्मुहुरित्यर्थः । पश्य पश्येति वीप्सायां द्विरुक्तिः ।

(१) अयि मर्षयतं लोकपालं यदस्माभिर्विस्रम्भप्रलापिनीभिरुपचारातिक्रमेण भणितम् । विस्रम्भं विश्वासं प्रलपन्तीति विस्रम्भप्रलापिन्यस्ताभिस्ताच्छील्ये णिनिस्तत ऋन्नेभ्य इति ङीप् । अस्माभिरुपचारातिक्रमेण पूजातिक्रमेण यद्भणितमुक्तं लोकपालं राजानं मर्षयतम् ।

(२) येन मन्त्रितं स एव मर्षयतु अन्यस्य कोऽत्ययः (दोषः)

(३) अर्हति खलु महाराज इमं विसोढुं परोक्षं वा न किं को मन्त्रयति । परोक्षमक्ष्णः परमिति विग्रहे प्रतिपरेति सूत्रेणाच् प्रत्ययविधानसामर्थ्यादव्ययीभावः । मन्त्रयति कथयति ।

(४) अपराधेति । हे रम्भोरु रम्भा कदलीस्तम्भौ इवोरू यस्याः सा तत्सम्बुद्धौ । तव अङ्गानां हस्तपादादीनां सङ्गेन संसर्गेण सृष्टे युक्ते सृजूयुक्तौ क्तः । क्लमापहे तापहारिणी अत्र समीपवर्तिनी कुसुमास्तरणे पुष्पशयने स्वजनत्वादात्मीयजनत्वादवकाशं यद्यनुमन्यसे ततस्तस्मात् इममपराधं सहिष्ये ।

प्रियं। सोपहासम्। णं एत्तिकेण उण तुट्टो भविस्सदि[1]?।

शकु। सरोषमिव। विरम विरम दुव्विणीदे! एदावत्थं गदाए मए कीलसि[2]?।

अन। वहिः सदृष्टिक्षेपम्। पिअम्बदे! एस तवस्सिमिअपोदओ इदोतदो दिसादिट्ठी णूणं मादरं पब्भट्टं अण्णेसदि, ता संजोजेमि णं[3]।

प्रियं। हला! चवलो क्खु एसो, ण णं संजोजइदुं एआइणी पारेसि, ता अहंपि सहाअत्तणं करिस्सं[4]।

इत्युभे प्रस्थिते।

शकु। हला! इदो अण्णदो ण वो गन्तुं अणुमण्णे, जदो असहाइणीह्मि[5]।

उभे। सस्मितम्। तुमं दाव असहाइणी, जाए पुहवीणाहो समीवे वट्टदि[6]। इति निष्क्रान्ते।

---

(१) नन्वेतावन्मात्रेण पुनस्तुष्टो भविष्यति। भवानिति शेषः।

(२) विरम विरम दुर्विनीते एतावदवस्थां गतया मया क्रीडसि। विरमेत्यत्र व्याङ्परिभ्यो रम इति परस्मैपदम्।

(३) प्रियम्बदे एष तपस्विमृगपोतकः इतस्ततो दत्तदृष्टिर्नूनं मातरं प्रभ्रष्टामन्विष्यति तत्संयोजयाम्येनम्। तपस्वी कृपार्हो मृगस्य पोतकः शिशुः। प्रभ्रष्टां स्वदेशादन्यत्रगताम्।

(४) अयि चपलः खल्वेष नैनं संयोजयितुमेकाकिनी पारयसि तदहमपि, सहायत्वं करिष्यामि।

(५) अयि इतोऽन्यतो न वो गन्तुमनुमन्ये यतोऽसहायिन्यस्मि। असहायिनी द्वितीयरहिता एकाकिनीति यावत्।

(६) त्वं तावदसहायिनी यस्याः पृथिवीनाथः समीपेवर्त्तते। राजसमीपे स्थितायाः भवत्याः भयाभावेन सहायान्तरानपेक्षितनिरर्थः।

शकु । कथं गदाओ ज्जेव पिअसहीओ[1] ।

राजा । सुन्दरि ! अलमावेगेन, नन्वयमाराधयिता जनस्ते सखीभूमौ वर्त्तते । तदुच्यताम्

किं शीकरैः क्लमविमर्द्दिभिरार्द्रवातं
सञ्चालयामि नलिनीदलतालवृन्तम् ? ।
अङ्के निधाय चरणावुत पद्मताम्रौ
संवाहयामि करभोरु ! यथासुखन्ते[2] ? ॥

शकु । ण माणणीएसु जणेसु अत्ताणं अवरालइस्सं[3] ।

इति अवस्थासदृशमुत्थाय प्रस्थातुमिच्छति ।

राजा । अवष्टभ्य । सुन्दरि[4] ! अपरिनिर्व्वाणो दिवसः, इयञ्च ते शरीरावस्था ।

उत्सृज्य कुसुमशयनं नलिनीदलकल्पितस्तनावरणम् ।
कथमातपे गमिष्यसि परिबाधाकोमलैरङ्गैः[5] ? ॥

---

(१) कथङ्गते एव प्रियसख्यौ ।

(२) किमिति । हे करभोरु क्लमम् अङ्गग्लानिं विमर्दयन्तीति तैः । शीकरैः जलकणैः आर्द्रो वातो यस्य तत् । शीतगुणसंयुक्तपवन इत्यर्थः । नलिन्याः कमलिन्या दलं पत्रम् । दलं पत्रं छदः पुमानित्यमरः । तदेव तालवृन्तम् तालपत्रकृतव्यजनं सञ्चालयामि किम् । उत इति तर्के । पद्मवत् ताम्रौ ताम्रवर्णौ ते तव चरणौ पादौ अङ्के निधाय । यथासुखं सुखमनतिक्रम्य यथार्थेऽव्ययीभावः सम्भावयामि । अङ्गमर्दनं करोमीत्यर्थः । संवाहनं वाहने स्यादङ्गारादेरङ्गमर्द्दनमिति विश्वकोषः । इदं मालानामकं लक्षणम् । मालास्यादभिष्टार्थे नैकार्थप्रतिपादकमित्युक्तेः ।

(३) न माननीयेषु जनेषु आत्मानमपराधयिष्यामि ।

(४) सुन्दरीति । अपरिनिर्वाणः सर्वतस्तापेनारहितः ।

(५) उत्सृज्येति । नलिन्याः कमलिन्याः दलं पत्रं तेन कल्पितं विरचितम् स्तनयोः कुचयोरावरणमाच्छादकवस्तु यस्याः सा

इति वेलान्निवारयति ।

शकु । मुञ्च मुञ्च मं, ण क्खु अत्तणो पहवामि, अधवा सहीमेत्तसरणा किं दाणिं एत्थ करिस्सं[1] ।

राजा । धिग्व्रीड़ितोऽस्मि ।

शकु । णक्खु अहं महाराअं भणामि, दे्व्वं उवालहामि[2] ।

राजा । अनुकूलकारि दैवं कथमुपालभ्यते? ।

शकु । कधं दाणिं ण उवालहिस्सं ? जं मं अत्तणो अणीसं कदुअ परगुणेहिं लोहावेदि[3] ।

राजा । स्वगतम् ।

अप्यौत्सुक्ये महति दयितप्रार्थनासु प्रतीपाः,
काङ्क्षन्त्योऽपि व्यतिकरसुखं कातराः स्वाङ्गदाने ।
आबाध्यन्ते न खलु मदनेनैव लब्धान्तरत्वा-
दाबाधन्ते मनसिजमपि क्षिप्तकालाः कुमार्य्यः[4] ॥

---

एतादृशी त्वम् । परिबाधया कामपीडया । कोमलैः शिथिलीभूतैरङ्गैः पुष्पस्य शयनमुत्सृज्य त्यक्त्वाऽऽतपे कथं गमिष्यसि । गम्लृगतौ लृट् गमेरिट्परस्मैपदेष्विती‌ट् ।

(१) मुञ्च मुञ्च मां न खल्वात्मनः प्रभवामि अथ वा सखीमात्रशरणा किमिदानीम् अत्र करिष्यामि । सखीमात्रं शरणं यस्याः सा । अत्र अस्मिन्विषये किङ्करिष्यामीत्यर्थः । अन्यो रक्षको नास्तीति भावः ।

(२) न खल्वहं महाराजं भणामि दैवमुपालभे ।

(३) कथमिदानीं नोपालप्स्ये यन्मामात्मनोऽनीशां ( परतन्त्रां ) कृत्वा परगुणैर्लोभयति ।

(४) अप्यौत्सुक्य इति । महति औत्सुक्ये उत्सुकस्य भावः तस्मिन्नौत्सुक्ये उद्योगेऽपि । दयितस्य प्रार्थना याच्ञा तासु । प्रतीपाः पराङ्मुखाः । व्यतिकरेण परस्परसम्बन्धेन सुखं काङ्क्षन्त्योऽपि इच्छन्त्योऽपि । स्वस्यात्मनोऽङ्गम् अवयवादिकं तस्य दाने समर्पणे । का-

शकु । गच्छत्येव ।

राजा । न कथमात्मनः प्रियं करिष्ये ? उपसृत्य पटान्तमवलम्बते ।

शकु । पोरव ! रक्खु रक्खु विणयं, इदोतदो इसिओ सञ्चरन्ति[१] ।

राजा । सुन्दरि ! अलं गुरुजनाद्भयेन, न ते विदितधर्म्मा[२]तत्रभवान् कण्वः खेदमुपयास्यति । यतः

गान्धर्व्वेण विवाहेन बह्व्योऽथ मुनिकन्यकाः ।
श्रूयन्ते परिणीतास्ताः पितृभिश्चानुमोदिताः[३] ॥

दिशोऽवलोक्य । कथं प्रकाशं निर्गतोऽस्मि ? शकुन्तलां हित्वा पुनस्तैरेव पदैर्निवर्त्तते ।

शकु । पदान्तरे प्रतिनिवृत्य साङ्गभङ्गम् । पोरव !

---

तथा अधीराः कुमार्य्यः पुरुषसम्पर्करहिताः । लब्धान्तरत्वात्प्राप्तावसरत्वान्मदनेनेव कामेनेव नाबाध्यन्ते न पीड्यन्ते । चिम्न आक्षिप्तः कालः समयो याभिस्ता एतादृश्यः सत्यः मनसिजमपि काम अपि आबाधन्ते पीडयन्तीत्यर्थः खल्विति निश्चये ।

(१) पौरव रक्ष रक्ष विनयं इतस्तत ऋषयः सञ्चरन्ति । ते गत्वा कण्वाय निवेदयेयुरिति भावः । अन्तराय इतेन ऋषिदर्शनादिना शकुन्तलायाः संरब्धवचसाऽनियतप्राप्तिकारणमिदं तोटकमङ्गम् । संरब्धं तोटकं वच इत्युक्तेः ।

(२) विदिता धर्म्मा येन सः । धर्मादनिच् केवलादित्यनिच् ।

(३) गान्धर्व्वेणेति । बह्व्यः अनेकाः वोतोगुणवचनादिति ङीष् । मुनेः कन्यका गान्धर्व्वेण तन्नामकेन विवाहेन । गान्धर्व्वः समयान्मिथ इति स्मृतिः । परिणीता ऊढाः । ताः कन्यकाः पितृभिर्गुरुभिरानुमोदिताश्च श्रूयन्ते श्रुश्रवणे कर्म्मणि लट् । इतिहासादावितिशेषः ।

अणिच्छापुरओवि सम्भासणमेत्तपरिचिदो अअं जणो ण विसुमरिदव्वो[1] ।

राजा । सुन्दरि !

त्वं दूरमपि गच्छन्ती हृदयं न जहासि मे ।
दिवावसाने छायेव पुरोमूलं वनस्पतेः[2] ॥

शकु । स्तोकमन्तरं गत्वा आत्मगतम् । हद्धी हद्धी ! इमं सुणिअ ण मे चलणा पुरोमुहा पसरन्ति, भोदु, इमेहिं पज्जन्तकुरवएहिं ओवारिदसरीरा भविअ पेक्खिस्सं दाव से भावाणुबन्धं[3] । तथा कृत्वा स्थिता ।

राजा । कथमेवं प्रिये ! अनुरागैकरसं[4] मामुत्सृज्य निरपेक्षैव गतासि ?

अनिर्द्दयोपभोगस्य रूपस्य मृदुनः कथम् ।
कठिनं खलु ते चेतः शिरीषस्येव बन्धनम्[5] ॥

---

(१) पौरव अनिच्छापुरकोऽपि सम्भाषणमात्रपरिचितोऽयञ्जनो न विस्मर्त्तव्यः ।

(२) त्वमिति । हे सुन्दरि दिवावसाने अपराह्णकाले पुरोऽ दूरमपि गच्छन्ती गमेः शतरि उगितश्चेति ङीपि आच्छीनद्योरितिनुम् । वनस्पतेरश्वत्थादेश्छाया मूलं मूलप्रदेशं इव त्वं मे हृदयं चित्तन्न जहासि ओहाक्त्यागे कर्त्तरि लट् ।

(३) हा धिक् हा धिक् इदं श्रुत्वा नमे चरणौ पुरोमुखौ प्रसरतः भवतु एभिः पर्य्यन्तकुरुवकैः अपवारितशरीराभूत्वा प्रेक्षिष्ये तावदस्य भावाऽनुबन्धम् । अपवारितशरीरा प्रच्छन्नशरीरा भावस्याऽभिप्रायस्य अनुबन्धमनुवर्त्तनम् ।

(४) अनुराग एव प्रीतिरेवैको मुख्यः रसो यस्य स तं शृङ्गारमात्र रसाश्रयमित्यर्थः। मामुत्सृज्य त्यक्त्वा निरपेक्षैव अपेक्षामकृतवत्येव ।

(५) अनिर्द्देति । अनिर्द्दयोपभोगस्य गाढालिङ्गनादिव्यापाररहितस्य । मृदुनः कोमलस्य । कोमलं मृदुलं मृदुरित्यमरः । ते

शकु । इदं सुणिअ ण मे अत्थि विहवो गच्छिदुं[१] ।

राजा । सम्प्रति प्रियाशून्ये किमस्मिन् लतामण्डपे करोमि ? अग्रतोऽवलोक्य । हन्त ! व्याहतं मे गमनम् ।

मणिबन्धाद्गलितमिदं संक्रान्तोशीरपरिमलं तस्याः ।
हृदयस्य निगड़मिव मे मृणालवलयं स्थितं पुरतः[२] ॥

सबहुमानमादत्ते ।

शकु । हस्तं विलोक्य । अम्मो ! दोब्बल्लसिढ़िलदाए परिब्भट्टं एअं मिणालवलअं ण मए परिसादं[३] ।

राजा । मृणालवलयमुरसि निक्षिप्य । अहो स्पर्शः !

अनेन लीलाभरणेन ते प्रिये !
विहाय कान्तं भुजमत्र तिष्ठता ।
जनः समाश्वासित एष दुःखभा-
गचेतनेनापि सता न तु त्वया[४] ॥

---

कृषस्याऽऽकारस्य । चेतश्चित्तं शिरीषस्य शिरीषनामकपुष्पस्य बन्धनमिव कठिनं कथञ्जातम् ।

(१) इदं श्रुत्वा नमेऽस्ति विभवो गन्तुम् ।

(२) मणीति । मणिबन्धः पाणिग्रन्थिस्तस्मात् गलितं भ्रष्टम् इदं संक्रान्तः सम्मीलित उशीरस्य परिमलः मनोहरगन्धो यस्मिन्तत् । मे मम हृदयस्य चित्तस्य निगडमिव बन्धनशृङ्खला मिव तस्याः शकुन्तलायाः मृणालस्य विसस्य वलयं कटकं पुरतोऽग्रे स्थितम् । छागतिनिवृत्तावित्यस्मात्क्तप्रत्ययेषु मास्येतोत्वम् ।

(३) अहो दौर्बल्यशिथिलतया परिभ्रष्टम् इदं मृणालवलयन्न मया परिज्ञातम् ।

(४)अनेनेति । हे प्रिये कान्तं सुन्दरं भुजं बाहुं विहाय अत्र तिष्टताऽनेन ते तव लीलाभरणेन लीलाया विलासस्याभरणे नाभूषणेन अचेतनेन सताऽपि दुःखं विरहस्य वेदनां भजति इति दुःखभाक् भजोण्विरिति ण्विः । एष जनः त्वया न समाश्वासित अपि तु समाश्वासित एवेत्यर्थः ।

शकु। अदोवरं ण समत्थह्मि बिलम्बिदुं, भोदु एदेण ज्जेव अबदेसेण अत्ताणं दंसइस्सं[१]। इत्युपसर्पति।

राजा। दृष्ट्वा सहर्षम्। अये! जीवितेश्वरी मे प्राप्ता! परिदेवनानन्तरं प्रसादेनोपकर्त्तव्योऽस्मि खलु दैवस्य[२]।

पिपासाक्षामकण्ठेन याचितञ्चाम्बु पक्षिणा।
नवमेघोज्झिता चास्य धारा निपतिता मुखे[३]॥

शकु। राज्ञः सम्मुखे स्थित्वा। अज्ज! अद्धपधे सुमरिअ एदस्स हत्थब्भंसिणो मिणालवलअस्स कदे पडिणिवुत्तह्मि, कधिदं मे हिअएण तए गहिदं त्ति, ता णिक्खिव एदं, मा मं अत्ताणञ्च मुणिअणेसु पआसइस्सदि[४]।

---

(१) अतः परं न समर्थास्मि विलम्बयितुं भवतु एतेनैवापदेशेनात्मानं दर्शयिष्यामि। छलेनाभिसन्धीयमानत्वादधिबलनामकमङ्गम्। अधिबलमभिसन्धिश्छलेनेत्युक्तेः।

(२) अये इति। जीवितेश्वरी प्राणेश्वरी। परिदेवनानन्तरं खेदानन्तरम्। दैवस्य नियत्याः। प्रसादेन प्रसन्नतया। प्रसादस्तु प्रसन्नतेत्यमरः। उपकर्त्तव्यः उपकारे योग्योऽस्मीत्यर्थः।

(३) पिपासेति। पिपासया क्षामः शुष्कः कण्ठो यस्य सः एतादृशेन पक्षिणा चातकेन चाम्बुजलं याचितम्। नवश्चासौ मेघस्तेन उज्झिता त्यक्ता धारा जलधारा अस्य चातकस्य मुखे निपतिता। चकारौ उभयोः पौर्वापर्य्यं बोधयतः। अनेनदुष्यन्ताऽऽयत्तचित्तायाः शकुन्तलायाः समागमेन गर्भवीजोद्भेदाक्षेपकमङ्गम्। गर्भवीजसमुद्भेदादाक्षेपः परिकीर्त्तितइत्युक्तेः।

(४) आर्य अर्द्धपथे स्मृत्वैतस्य हस्तभ्रंशिनो मृणालवलयस्य कृते प्रतिनिवृत्तास्मि कथितं मे हृदयेन त्वया गृहीतमिति तन्निक्षिपेदं मा मामात्मानञ्च मुनिजनेषु प्रकाशयिष्यसि। केन कथितं मया गृहीतन्त्वदित्याह कथितमिति। मुनिजनेष्विति। विलम्बो नकर्त्तव्य इति भावः।

राजा । एकेनाभिसन्धिना[1] प्रत्यर्पयामि ।

शकु । केण उण[2] ? ।

राजा । यदीदमहमेव यथास्थानं निवेशयामि ।

शकु । अ ! का गदी, भोदु एदं दाव[3] । इत्युपसर्पति ।

राजा । इतः शिलापट्टैकदेशं संश्रयावः । इत्युभौ परिक्रम्योपविष्टौ ।

राजा । शकुन्तलाया हस्तमादाय । अहो स्पर्शः !

हरकोपाग्निदग्धस्य दैवेनामृतवर्षिणा ।
प्ररोहः सम्भृतोभूयः किंस्वित् कामतरोरयम्[4] ? ॥

शकु । स्पर्शं रूपयित्वा । तुवरदु तुवरदु अज्जउत्तो[5] ।

राजा । सहर्षमात्मगतम् । इदानीमस्मि[6] विश्वसितः, भर्तुराभाषणपदमेतत् । प्रकाशम् । सुन्दरि ! नातिश्लिष्टः सन्धिरस्य मृणालवलयस्य, यदि तेऽभिमतं तदन्यथा घटयिष्यामि ।

---

(१) एकेनेति । अभिसन्धिना प्रतिज्ञया ।

(२) केन पुनः ।

(३) आः का गतिर्भवत्वेवन्तावत् ।

(४) हरहति । हरस्य भर्गस्य कोपाग्निः कोपादुत्थितो योऽग्निस्तेन दग्धस्य दहभस्मीकरणे क्तः । कामतरोर्मदनवृक्षस्य । अमृतं वर्षति तच्छीलस्तेन ताच्छील्येणिनिः । सुधाभिः सिञ्चता । दैवेन दैवन्दिष्टं भागधेयमित्यमरः । अयं हस्तः । भूयः पुनः प्ररोहः अङ्कुरः सम्भृतः आसादितः किंस्वित् । किंस्विच्छब्दौ प्रश्नवितर्कबोधकौ । इदं रूपनामकं नाटकाङ्गम् । रूपं वितर्कवद्वाक्यमित्युक्तेः ।

(५) त्वरतां त्वरतामार्य्यपुत्रः ।

(६) इदानीमिति । एतत् आर्यस्यश्वशुरस्य पुत्र इत्यर्थकमार्यपुत्रेतिपदं भर्तुः पत्युराभाषणपदं वाचकपदम् । तदुक्तम् आर्यपुत्रेति सम्बोध्य पतिः पत्नीजनेन चेति । अत इदानीमस्मिन्काले । दानी-

शकु । स्मितं कृत्वा । जधा दे रोअदि[1] ।

राजा । सव्याजं विलम्ब्य प्रतिमोच्य । सुन्दरि ! दृश्य-
तान् ।

अयं स ते श्यामलतामनोहरं
विशेषशोभार्थमिवोज्झिताम्बरः ।
मृणालरूपेण नवो निशाकरः
करं समेत्योभयकोटिमाश्रितः[2] ॥

शकु । ण दाव णं पेक्खामि, पवणकम्पिदकण्णुप्पलरेणुणा
कलुसीकिदा मे दिट्ठी[3] ।

राजा । सस्मितम् । यद्यनुमन्यसे, तदहमेनां वदनमारु-
तेन विशदां[4] करवाणि ।

शकु । तदो अणुकम्पिदा भवेअं, किन्तु ण अहं ण दे
वीससेमि[5] ।

---

इति दानीं प्रत्यये । इदमङ्गिति इग् । विश्वसितः प्राप्तविश्वासो-
स्मीत्यर्थः ।

(१) यथा ते रोचते । तथा क्रियतामिति शेषः ।

(२) अयमिति । अयं सः प्रसिद्धः नवो नवीनः निशाकरश्चन्द्रः
उज्झितं त्यक्तं अम्बरमाकाशं यस्यैतादृशः सन् । विशेषशोभार्थं शो-
भाप्रकर्षार्थम् इव श्यामलस्य भावः श्यामलता तस्य भावेति तत् । तया
मनोहरं सुन्दरम् । ते तव करं मृणालरूपेण समेत्य समागत्यो भय-
कोटिम् आश्रित । कुण्डलीभूय दृढं धृतवानितिभावः । करपक्षे
उज्झिताम्बरं यस्तरहितम् अम्बरं व्योमिवापसवीत्यमरः । श्याम-
लतामनोहरं कालिमामनोज्ञादर्कामित्यर्थः ।

(३) न तावदेनं प्रेक्षे पवनकम्पितकर्णोत्पलरेणुना कलुषीकृतामे
दृष्टिः । पवनेन वायुना कम्पितयोः सञ्चालितयोः कर्णोत्पलयोः
कर्णाटवतंसभूतयोः कमलयो रेणुना ।

(४) विशदां व्यक्ताम् । विशदः पाण्डुरे व्यक्त इति त्रिकाण्ड शेषः ।

(५) तदाऽनुकम्पिताभवेयं किन्तु पुनरहं नहे विश्वसिमि ।

राजा। मामैवं, नवो हि परिजनः सेव्यानामादेशात् परं न वर्त्तते।

शकु। अअं ज्जेव अज्ञाअरो अविस्सासजणओ[1]।

राजा। स्वगतम्। नाहमेवं रमणीयमात्मनः सेवावसरं शिथिलयिष्ये। मुखमुन्नमयितुं प्रवृत्तः।

शकु। प्रतिषेधं रूपयन्ती विरमति।

राजा। अयि मदिरेक्षणे[2]! अलमस्मादविनयाशङ्कया।

शकु। किञ्चिद्दृष्ट्वा व्रीडावनतमुखी (३) तिष्ठति।

राजा। अङ्गुलिभ्यां मुखमुन्नमय्य आत्मगतम्।

चारुणा स्फुरितेनायमपरिक्षतकोमलः।
पिपासतो ममानुज्ञां ददातीव प्रियाधरः[4]॥

शकु। परिस्साणमज्झरो विअ अज्जउत्तो[5]।

राजा। कर्णोत्पलसन्निकर्षादीक्षणरुद्धोऽस्मि। मुखमारुतेन चक्षुः सेवते[6]।

(१) अयमेवात्यादरोऽविश्वासजनकः।

(२) अयमिति। मदिरेक्षणे खञ्जनाविवनेत्रे चञ्चलनेत्र इत्यर्थः अस्मात् अस्मत्तः अविनयस्याशिष्टतायाः शङ्कयालमित्यर्थः।

(३) व्रीडयाऽवनतन्नम्रं मुखं यस्येति विग्रहः स्वाङ्गाच्चोपसर्जनादसंयोगोपधादितिङीष्।

(४) चारुणेति। अपरिक्षतेन दशनक्षताभावेन कोमलोऽयं प्रियायाः शकुन्तलाया अधरः ओष्ठः चारुणा चित्तहारिणा स्फुरितेन स्पन्दनेन पिपासतः पातुमिच्छतः मम अनुज्ञामाज्ञा ददातीव डुदाञ् दाने लट्।

(५) परित्राणमध्यर इवार्यपुत्रः। परित्राणं चक्षुः प्रविष्टधूल्याः सम्यक्त्राणं तस्मिन्मध्यरोऽधम इत्यर्थः।

(६) कर्णोत्पलेति। कर्णोत्पलस्य सन्निकर्षात्सान्निध्यादीक्षणमवरोधेण अभिरक्षीकरणाद्दर्शनेऽक्षमः।

शकु । भोदु पइकित्थदंसणह्मि संवुत्ता ! लज्जेमि उण अणुवआरिणो पिअआरिणो अज्जउत्तस्स[1] ।

राजा । सुन्दरि ! किमन्यत् ।

इदमप्युपकृतिपक्षे सुरभि मुखन्ते यदाघ्रातम् ।
ननु कमलस्य मधुकरः सन्तुष्यति गन्धमात्रेण[2] ॥

शकु । सस्मितम् । असन्तोसे उण किं करेदि[3] ? ।

राजा । इदमिति व्यवसितः[4] ।

शकु । वक्त्रं ढौकते ।

नेपथ्ये । चक्कवाअवहु ! आमन्तेहि सहअरं, णं उअत्थिदा रअणी[5] ।

शकु । कर्णं दत्त्वा ससम्भ्रमम् । अज्जउत्त ! एसा क्खु,

---

(१) भवतु प्रकृतिस्थदर्शनास्मि संवृत्ता । लज्जे पुनरनुपकारिणीं प्रियकारिणा आर्य्यपुत्रस्य ।

(२) इदमिति । हे सुन्दरि ! ते तव सुरभि सुगन्धि मुखं वदनं यदाघ्रातम् इदमप्येतदाघ्राणमप्युपकृतिपक्षे उपकारकल्पे पश्येति शेषः । ननु यस्मात् मधु करोतीति मधुकरः भ्रमरः कमलस्य गन्धमात्रेण न सन्तुष्यति सन्तोषन्नप्राप्नोतीति नापितु आस्वादं विनापि सन्तुष्यत्येवेति भावः ।

(३) असन्तोषेण पुनः किङ्करोति । मधुकर इति शेषः । तस्मात् इष्यात् भवानपीत्यर्थः ।

(४) इदमिति । इदङ्करोतीत्युक्त्वा व्यवसितश्चुम्बनार्थमुद्युक्तः शयनाऽधरपानादिनगराद्युपरोधनम् । स्नानाऽनुलेपने चैभिर्विर्जितो नातिविस्तर इत्यभियुक्तोक्त्या चुम्बनाऽभिनयनस्याऽङ्केनिषेधान्नतु चुम्बितवानित्यर्थः । कथमप्युन्नमितन्नचुम्बितन्तु इति वक्ष्यमाणश्लोकाऽनुरोधाच्च । शृङ्गारहास्येन विहितं वैदग्ध्यरस्य क्रीडितन्नर्म । वैदग्ध्यक्रीडितन्नर्म । विहितं शुद्धहास्येन सशृङ्गारभयेन चेति दर्पणः ।

(५) चक्रवाकवधु आमन्त्रयसहचरं ननूपस्थिता रजनी ।

(१) आर्यपुत्रैषा खलु तातकण्वस्य धर्मकनीयसी मम वृत्तान्तो-

तादिकसस्स धम्मकणीअसी मम वुत्तन्तोवलम्भणणि-मित्तं अज्जा गोदमी आअच्छदि, ता विडवान्तरिदो होहि[१] ।

राजा । तथा, इत्येकान्ते स्थितः ।

तत: प्रविशति पात्रहस्ता गौतमी ।

गौत । जादे ! अच्चाहिदं सुणिअ आअदा, एदं सान्ति-उदअं । दृष्ट्वा समुत्थाप्य च । इध देवदासहाइणी चिट्टसि[२] ?

शकु । दाणिं ज्जेव अणसूआपिअम्वदाओ मालिणीं ओदीसाओ[३] ।

गौत । शान्त्युदकेन शकुन्तलामभ्युक्ष्य जादे । णिराबा-धा मे चिरं जीव, अवि दे लहुसन्तावाइं अङ्गाइं ? इति स्पृशति[४] ।

शकु । अम्मो अत्थि विसेसो[५] ।

पलम्भननिमित्तं आर्य्या गौतम्यागच्छति तद्विटपान्तरितो भाव । उप लम्भननिमित्तं ज्ञानार्थम् ।

(१) तथेति । तथैवक्रियत इत्युक्का एकान्ते निर्जनस्थानेस्थित इत्यर्थः ।

(२) जाते अत्याहितं श्रुत्वा आगतेगच्छाम्त्युदकम् । इह देवता-सहायिनी तिष्ठसि । अत्याहितं भीतिजनकसन्तापम् । देवतासहा यिनी देवतामात्रसहायिनी । सहायन्तरजनरहितेति यावत् । एतादृशस्थले स्थातुमयुक्तमिति भावः ।

(३) इदानीमेव अनसूयाप्रियम्वदे मालिनीमवतीर्णे ।

(४) शान्त्युदकेनेति । अभ्युक्ष्य न्युक्षता करेणाऽभिषिच्य । न्युक्ष-ताऽभ्युक्षणं प्रोक्तमित्युक्तेः । जाते निराबाधा मे चिरञ्जीव अपि ते लघुसन्तापान्यङ्गानि । निराबाधा पीडारहिता । लघवः स्वल्पाः स-न्तापा येषु तानि ।

(५) अम्ब अस्ति विशेषः ।

गौत । परिणदो दिअसो, ता एहि उडअं ज्जेव गच्छह्म[१]।

शकु। कथञ्चिदुत्थाय स्वगतम् । हिअअ ! पढमं सुहोव-णदे मणोरहे कालहरणं करेसि, सम्पदं अणुभव दाव दुक्खं। पदान्तरे प्रतिनिवृत्तय । प्रकाशम् । लदाहर ! सन्दावहर ! आमन्तेमि तुमं पुणोवि परिभोअत्थं[२] ।

इति निष्क्रान्ते ।

राजा । पूर्व्वस्थानमुपेत्य सनिश्वासम् । अहो ! विघ्नवत्यः प्रार्थितार्थसिद्धयः[३] मया हि

मुहुरङ्गुलिसंवृताधरोष्ठं प्रतिषेधाक्षरविक्लवाभिरामम् ।
मुखमंसविवर्त्ति पक्ष्मलाक्ष्याः कथमप्युन्नमितं न चुम्बितन्तु[४]

(१) परिणतो दिवसः तदेह्युटजमेव गच्छावः । अत्र स्थित्वा-ऽलमिति भावः ।

(२) हृदय प्रथमं सुखोपनते मनोरथे कालहरणं करोषि साम्प्र-तमनुभव तावद्दुःखम् । लताग्टह सन्तापहर आमन्त्रयामि त्वां पुनरपि परिभोगार्थम् । कुलेन लताग्टहेत्यादि राज्ञः सम्बोधनम् । सन्ता-पहर कामजनिततापहर, त्वां परिभोगार्थं सङ्गमार्थम् । आमन्त्रयामि निवेदयामीत्यर्थः । व्याजोक्त्येदमभूताहरणं नामाङ्गम् । अभूताहरणं छद्मेति धनिकः ।

(३) अहो इति । प्रार्थितानामर्थानां प्रयोजनानाम् अर्थोऽभि-धेयरैवस्तु प्रयोजननिवृत्तिष्विलमरः । सिद्धयः निष्पत्तयः सिद्धि-र्निष्पत्तियोगयोरितिविश्वः । विघ्नवत्यो विघ्नयुक्ता भवन्ति अहो आश्चर्ये ।

(४) मुहुरिति । यस्य पक्ष्माणिलोमानि सन्ति इति पक्ष्मलः सिध्मा-दित्वात् लच् । पक्ष्मले अक्षिणी यस्याः सा इति विग्रहः । बहुब्रीहौ सक्थ्यक्ष्णोरिति षच् षिद्गौरादिभ्य इति ङीष् । प्रफुल्लनयना इत्यर्थः। अधरश्च ओष्ठश्चैतयोः समाहारो धरोष्ठम् । प्राण्यङ्गत्वादेकवद्भावः । ओत्वोष्ठयोः समास इति पररूपम् । मुहुरङ्गुलीभिः संवृतमधरोष्ठं यस्मैतादृशम् । प्रतिषेधाक्षरैः विक्लवं विह्वलम् अभिरामं सुन्दरञ्च ।

क्व नु खलु सम्प्रति गच्छामि ? अथवा इहैव प्रियापरिभुक्ते लतामण्डपे मुहूर्त्तं[1] तिष्ठामि । सर्व्वतोऽवलोक्य ।

तस्याः पुष्पमयी शरीरलुलिता शय्या शिलायामियं,
कान्तो मन्मथलेख एष नलिनीपत्रे नखैरर्पितः ।
हस्ताद्भ्रष्टमिदं बिसाभरणमित्यासज्जमानेक्षणो
निर्गन्तुं सहसा न वेतसगृहाद्दीशोऽस्मि शून्यादपि[2]॥

विचिन्त्य ! । अहो[3] धिगसम्यक् चेष्टितं प्रियां समासाद्य कालहरणं कुर्व्वता मया । तदिदानीम्

रहः प्रत्यासत्तिं यदि सुवदना यास्यति पुन-
र्न कालं हास्यामि, प्रकृतिदुरवापा हि विषयाः ।

अंसे विवर्त्तते भ्रमत इति अंसविवर्त्तिताक्षीत्यर्थः । मुखं कथमपि उन्नमितं नतु चुम्बितमित्यर्थः ।

(१) मुहूर्त्तं घटिकाद्वयम् । मुहूर्त्तमह्नो रात्रेश्च प्रोचः पञ्चदशांशकम् । केचिच्छुभक्रियायोग्य कालं केचिद्घटीद्वयमित्युक्तेः । अथवा मुहूर्त्तं क्षणम् ।

(२) तस्या इति । शिलायां शिलोपरि । शरीरेण लुलिता विमर्द्दिता तस्याः शकुन्तलायाः । पुष्पमयी पुष्पप्रचुरा । प्राचुर्य्ये मयट् । इयं शय्या । नलिन्याः कमलिन्याः पत्रे पलाशे । नखैरर्प्पितश्चिह्नित एष कान्तः मनोज्ञः । तस्या मन्मथलेखः । हस्तात् भ्रष्टं स्खलितं तस्या इदं बिसाभरणं मृणालकटकं इति एवं रूपेण आसज्जमानम् ईक्षणं यस्य सः आसक्तिप्राप्तेक्षणोऽहम् । शून्यात् शकुन्तलारहितादपि वेतसगृहात् सहसा निर्गन्तुम् ईशोऽस्मि न समर्थोऽस्मीत्यर्थः ।

(३) अहो इति । प्रियां शकुन्तलां समासाद्य प्राप्य कालहरणं इष्टवस्तुसाधने विलम्बं कुर्वता मयाऽसम्यक् अनुष्ठितम् अहो शोके । अहो धिगर्थे शोके च करुणार्थविषादयोरितिमेदिनीकोषः ।

(१) रह इति । पुनरन्यस्मिन्काले । सुवदना सुष्ठु वदनं यस्याः सा शकुन्तला रहः एकान्ते यदि प्रत्यासत्तिं समीपं यास्यति

इति क्लिष्टं विघ्नैर्गणयति च मे मूढ़हृदयं
प्रियायाः प्रत्यक्षं किमपि च तथा कातरमिव ॥

नेपथ्ये । भो भो राजन् !

सायन्तने सवनकर्म्मणि सम्प्रवृत्ते
वेदिं हुताशनवतीं परितः प्रकीर्णाः ।
छायाश्चरन्ति बहुधा भयमादधानाः
सन्ध्याभ्रकूटकपिशाः पिशिताशनानाम् ॥

राजा । आकर्ण्य सावष्टम्भम् । भो भोस्तपस्विनो! माभैष्ट माभैष्ट, अयमहमागत एव इति निष्क्रान्तः ।

तृतीयोऽङ्कः ।

---

तदा कालं न हास्यामि न विलम्बं करिष्यामीत्यर्थः । हि यस्मात्कारणात् विषया इन्द्रियार्थाः प्रकृतिदुरवापा स्वभावदुर्लभाः विघ्नैर्गोतस्यागमनरूपैरन्तरायैः क्लिष्टं मे मम मूढ़हृदयं प्रियायाः शकुन्तलायाः इत्युक्तरूपेण प्रत्यक्षं गणयति गणसङ्ख्याने चुरादित्वाण्णिच् । तथा किमपि कातरमधीरमिव च भवतीत्यर्थः । इयं प्राप्तप्राशा प्रियस्वदाऽनस्तूये न्मगपिशुसहायार्थं गते सति शकुन्तलाऽनुसरणादेरुपायाद्गौतस्यागमनरूपापायाच्चानिर्द्धारितैकसम्बन्धात् । उक्तञ्च उपायाऽपायशङ्काभ्यां प्राप्त्यंशाप्राप्तिसम्भवइति ।

( २ ) सायन्तन इति । सायम्भवः सायन्तनस्तस्मिन् । सायं चिरं प्राह्णेप्रगेऽव्ययेभ्य स्ट्युट्युलौ तुट्चेति सायं शब्दात् ट्युप्रत्यये तस्य तुडागमश्च । सायंकालीन इत्यर्थः । सवनकर्म्मणि अग्निहोत्राख्ये यागकर्मणि सम्प्रवृत्ते सम्यगारब्धे सति हुताशनवतीम् । वेदिं परितः वेद्याः सर्वभागे । अभितः परितः समयेति परितशब्दयोगे वेदिशब्दाद्द्वितीया । प्रकीर्णाः व्याप्ताः अतएव भयमादधाना भयमुत्पादयन्त्यः सन्ध्याभ्रकूटकपिशाः सन्ध्याया अभ्रकूटा मेघस्तोमास्त इव कपिशाः कृष्णपीतवर्णाः । पिशितम्मांसमश्नन्तीति पिशिताशना राक्षसास्तेषाम् । बहुधा बहुप्रकाराः संख्यायाविधार्थे धेति धाप्रत्ययः । छायाश्चरन्ति । चरगतिभक्षणयोः कर्त्तरि लट् । अदृश्यशरीरा अपि वह्निसामीप्यात्यतन्तीभिश्छायाभिरनुमीयन्त इतिभावः ।

इति श्रीपञ्चोपनामकडमरुवल्लभकृतायां शकुन्तलाव्याख्यायांतृतीयोऽङ्कः ।

प्रियं । जुज्जदि[1] । इति तदेव कर्म्माभिनयतः ।

नेपथ्ये । अयमहं भोः !

अन । कर्णं दत्त्वा । सहि ! अदिधिणा विअ णिवेदिदं[2] ।

प्रियं । णं उड़ए सस्सिहिदा सउन्तला[3] ।

अन । आं, अज्ज उण असस्सिहिदा हिअएण, तेण हि भोदु एत्तिकेहिं कुसुमेहिं पओजणं[4] । इति प्रस्थिते ।

पुनर्नेपथ्ये । आः कथमतिथिं मां परिभवसि[5] ।

विचिन्तयन्ती यमनन्यमानसा
तपोनिधिं वेत्सि न मामुपस्थितम् ।
स्मरिष्यति त्वां न स बोधितोऽपि सन्
कथां प्रमत्तः प्रथमं कृतामिव[6] ॥

( १ ) युज्यते ।

( २ ) सखि अतिथिनेव निवेदितम् ।

( ३ ) ननूटजे सन्निहिता शकुन्तला ।

( ४ ) आ अद्य पुनरसन्निहिता हृदयेन, तेन हि भवतु एतावद्भिः कुसुमैः प्रयोजनम् । हृदयेन चेतसा असन्निहिता अनवस्थिता दुष्यन्त गतहृदयेतिभावः ।

( ५ ) आ इति । आशब्दः कोपे । आस्तु स्यात्कोपपीडयोरिति-कोषात् । कथं परिभवसि कथंतिरस्करोषि । अनादरानर्हत्वमतिथि शब्देन बोधयति ।

( ६ ) विचिन्तयन्तीति । अनन्यमानसा नान्यस्मिन्मानसं मनोयस्याः सैतादृशी । अन्याऽनपेक्षनहृदयेत्यर्थः । यं जनं विचिन्तयन्ती स्मरन्ती सती उपस्थितं समीपे प्राप्तम् । तपांसि निधीयन्ते अस्मिन्निति तपोनिधिः एतादृशं मां नवेत्सि नजानासि । स चिन्तितो जनः बोधितोऽसि स्मापितोऽपि । प्रथमं कथादौ कृतामुपन्यस्तां कथां वाक्प्रबन्धं प्रमत्त इवाऽवधानरहित इव त्वां नस्मरिष्यति मयाऽस्याः सम्पर्कः कृत इति स्मृतिन्नप्राप्स्यति । यद्यप्यङ्के विवाहोभोजनं प्राप्नोत्स गो-

उभे । श्रुत्वा विमर्षे ।

प्रियं । हद्धी हद्धी ! तं ज्जेव संवुत्तं जं मए चिन्तिदं, कस्मिं पि पूआरिहे अवरद्धा सुसहिअआ पिअसही सउन्तला [१] ।

अन । पुरोऽवलोक्य । ण क्खु जस्सिं कस्सिं पि एस दुव्वासा सुलहकोवो महेसी तधा सविअ अविरलपादतुवराए गदीए पडिणिउत्तो [२] ।

प्रियं । को अस्सो हुदवहादो पहवदि दहिदुं ! ता गच्छ पाएसु पडिअ णिउत्तावेहि, जाव से अहं पि अग्घोदअं उवकप्पेमि [३] ।

अन । तह [४] । इति निष्क्रान्ता ।

प्रियं । पदान्तरे स्खलितं रूपयन्ती । अम्मो ! आवेअक्खलिदाए गदीए परिब्भट्ठं मे अग्गहत्थादो पुप्फभाअणं [५] ।

---

स्त्युरत तयोरत्यनेन शापप्रदानविषिद्धत्वयाऽवधानेन नेपथ्ये तद्वर्णनदोषः । निक्षेपस्तु प्रधानविषयएवेति चिन्तनीयम् ।

(१) हा धिक् हा धिक् तदेव संवृत्तं यन्मया चिन्तितम् । कस्मिन्नपि पूजार्हे अपराद्धा शून्यहृदया प्रियसखी शकुन्तला । संवृत्तं जातम् । पूजार्हे सत्कर्तुं योग्ये । शून्यहृदया अन्यस्मिन्निति शेषः । राजमात्रनिहित हृदयेत्यर्थः ।

(२) न खलु यस्मिन्कस्मिन्नपि एष दुर्वासाः सुलभकोपो महर्षिः तथा शप्त्वाऽविरलपादत्वरया गत्या प्रतिनिवृत्तः । यस्मिन्कस्मिन्नपि अपराधरहितजनेऽपि । अविरलाः पादा यस्यां साऽविरलपादा तथाभूता त्वरा यस्यां सा तया ।

(३) कोऽन्यो हुतवहात्प्रभवति दग्धुं, तद्गच्छ पादयोः पतित्वा निवर्त्तय यावदस्याऽहमपि अर्घोदकमुपकल्पयामि ।

(४) तथा । [परिभ्रष्ट च्युतम् ।

(५) अहो आवेगः स्खलितगत्या परिभ्रष्टं मेऽग्रहस्तात्पुष्पभाजनम्

इति पुष्पावचयं रूपयति ।

अन । प्रविश्य । सहि ! सरीरी विअ कोवो कस्स अणुणअं सो गेह्लदि ! किन्तु उण सो अणुकम्पिदो मए

प्रियं । एदं ज्जेव तस्सिं बहुदरं, ता कधेहि कधं तए पसादिदो[२] ? ।

अन । जदो णिवत्तिदुं ण इच्छदि, तदो पाएसुं पडिअ विस्सविदो मए, भअवं ! पढमं त्ति पेक्खिअ अविसा-दतवप्पहावस्स दुहिदिजणस्स अअं अवराहो भअदा मरिसिदव्वो त्ति[३] ।

प्रियं । तदो तदो[४] ।

अन। तदो तेण भणिदं, ण मे वअणं अणधा भविदुं अरि-हदि किन्तु आहरणाहिसाणदंसणेण मे सावो णिउ-त्तिस्सदित्ति मन्तअन्त ज्जेव अन्तरिदो[५] ।

---

(१) सखि शरीरीव कोपः कस्यानुनयं स गृह्लाति । किन्तु पुनः सोऽनुकम्पितो मया । स दुर्वासाः मयाऽनुकम्पितोऽनुकम्पाकारित । कृपादयाऽनुकम्पास्स्यादित्यमर । ।

(२) एतदेव तस्मिन्बहुतरं तत् कथय कथं त्वया प्रसादितः । बहु-तरम् अधिकतरं त्वया समर्हणैः कथं केन प्रकारेण प्रसादितः प्रसन्नी-कृतः । प्रसादस्तु प्रसन्नतेत्यमरः । सुलभकोपतया प्रसादनं तस्मि-न्दुर्लभमिति भावः ।

(३) यदा निवर्त्तितुन्नेच्छति तदा पादयोः पतित्वा विज्ञापितो मया, भगवन् प्रथममिति प्रेक्ष्याऽविज्ञाततपःप्रभावस्य दुहितृजनस्या-ऽयमपराधो भवता मर्षयितव्य इति । निवर्त्तितुम्प्रत्यागन्तुम् । अवि-ज्ञातस्तपसः प्रभावो येन स एतादृशस्य । दुहितृजनस्येत्यनेन शापा-नर्हत्वं सूचितम् ।

(४) ततस्ततः ।

(५) ततस्तेन भणितं न मे वचनमन्यथा भवितुमर्हति किन्त्वाऽऽभ-रणाऽभिज्ञानदर्शनेनास्याः शापो निवर्त्तिष्यत इति मन्त्रयमाण एवान्त-

प्रियं । मए दाणिं आस्ससिदुं, अत्थि तेण राएसिणा संपत्थिदेण अत्तणो णामाङ्किदं अङ्गुलीअअं सुमरणीअं त्ति सउन्तलाए हत्थे सअं ज्जेव परिधाविदं, एस ज्जेव तस्सिं साहीणो उवाओ भविस्सदि[1] ।

अन । सहि ! एहि देवकज्जं दाव से णिव्वत्तेह्म[2] ।

इति परिक्रामति ।

प्रियं । अवलोक्य । अनसूए ! पेक्ख दाव वामहत्थविणिहिदवअणा आलिहिदा विअ पिअसही तग्गदाए चिन्ताए अत्ताणंपि ण विभावेदि किं उण आगन्तुअं[3]

अन । हला ! दोसुं ज्जेव णो हिअए एसो वुत्तन्तो चिट्ठदु, रक्खणीआ क्खु पइदिपेलवा पिअसही[4] ।

---

रितः । तेन ऋषिणा । अन्यथाभवितुं व्यर्थीभवितुम् । अभिज्ञायते निर्ज्ञायते अनेन इत्यऽभिज्ञानं करणेल्युट् । अङ्गुलीयकम् ।

(१) शक्यमिदानीमाश्वसितुम् अस्ति तेन राजर्षिणा सम्प्रस्थितेनात्मनो नामाङ्कितमङ्गुलीयकं स्मरणीयमिति शकुन्तला हस्ते स्वयमेव परिधापितम् एष एव तस्मिन्स्वाऽधीन उपायो भविष्यति । स्वाधीन इतरानधीनः ।

(२) सखि एहि देवकार्य्यं तावदस्या निर्वर्त्तयावः ।

(३) अनसूये प्रेक्षस्व तावद्वामहस्तविनिहितवदना आलिखितेव प्रियसखी तद्गतया चिन्तयाऽऽत्मानमपि न विभावयति किम्पुनरागन्तुकम् । वामहस्ते विनिहितं वदनं मुखं यस्याः सा । आलिखितेव चित्रकृतेव । तद्गतया राजविषयया । आगन्तुकमतिथिम् । आगन्तुरतिथिर्नागृहागतमित्यमरः ।

(४) सखि द्वयोरेवाऽऽवयोर्हृदये एषवृत्तान्तस्तिष्ठतु रक्षणीया खलु प्रकृतिपेलवा प्रियसखी । एषवृत्तान्तो दुर्वासावृत्तान्तः । प्रकृतिपेलवा प्रकृत्या स्वभावेन पेलवा कोमला । प्रियसखी शकुन्तला रक्षणीया न प्रकाशनार्हा ।

प्रियं। को दाव उसोदएण णोमालिअं सिञ्चदि[१]।

इत्युभे निष्क्रान्ते।

विष्कम्भकः[२]।

ततः प्रविशति सुप्तोत्थितः कण्वशिष्यः।

शिष्यः। वेलोपलक्षणार्थमादिष्टोऽस्मि[३] तत्रभवता प्रवासात् प्रतिनिवृत्तेन कण्वेन, तत्प्रकाशं निर्गत्यावलोकयामि कियदवशिष्टं रजन्या इति। परिक्रम्यावलोक्य च। हन्त[४]! प्रभातप्राया रजनी। तथाहि

यात्येकतोऽस्तशिखरं पतिरोषधीना-
माविष्कृतारुणपुरःसर एकतोऽर्कः[५]।

(१) कस्तावदुष्णोदकेन नवमालिका सिञ्चति।

(२) विष्कम्भक इति। वृत्तानां दुर्वासोनुग्रहवृत्तान्तानां वर्त्तिष्यमाणानाम् अङ्गुलीयदर्शनादिना शकुन्तलाऽभिज्ञानरूपाणां निदर्शकत्वान्मध्यमपात्राभ्यां प्रयोजितत्वाच्च शुद्धोयम्। लक्षणञ्चोक्तम्।

(३) वेलोपलक्षणार्थमिति। भवता पूज्येन प्रवासात् सोमतीर्थात् प्रतिनिवृत्तेनागतेन कण्वेन तन्नामक ऋषिणा वेलोपलक्षणार्थं वेलाया होमवेलाया उपलक्षणार्थं निश्चयार्थम् आदिष्टोस्मि। तत्तस्मात्कारणात् प्रकाशन्निर्गत्य बहिर्देशं गत्वा रजन्या रात्रेः कियदवशिष्टं इत्यवलोकयामि।

(४) हन्तेति। रजनी रात्रिः प्रभातप्राया। अचिरभावि प्रातःकाला हन्तेति हर्षे। हन्तः स्याच्छोकहर्षयोरिति कोशात्।

(५) यात्येकेति। एकत एकस्यान्दिशि सार्वविभक्तिकस्तसिः ओषधीनां पतिश्चन्द्रः। अस्तशिखरम् अस्तस्य चरमगिरेः शिखरम् अग्रभागं याति प्राप्नोति। एकतोऽन्यदिशि एके मुख्यान्यकेवला इतिकोषः अर्कः सूर्यः। आविष्कृतः प्रकटितोऽरुणनामा पुरःसरो यस्यैतादृशः। प्राकाश्ये प्रादुराविः स्यादित्यमरकोषः तेजसोर्द्वयन्तस्य चन्द्रसूर्यतेजसः। युगपदेकदा। व्यसनञ्चोदयञ्च

तेजोद्वयस्य युगपद्व्यसनोदयाभ्यां
लोको नियम्यत इवैष दशान्तरेषु ।

अपिच ।

अन्तर्हिते शशिनि सैव कुमुद्वतीयं
दृष्टिं न नन्दयति संस्मरणीयशोभा ।
इष्टप्रवासजनितान्यबलाजनेन
दुःखानि नूनमतिमात्रदुस्सहानि२ ॥

अपिच ।

कर्कन्धूनामुपरि तुहिनं रञ्जयत्यग्रसन्ध्या,
दार्भं मुञ्चत्युटजपटलं वीतनिद्रो मयूरः ।
वेदिप्रान्तात् खुरविलिखितादुत्थितश्चैष सद्यः
पश्चादुच्चैर्भवति हरिणः स्वाङ्गमायच्छमानः२ ॥

---

ताभ्याम् । विपदभ्युदयाभ्यां कर्त्तृभ्यामित्यर्थः । दशान्तरेषु सुखदुःखरूपावस्थान्तरेषु एष लोको नियम्यत इव सङ्कोच्य स्थाप्यत इवेत्युत्प्रेक्षा ।

(३) अन्तर्हित इति । संस्मरणीयशोभा संस्मरणीया स्मरणयोग्या शोभा यस्या एतादृशीयं सैव कुमुद्वती । शशिनि चन्द्रमसि अन्तर्हिते अन्तर्धानङ्गते सति दृष्टिं मे न नन्दयति नाह्लादयति । चकाशा भावादितिभावः । अबलाजनेन स्त्रीजनेन इष्टस्य प्रियस्य प्रवासेन जनितानि उत्पन्नानि दुःखानि । अतिमात्रदुस्सहानि अतिकष्टाद्भरणीयानि नूनम् । अत्र नूनमित्यनेन स्वस्मिन्नपरिचितदाम्पत्यव्यवहारत्वं सूचितम् ।

(२) कर्कन्धूनामिति । अग्रसन्ध्या अग्राच सा सन्ध्या प्रातःसन्ध्या कर्कन्धूनां वदरीणामुपरि ऊर्द्धभागे तुहिनं तुषारं रञ्जयति । लोहितवर्णानां वदरीणामूर्द्धं तुहिनं निधाय रागप्रियत्वेन लोहितीकरोतीत्यर्थः । वीतनिद्रः वीता विगता निद्रा यस्यैतादृशः मयूरो दार्भं दर्भैः कुशैर्निर्वृत्तम् उटजपटलम् उटजस्य पर्णशालायाः पटलं छदाच्छादनं मुञ्चति भूमिमवरोहति । खुरविलिखितात् खुरैः शफैः विलिखिताद्विदारिताद्वेदिप्रान्ताद्वेदिपार्श्वादुत्थित एष हरिणः

अपिच ।

पादन्यासं क्षितिधरगुरोर्मूर्ध्नि कृत्वा सुमेरोः
क्रान्तं येन क्षयिततमसा मध्यमं धाम विष्णोः ।
सोऽयं चन्द्रः पतति गगनादल्पशेषैर्मयूखै-
रत्यारूढिर्भवति महतामप्यपभ्रंशनिष्ठा[१]॥

अनसूया । पटीक्षेपेण प्रविश्य । एव्वं णाम विसयपरम्मुहस्स जणस्स ण णिवडिदं, जधा तेण रण्णा सउन्तलाए अणज्जं आचरिदं त्ति[२] ।

शिष्यः । यावदुपस्थितां[३] होमवेलां गुरवे निवेदयामि ।

इति निष्क्रान्तः ।

मृगः स्वाङ्गं निजावयवम् आयच्छमानो विस्तारयन् सन् पश्चादनन्तर मुच्चैर्भवति ।

पादन्यासमिति । क्षयितानि क्षयं प्रापितानि तमांसि येनैतादृशेन येन चन्द्रमसा क्षितिधरेषु पर्वतेषु गुरोः श्रेष्ठस्य सुमेरोस्तन्नामकपर्वतस्य मूर्ध्नि शिखरे । पादन्यासं किरणन्यासं कृत्वा विष्णोर्वामनस्य मध्यमं धाम व्योम क्रान्तमाक्रान्तं सोऽयं चन्द्रः अल्पशेषैरल्पावशिष्टैः मयूखैः किरणैः सहितः गगनादाकाशात्पतति । महतामपि प्रधानानामपि अत्यारूढिः ऊर्ध्वारोहणम् । अपभ्रंश एव निष्ठा यस्याः सा अपभ्रंशनिष्ठापतनान्ता भवति । निष्ठानिष्पत्तियोगान्ता इत्यमरः ।

( २ ) एवन्नाम विषयपराङ्मुखस्य जनस्य न निपतितं यथा तेन राज्ञा शकुन्तलायामनार्य्यमाचरितमिति । विषयेषु इन्द्रियेषु पराङ्मुखस्य प्रवृत्तिरहितस्य जनस्य एवमसदाचरणमशिष्टाचारो न निपतितो नोपस्थितः । नाम कुत्सायाम् । यथा येन प्रकारेण । तेन राज्ञा दुष्यन्तेन । अनार्य्यन्निन्दितम् । आचरितं कृतम् ।

( ३ ) यावदिति । उपस्थितां प्राप्तां होमवेलां गुरवे कण्वाय निवेदयामि विज्ञापयामि यावदवधारणे । यावत्तावच्च साकल्येऽवधौमानेऽवधारणे इत्यमरः ।

अन । णं पहादा रअणी, ता सिग्घं सअणं परिच्चआमि, अधवा लहुं लहुं उदिदावि किं करिस्सं?, ण मे उइदेसु पहादकरणीएसु हत्थपाआ पसरन्ति, कामो दाणिं सकामो भोदु, जेण असच्चसन्धे जणे पिअसही सुद्धहिअआ पदं कारिदा[1] । स्मृत्वा[2] । अधवा ण तस्स राएसिणो अवराहो, दुव्वासासावो क्खु एसो पहवदि, अस्सधा कधं सो राएसो तादिसाइं मन्तिअ एत्तिअस्स कालस्स वात्तामात्तं पि ण विसज्जेदि ! । विचिन्त्य । ता इदो अहिण्णाणं अङ्गुलीअअं से विसज्जेम, अधवा दुक्खसीले तवस्सिजणे को अब्भत्थीअदु, णं सहीगामी दोसोत्ति ववसाइदुं पि ण पारेम्ह तादकस्सस्स वा पवासपडिणिउत्तस्स दुस्सन्तपरिणीदं आवण्णसत्तं सउ

(१) ननु प्रभाता रजनी, तच्छीघ्रं शयनं परित्यजामि, अथवा लघु लघूत्थिताऽपि किङ्करिष्यामि, नमे उचितेषु प्रभातकरणीयेषु हस्त-पाद प्रसरति, काम इदानीं सकामो भवतु, येनाऽसत्यसन्धे जने प्रिय-सखी शुद्धहृदया पदं कारिता । प्रकर्षं भात प्रकाशो यस्यां सा प्रभाता एतादृशी रजनी रात्रिरस्ति । उचितेषु योग्येषु अभ्यस्तेषु वा प्रभातकरणीयेषु प्रातःकृत्येषु । हस्तौ च पादौ चेतिद्वन्द्वः । प्राण्यङ्ग-त्वादेकवद्भावः । इदानीमस्मिन् काले कामो मन्मथः सकामः पूर्णकामः भवतु । येन कामेन असत्यसन्धे मिथ्याप्रतिज्ञे जने दुष्यन्ते पदं व्यव-सायम् । पदं व्यवसितित्राणेत्यमरः ।

(२) स्मृत्वेति । शापवृत्तान्तस्मरणमभिनीयेत्यर्थः ।

(१) अथवा न अस्य राजर्षेरपराधो दुर्वासःशापः खल्वेषः प्रभ-वति, अन्यथा कथं स राजर्षिस्तादृशानि मन्त्रयित्वा एतावतः कालस्य वार्त्तामात्रमपि न विसर्जयति, तदितोऽभिज्ञानमङ्गुलीयकं तस्य विसर्जयामः । अथवा दुःखशीलेपरिजने कोऽभ्यर्थ्यतां, ननु सखी-गामी दोष इति व्यवसाययितुमपि न पारयामः, तातकण्वस्य वा

न्तलं णिवेदिदुं, ता एत्थ दाणिं किं ण क्खु अह्मेहिं करणिज्जं[1]? ।

प्रियं । प्रविश्य । अणसूए! तुवर तुवर सउन्तलाए पत्थाणकोदूहलं णिव्वत्तिदुं[2] ।

अन । सविस्मयम् । सहि ! कधं विअ[3] ?

प्रियं । सुणाहि, दाणिं ज्जेव सुहसुत्तिआपुच्छणणिमित्तं सउन्तलाए सआसं गदह्मि[4]।

अन । तदो तदो[5] ? ।

प्रियं । तदो णं लज्जाअणदमुहीं परिस्सइअ सअं तादकस्सेण एव्वं अहिणन्दिदं, वच्छे ! दिट्ठिआ धूमोवरुद्धदिट्ठिणोवि जजमाणस्स पावअस्स ज्जेव मुहे आहुदी

प्रवासात्प्रतिनिवृत्तस्य दुष्यन्तपरिणीतामापन्नसत्त्वां शकुन्तलां निवेदयितुं तदिदानीं किन्नु खल्वस्माभिः करणीयम् ।

(२) अनसूये त्वरस्व त्वरस्व शकुन्तलायाः प्रस्थानकौतूहलं निर्वर्त्तयितुम् । प्रस्थाने यात्रायां यत्कौतूहलमुत्सुकता तन्निर्वर्त्तयितुं समापयितुम् ।

(३) सखि कथमिव ।

(४) शृणु इदानीमेव सुखसुप्तिकाप्रश्ननिमित्तं शकुन्तलायाः सकाशं गतास्मि । सुखसुप्तिका सुखेननिद्रा तस्याः प्रश्ननिमित्तं ज्ञानार्थम् । सकाशं निकटम् ।

(५) ततस्ततः ।

(१) ततः एनां लज्जावनतमुखीं परिष्वज्य स्वयं तातकण्वेनैवमभिनन्दितं वत्से दिष्ट्या धूमोपरुद्धदृष्टेरपि यजमानस्य पावकस्यैव मुखे आहुतिर्निपतिता सुशिष्यपरिगृहीतेव विद्या अशोचनीयासि संवृत्ता । अद्यैव त्वामृषिपरिरक्षितां कृत्वा भर्तुः सकाशं विसर्जयामि । लज्जयावनतमुखीं नम्रमुखीं एनां शकुन्तलामालिङ्ग्य क्रोडीकृत्य । आलिङ्गनं परिष्वङ्गः संश्लेष उपगूहनम् । अङ्कपालिः परिरम्भः क्रोडीकृतमिति हेमः । अभिनन्दितमानन्दीकृतम् । धूमे-

णिव्वडिदा, सुट्ठिस्सं परिदिस्सा विअ विज्जा असोअणीआसि मे संवुत्ता, अज्ज ज्जेव तुम दूसिपरिरक्खिदं करिअ भत्तुणो सआसं विसज्जेमि त्ति[1]।

अन। सहि! केण उण आचक्खिदो तादकस्सअअं वुत्तन्तो[2]।

प्रियं। अग्गिसरणं पविट्ठस्स किल सरीरं विणा छन्दोमईए वाआए[3]।

अन। सविस्मयम्। कधं विअ[4]?।

प्रियं। सुणाहि[5]। संस्कृतमाश्रित्य:[6]।

---

नोपरुद्धा दृष्टिर्यस्य सः। तस्य यजमानस्य। सुशिष्येण परिच्छेत्ता अधिगता विद्या इव मे मम त्वम् अशोचनीया शोकानर्हा संवृत्तासि जातासि। भर्त्तुः दुष्यन्तस्य सकाशन्निकटं विसर्जयामि प्रेषयामि।

(२) सखि केन पुनराख्यातस्तातकण्वस्याऽयं वृत्तान्तः। अयं शकुन्तलोद्वाहरूपो वृत्तान्तो वार्त्ता। केन जनेनाऽऽख्यातः कथितः।

(३) अग्निशरणं प्रविष्टस्य किल शरीरं विना छन्दोमय्या वाचा। अग्निशरीरमग्न्यर्गृहम्। शरीरं स्त्रहरत्रिलोरिति कोषः। शरीरं विनाऽशरीरिणी छन्दोमय्या पद्यात्मिकया वाचा वचनेन आख्यात इत्यनुकर्षः। छन्दः पद्येऽभिलाषे चेत्यमरः। किलेति वार्त्तायाम्। वार्त्तासम्भाव्ययोः किलेति कोषः।

(४) कथमिव।

(५) शृणु।

(६) संस्कृतमिति। पाणिन्यादिभिरन्वाख्यातां दैवीं वाचमनुसृत्य। यद्यपि शौरसेनी प्रयोक्तव्या तादृशेनाच्च योषितामित्युक्त्याऽत्र शौरसेनीभाषाप्रयोग आवश्यकस्तथापि वैदग्ध्यार्थन्तस्य प्रयोगेऽपि न क्षतिः। उक्तञ्च। योषित्सखीबालवेश्याकितवाप्सरसान्तथा। वैदग्ध्यार्थं प्रदातव्यं संस्कृतञ्चान्तरान्तरेति।

(१) दुष्यन्तेनेति। हे ब्रह्मन् हे ब्राह्मण दुष्यन्तेन तन्नामकेन राज्ञा आहितम् अर्पितं कृताधानमित्यर्थः। तेजः वीजम्। तेजः

दुष्यन्तेनाहितं तेजो दधानां भूतये भुवः ।
अवेहि तनयां ब्रह्मन्नग्निगर्भां शमीमिव[1]॥

अन । प्रियंवदामाश्लिष्य । सहि ! पिअं मे पिअं किन्तु अज्ज ज्जेव सउन्तला णीअदि त्ति उक्कण्ठासाहारणं परिदोसं अनुभवेमि[2] ।

प्रियं । सहि ! अह्मे कधं पि उक्कण्ठं विणोदइस्सामो, सा दाणिं तवस्सिणी णिव्वुदा होदु[3] ।

अन । तेण हि एदस्सिं चूअसाहावलम्बिदे णारिएल-समुग्गए एदंणिमित्तं ज्जेव मए कालहरणक्खमा केसरगुण्डा णिक्खित्ता चिट्ठदि, ता इमं णलिणीवत्त-

प्रभावे दीप्तौ च बले शुक्रेऽपीत्यमरः । भुवः पृथिव्याः भूतये ऐश्वर्याय दधानां धारयित्रीं तनयां शकुन्तलाम् । अग्निः गर्भे यस्यास्ता एतादृशीं शमीं वृक्षविशेषमिव अवेहि जानीहि । शमीदृष्टान्तेनास्या अभ्यन्तरे तेजस्वी शत्रुतापकर्त्ता चास्तीति सूचितम् ।

(२) सखि प्रियं मे प्रियं किन्त्वद्यैव शकुन्तला नीयत इति उत्कण्ठासाधारणं परितोषमनुभवामि । उत्कण्ठासाधारणमुत्कण्ठासहितम् । रागेऽत्वलब्धविषये वेदना महती तु या । संशोषणी तु गात्राणां तामुत्कण्ठां विदुर्बुधा इति ।

(३) सखि वयं कथमप्युत्कण्ठां विनोदयिष्यामः सेदानीं तपस्विनी निर्वृता भवतु । कथमपि केन प्रकारेणापि । उत्कण्ठां विनोदयिष्यामः । तपस्विनी कृपार्हा सा शकुन्तला । निर्वृता भवतु सुखयुक्ता भवतु । निर्वृतिः सुखितावस्तगमने च सुखे स्त्रियामिति मेदिनी ।

(४) तेन हि एतस्मिन् चूतशाखावलम्बिते नारिकेलसमुद्गक एतन्निमित्तमेव मया कालहरणक्षमा केशरगुण्डा निक्षिप्ता तिष्ठति तदिमां नलिनीपत्रसङ्गतां कुरु यावदस्या अहमपि गोरोचनां तीर्थमृत्तिकां दूर्वाकिसलयानि मङ्गलसमालभनं विरचयामि । चूतशाखायामाम्रवृक्षशाखायामवलम्बिते स्थापिते नारिकेलस्य समुद्गके

सङ्गदं करेहि, जाव से अहंपि गोरोअणं तित्थमित्तिअं दुव्वाकिसलआइं मङ्गलसमालहणां विरएमि[1]।

प्रियंवदा तथा करोति। अनसूया निष्क्रान्ता।

नेपथ्ये। गौतमि! आदिश्यन्तां शार्ङ्गरवशारद्वतमिश्राः वत्सां शकुन्तलां नेतुं सज्जीभवन्तु भवन्त इति।

प्रियं। अणसूए! तुवर तुवर, एदे क्खु हत्थिणाउरगामिणो इसीओ सद्दाविअन्ति[2]।

अनसूया। समालभनहस्ता प्रविश्य। सहि! एहि गच्छम्ह[3]। इति परिक्रामतः।

प्रियं। विलोक्य। एसा सुज्जोदए किदमज्जणा पडिच्छिदणीवारभाअणाहिं सोत्थिवाअणिआहिं तावसीहिं

---

पुटके। केशरस्य गुण्डा चूर्णिका। गुण्डधातोर्गुरोश्चहल इति स्त्रियामप्रत्यये ततष्टाप् चूर्णार्थोऽत्र कविकल्पद्रुमोक्तो गुडिधातुः गुण्डयति छिङ्गलं लोक इति धातुदीपिकायां प्रयोगदर्शनात्। गुण्डयति चर्णयति। मङ्गलार्थं समालभ्यतेऽनेनेति मङ्गलसमालभनं करणे ल्युट्। समालम्भो विलेपनमित्यमरः।

(२) अनसूये त्वरस्व त्वरस्व, एते खलु हस्तिनापुरगामिन ऋषयः शब्दायन्ते। हस्तिनापुरं गजाह्वयं गमिष्यन्तीति हस्तिनापुरगामिनः। शब्दायन्ते शब्दं कुर्वन्ति। शब्दवैरकलहेति क्यङ्। यत्तु दुष्यन्ताधस्तनेन हस्तिनामकनृपेण तस्या निवेशितत्वेन हस्तिनापुरेतिपाठो लिपिकरप्रमाद इत्यनुमीयते इति वदन्ति। तत्तु भारताऽनवलोकनेन। तथेत्युक्त्वा तु ते सर्वे प्रातिष्ठन्त महौजसः। शकुन्तलां पुरस्कृत्य सपुत्रां गजसाह्वयमिति भारताद्दुष्यन्तराजधानीत्वेन तस्मिन् स्पष्टमुपलभ्यमानत्वादिति विवेचनीयम्।

(३) सखि एहि गच्छावः।

(४) एषा सूर्योदये कृतमज्जना प्रतिष्ठित नीवारभाजनाभिः स्वस्तिवाचनिकाभिस्तापसीभिरभिनन्द्यमाना तिष्ठति शकुन्तला, तदुपसर्पाव एनाम्। कृतं मज्जनं स्नानं यया सा। प्रतिष्ठिता स्वगृहीता नीवारा

अहिणन्दीअमाणा चिट्ठदि सउन्तला, ता उवसप्प ह्म णं[1] ।

इत्युभे तथा कुरुतः ।

ततः प्रविशति यथानिर्द्दिष्टव्यापारा सपरिवारा शकुन्तला ।

शकु । भअवदीओ वन्दामि[2] ।

गौत । जादे ! भत्तुणो बहुमाणसुहहेतुअं देवीसद्दं अहिगच्छ[3] ।

तापस्यः । वीरप्पसविणी होहि[4] । इत्याशिषो दत्त्वा गौतमीवर्ज्जं सर्व्वा निष्क्रान्ताः ।

सख्यौ । उपगम्य । सम्मज्जणं दे भद्दं[5] ?।

शकु । साअदं पिअसहीणं ? इदो णिसीदध[6] ।

सख्यौ । उपविश्य । हला ! उज्जुआ दाव होहि, जाव दे मङ्गलसमालहणं करेह्म[7] ।

शकु । उइदं पि एदं अज्ज बहुमणिदव्वं, जदो दुल्लहं दाव

याभिस्ताभिः । स्वस्ति आशिर्वचनाय स्थिताः स्वस्ति वाचनिकास्ताभिः । अभिनन्द्यमाना प्रशस्यमाना । एषा शकुन्तला तिष्ठति ।

(२) भगवतीर्वन्दे ।

(३) जाते भर्त्तुर्बहुमानसुखहेतुकं देवीशब्दमधिगच्छ । देवीशब्द-मभिषेचीशब्दम् । अधिगच्छ प्राप्नुहि । कृताऽभिषेका भवेत्यर्थः ।

(४) वीरप्रसविनी भव । वीरं शूरं प्रसवितुं शीलं यस्याः सेता-दृशी ।

(५) संमज्जनन्ते भूतम् ।

(६) स्वागतं प्रियसख्योः । इतो निषीदतम् ।

(७) अयि ऋजुका तावद्भव यावत्ते मङ्गलसमालभनं कुर्व्वः । ऋ-जुका अनिमन्ना । मङ्गलसमालभनं मङ्गलस्नानम् ।

(१) उचितमप्येतद्बहुमन्तव्यं यतो दुर्लभं तावत्पुनर्मे प्रियसखो-मण्डनं भविष्यति । यतः यस्मात् पञ्चम्यास्तसिः । उचितमपि

पुणो मे पिअसहीमण्डणं भविस्सदि इति बाष्पं विसृजति[१] ।

सख्यौ । सहि ! ण जुत्तं मङ्गलकाले रोदिदुं[२] ।

इत्यश्रूणि प्रमृज्य नाट्येन प्रसाधयतः ।

प्रियं । सहि ! आहरणोचिदं दे रूअं अस्समसुलहेहिं पसाहणेहिं विप्पआरीअदि[३] ।

प्रविश्य आभरणहस्त ऋषिकुमारः । इदमलङ्कारजातमलङ्क्रियतामायुष्मती[४] ।

सर्व्वा विलोक्य विस्मिताः ।

गौत । वच्छ हारीद ! कुदो इदं आसादिदं ?[५] ।

हारी । तातकण्वप्रभावात्[६] ।

गौत । किं माणसी सिद्धी ?[७] ।

हारी । न खलु, श्रूयतां तत्रभवता कण्वेन वयमाज्ञप्ताः शकुन्तलाहेतोर्वनस्पतिभ्यः कुसुमान्याहरतेति[८] । ततश्च

---

अत्यल्पमपि एतन्न मम । प्रियसखीभ्यामियंवदाऽनसूयाभ्यां मण्डनं वेशरचनम् दुर्लभं दुरापं भविष्यति तस्माद्रुदमल्पमादरणीयम् ।

( २ ) सखि न युक्तम्मङ्गलकाले रोदितुम् ।

( ३ ) सखि आभरणार्हन्ते रूपमाश्रमसुलभैः प्रसाधनैर्विप्रकाश्यते । आश्रमसुलभै सुखेनलभ्यन्त इति सुलभान्याश्रमेषु सुलभानि तैः । प्रसाध्यन्ते यैस्तै रलङ्कारैः । विप्रकार्य्यते तिरस्क्रियते ।

( ४ ) इदमिति । अलङ्कारजातं भूषणसमुदायम् ।

( ५ ) वत्स हारीत कुत इदमासादितम् । आसादितमाक्रान्तं प्राप्तमिति यावत् ।

( ६ ) तातेति । प्रभावात् शक्तेः । प्रभावः शक्तितेजसोरिति कोषः ।

( ७ ) किं मानसी सिद्धिः । मनसः चित्तस्येयं मानसी । सिद्धिः निष्पत्तिः । सिद्धिर्निष्पत्तियोगयोरितिकोषः ।

( ८ ) नखल्विति । न खलु न मानसी सिद्धिरित्यर्थः । तत्र भवता

क्षौमं केनचिदिन्दुपाण्डु तरुणा माङ्गल्यमाविष्कृतं
निष्ठ्यूतश्चरणोपरागसुभगो लाक्षारसः केनचित् ।
अन्येभ्यो वनदेवताकरतलैरापर्व्वभागोत्थितै-
र्दत्तान्याभरणानि नः किसलयच्छायापरिस्पर्द्धिभिः[1] ॥

प्रियं। शकुन्तलां विलोक्य। हला ! कोडरसम्भवा वि महुअरी पोक्खरमहुं ज्जेव अहिलसदि[2] ।

गौत। जादे ! इमाए अब्भुववत्तीए सूइदा भत्तुणो गेहे अणुहोदव्वा राअलच्छी[3] ।

शकु। लज्जां नाटयति।

हारी। यावदिमां वनस्पतिसेवामभिषेकार्थं मालिनीमवतीर्णाय तत्रभवते कण्वाय निवेदयामि । इति निष्क्रान्तः ।

पृष्टेन कण्वेन शकुन्तलाहेतोः शकुन्तलार्थम् । वनस्पतिभ्यो वृक्षेभ्यः । कुसुमानि पुष्पाणि । आहरत इति यमाज्ञप्ता इत्यन्वयः ।

(१) क्षौममिति । केनचित्तरुणा वृक्षेण इन्दुवच्चन्द्रवत् पाण्डुपाण्डुरवर्णं माङ्गल्यम्मङ्गलद्रव्यभूतं क्षौमयुगं दुकूलवस्त्रम् । आविष्कृतं प्रकाशीकृतम् । केनचित्तरुणा चरणयोः पादयोरुपरागे रञ्जने सुभगः सुन्दरः । लाक्षारसो लाक्षाद्रवो निष्ठ्यूतः दत्तः प्रस्रावित इति यावत् । अन्येभ्यस्तरुभ्यः । आपर्वभागं मणिबन्धादवधिपर्य्यन्तम् उत्थितैराविर्भूतैः किसलयानां पल्लवानां छायां कान्तिं परिस्पर्द्धते स्पर्द्धां कुर्व्वन्ति तच्छीलैः वनदेवतानां करतलैः नोऽस्मभ्यमाभरणानि भूषणानि दत्तानि । सुदाञ्दान इत्यस्मात्कर्मणि क्ते दोदद्घोरिति दथादेशः ।

(२) अयि कोटरसंभवाऽपि मधुकरीपुष्करमध्वेवाऽभिलषति । कोटरे वृक्षस्यविवरे सम्भवाऽपि समुत्पन्नाऽपि । पुष्करमधु कमलमधु । अभिलषति इच्छति ।

(३) जाते अनया अभ्युपपत्त्या सूचिता भर्तुर्गेहेऽनुभवितव्या राजलक्ष्मीः । अभ्युपपत्त्याऽनुग्रहेण । अभ्युपपत्तिरनुग्रह इत्यमरः ।

अन। सहि! अणुभूदभूसणो अअं जणो कधं तुमं अलङ्करेदि। चिन्तयित्वा विलोक्य च। चित्तपरिचएण दाणिं दे अङ्गेसु आहरणविणिओअं करेह्म।[1]

शकु। जाणामि वो णिउणत्तणं[2]।

सख्यौ। नाट्येनालङ्कारान् विनियुञ्जाते।

तत. प्रविशति स्नानोत्तीर्णः कण्वः।

कण्वः। विचिन्त्य

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम्।
वैक्लव्यं मम तावदीदृशमपि स्नेहादरण्यौकसः,
पीड्यन्ते गृहिणः कथं न तनयाविश्लेषदुःखैर्नवैः?॥[3]

इति परिक्रामति।

सख्यौ। हला सउन्तले! अवसिदमण्डणासि, सम्पदं परिहेहि खोमजुअलं[4]।

---

(१) अननुभूतभूषणोऽयञ्जनः कथन्त्वामलङ्करोति। चित्तपरिचयेनेदानीं तेऽङ्गेष्वाभरणविनियोगङ्कुर्म्मः आभरणानाम्भूषणानां विनियोगं यथास्थानाऽभिनिवेशम्। चित्तपरिचयेन मनसाऽवधार्य्येत्यर्थः।

(२) जानामि वो निपुणत्वम्। निपुणत्वमभिज्ञत्वं प्रवीणे निपुणाऽभिज्ञ इत्यमरः।

(३) यास्यत्यद्येति। अद्य शकुन्तला यास्यतीति हेतोः हृदयं चित्तमुत्कण्ठया संस्पृष्टमधिकृतम्। तथा गदितं वचनं अन्तर्म्मध्ये बाष्पाणामश्रूणां भरोऽतिशयस्तेनोपरोधि आवृतम्। दर्शनञ्चक्षुः चिन्ताजड चिन्तया जडं कर्मानर्हम्। अरण्यौकस अरण्यं विपिनमोकः सद्म यस्यैतादृशस्य ममाऽपि तावत्स्नेहादीदृशं वैक्लव्यं विक्लवस्य भावस्तत् विह्वलत्वं भवति गृहिणः गृहस्था नवैर्नूतनैरचिरजातैरिति यावत्। तनयया पुत्र्या विश्लेषणाद्यानि दुःखानि तैः कथन्न पीड्यन्त अपितु पीड्यन्त एवेत्यर्थः।

(४) अयि शकुन्तलेऽनर्जितमण्डनाऽसि साम्प्रतं परिधेहि क्षौमयुगलम्। अवसितमण्डनासि जाताऽभरणकार्य्याऽसि।

शकु । उत्थाय नाट्येन परिधत्ते ।

गौत । जादे ! एस दे आणन्दवाप्पपरिवाहिणा लोअ-
णेण परिस्सजन्तो विअ गुरू उवत्थिदो ता समुदा-
आरं पडिवज्जस्स[1] ।

शकु । सव्रीडं वन्दनां करोति ।

कण्वः । वत्से !

यथातेरिव शर्मिष्ठा भर्त्तुर्बहुमता भव ।
पुत्रं त्वमपि सम्राजं सेव पूरुमवाप्नुहि[2] ॥

गौत । जादे ! वरो क्खु एसो ण आसिसो[3] ।

कण्वः । वत्से ! इतः सद्यो हुतानग्नीन् प्रदक्षिणीकुरुष्व[4] ;

सर्वे तथा कारयितुं परिक्रामन्ति ।

कण्वः । वत्से ।

---

(१) जाते एष ते आनन्दवाष्पपरिवाहिणा लोचनेन परिष्वजमान इव गुरुरुपस्थितस्तत्समुदाचारं प्रतिपद्यस्व । आनन्दादुत्थानि वाष्पा-ण्यश्रूणि परिवहतीति तेन सहितेन लोचनेन नेत्रेण परिष्वजमान इवाऽऽलिङ्गन्निव गुरुः कण्व उपस्थितः प्राप्तः तत्तस्मात्समुदाचारं वन्दनादिरूपसदाचारं प्रतिपद्यस्व कुरु ।

(२) ययातेरिवेति । ययातिर्नामकस्य राज्ञः शर्मिष्ठा इव त्वं भर्त्तुः पत्युर्दुष्यन्तस्येति यावत् । बहुमता इष्टा भव । हे शकुन्तले साशर्मिष्ठा पुत्रं पुन्नामनरकोत्तारकं पूरुम्पूरुनामकमिव त्वमपि सम्राजं सम्यग्राजते दीप्यते भूपमण्डलीष्विति सम्राट् तम् । येनेष्टं राजसूयेन मण्डलस्येश्वरश्चयः । शास्ति यश्चाज्ञया राज्ञः स सम्राडित्यमरः । पुत्रमाप्नुहि । आशिषि लिङ्लोटावित्याशिषि लोट् । अत्राशिरलङ्कारः । आशीरिष्टजनाऽऽशंसेत्युक्तेः ।

(३) जाते वरः खल्वेष नाशिषः । अवश्यभाविफलकं वचनं वरः ; अनियतफलकन्तु आशीरिति द्वयोर्भेदः ।

(४) वत्स इति । सद्योचिरेण हुतान् दत्ताहुतीन् । त्वन्नवे-[ष्टाशंसनं करिष्यन्तीति भावः ।

अमी वेदिं परितः क्लृप्तधिष्ण्याः
समिद्वन्तः प्रान्तसंस्तीर्णदर्भाः।
अपघ्नन्तो दुरितं हव्यगन्धै-
र्वैतानास्त्वां वह्नयः पावयन्तु[1]॥

शकु। प्रदक्षिणं करोति।

कण्वः। वत्से! प्रतिष्ठस्वेदानीम्। सदृष्टिक्षेपम्। क्व नु ते शार्ङ्गरवशारद्वतमिश्राः?

शिष्यौ। प्रविश्य। भगवन्निमौ स्वः।

कण्वः। वत्सौ! भगिन्याः पन्थानमादेशयतम्।

शिष्यौ। इत इतो भवती।

सर्वे परिक्रामन्ति।

कण्वः। भो भोः सन्निहितवनदेवतास्तपोवनतरवः!

पातुं न प्रथमं व्यवस्यति जलं युष्मास्वसिक्तेषु या,
नादत्ते प्रियमण्डनापि भवतां स्नेहेन या पल्लवम्,[2]।

---

(१) अमी इति। हे वत्से वेदिं परितो वेद्याः सर्वतः। समन्ततस्तु परितः सर्वतोविष्वगित्यमरः। अभितः परित इति कर्मप्रवचनीयत्वाद्द्वितीया। क्लृप्तधिष्ण्याः क्लृप्तानि रचितानि धिष्ण्यानि स्थानानि येषां ते। समिद्वन्तः प्रज्वलिताः। प्रान्तेषु संस्तीर्णा विस्तृता दर्भाः कुशा येषां ते। हव्यानां देवतोद्देशेन विनियुक्तानां द्रव्याणां गन्धैः। दुरितं किल्विषमपघ्नन्तो नाशयन्तः। वैताना वितानस्य यज्ञस्येमे वैताना यज्ञसम्बन्धिनोऽमी समीपवर्त्तिनो वह्नयोऽग्नयस्त्वां पावयन्तु शुद्धिं प्रापयन्तु। क्रतुविस्तारयोरस्त्री वितानमित्यमरः।

(२) पातुमिति। या शकुन्तलाऽसिक्तेषु युष्मासु प्रथमं सेचनात्पूर्वं जलं पातुं न व्यवस्यति न व्यवसायङ्करोति नेच्छतीति यावत्। प्रियं मण्डनं भूषणं यस्याः सैतादृशी या शकुन्तला भवतां पल्लवं किशलयं स्नेहेन सौहृदेन। स्नेहः स्यात्पुंसि तैलादिरसद्रव्ये च सौहृद इति मेदिनी। नादत्ते नावचिनोति। यस्याः शकुन्तलायाः वो युष्माकं

आह्लादो वः कुसुमप्रवृत्तिसमये यस्या भवत्युत्सवः,
सेयं याति शकुन्तला पतिगृहं, सर्व्वैरनुज्ञायताम्॥
आकाशे[2]। रम्यान्तरः कमलिनीहरितैः सरोभि-
श्छायाद्रुमैर्नियमितार्कमरीचितापः।
भूयात्कुशेशयरजोमृदुरेणुरस्याः
शान्तानुकूलपवनश्च शिवश्च पन्थाः[3]॥
सर्व्वे सविस्मयमाकर्णयन्ति।
शार्ङ्ग। कोकिलशब्दं सूचयित्वा। भगवन्!
अनुमतगमना शकुन्तला तरुभिरियं वनवासबन्धुभिः।
परभृतविरुतं कलं यतः प्रतिवचनीकृतमेभिरात्मनः[4]॥

आह्लादो। कुसुमप्रवृत्तिसमये कुसुमोद्गमवेलायाम् उत्सव आनन्दो भवति। सेयं शकुन्तला पतिगृहं याति सर्व्वैस्तरुभि अनुज्ञायतामाज्ञादीयताम्।

(२) आकाश इति। अन्यतममनुद्दिश्येत्यर्थः।

(३) रम्यान्तर इति। कमलिनीहरितैः कमलिनीभिः हरितैः हरितवर्णविशिष्टैः। पलाशो हरितो हरित्तित्यमरः। सरोभिः कासारैः। कासारः सरसी सर इत्यमरः। रम्यं सुन्दरम् अन्तरं मध्यं यस्य सः। छायाद्रुमैर्नियमिता प्रशमिता अर्काणां सूर्य्याणां मरीचीनां किरणानां तापः सन्तापो यस्मिन् सः। तापः सन्तापकृच्छ्रयोरिति मेदिनी। कुशेशयानां कमलविशेषाणाम्। शतपत्रं कुशेशयमित्यमरः। रजोभिः परागैः मृदवः कोमलाः। मृदुः स्यात्कोमलेतीक्ष्ण इति मेदिनी। रेणवो धूलयो यस्मिन् सः एतादृशः अस्याः शकुन्तलायाः पन्थाः वर्त्म। शान्तः प्रशमान्वितोनुकूलो सुखप्रापकः पवनो यस्मिन् एतादृशः। शिवश्च श्रेयस्करश्च भूयादस्तु। भूधातोराशिषिलिङ्।

(४) अनुमतेति। हे भगवन् कण्व यतो यस्मात्। वनवासेनैकत्रवनेवासेन बन्धुभिरेभिस्तरुभिर्हृद्यैः कलमव्यक्तमधुरम्। परभृतस्य

गौत । जादे ! णादिजणसिणिद्धाहिं अणुसादगमणासि तवोवणदेवदाहिं, ता पणाम भअवदीणं [1] ।

शकु । सप्रणामं परिक्रम्य जनान्तिकम् । हला पिअम्वदे ! अज्जउत्तदंसणुस्सुआएवि अस्समपदं परिच्चअन्तीए दुक्खदुक्खेण चलणा मे पुरोमुहा ण णिवड़न्ति [2] ।

प्रियं । ण केवलं तुमं ज्जेव तवोवणविरहकादरा, तुए उवत्थिदविओअस्स तवोवणस्सवि अवत्थं पेक्ख दाव [3] ।

उग्गिलिददब्भकवला मई, परिच्चत्तणच्चणा मोरी ।
ओसरिअपाण्डुपत्ता मुअन्ति अस्सुं विअ लदाओ [4] ॥

कोकिलस्य विरुतं शब्दः । आत्मनः प्रतिवचनीकृतमुत्तरितमतद्वयं शकुन्तला । अनुमतमनुज्ञातं गमनं यस्याः सा तथोक्ताऽसि । शकुनिना शुभसूचितेऽत्र विलम्बो न कर्त्तव्य इति भावः ॥ उक्तञ्च । वामे मधुरवाक् पक्षी दक्षः पल्लवितोऽग्रतः । अनुकूलो वहन्वायु प्रयाणे शुभशंसिन इति ।

(१) जाते ज्ञातिजनस्निग्धाभिरनुज्ञातगमनासि तपोवनदेवताभिः, तत्प्रणाम भगवतीभ्यः । ज्ञातिजनस्य तातजनस्य । ज्ञातिस्तात सगोत्रयोरिति मेदिनी । स्निग्धाभिः स्नेहयुक्ताभिः । स्निग्धं स्नेहयुते चिक्कणेऽपि स्यादिति मेदिनी ।

(२) अयि प्रियंवदे आर्यपुत्र दर्शनोत्सुकाया अपि आश्रमपदं परित्यजन्त्या दुःख दुःखेन चरणौ मे पुरोमुखौ न निपततः ॥ दुःखदुःखेनातिकष्टेन ।

(३) न केवलं त्वमेव तपोवनविरहकातरा त्वयोपस्थितवियोगस्य तपोवनस्याऽपि अवस्थां प्रेक्षस्व तावत् ।

(४) उद्गीर्णदर्भकवला मृगी, परित्यक्तनर्त्तना मयूरी । अपसृतपाण्डुपत्रा मुञ्चन्त्यश्रिव लतेति प्रकृतिः । उद्गीर्णा दर्भकवला यया सा एतादृशी मृगी अस्ति । मयूरी च परित्यक्तं नर्त्तनं गात्रविक्षेपादिरूपाक्रिया यया सैतादृश्यऽस्ति । लताः अपसृता पाण्डुपत्रा याभ्यस्ता एतादृशा सत्यः अश्रु वाष्पं मुञ्चतीव ।

शकु । स्मृत्वा । ताद ! लदावहिणीं दाव माहवीं आमन्तइस्सं[1] ।

कण्वः । वत्से ! अवैमि ते तस्यां सौहार्द्दं, इयं सा दक्षिणे पश्य ।

शकु । उपेत्य लतामालिङ्गय । लदावहिणि ! पच्चालिङ्गस्स मं साहामएहिं बाहहिं,[2] अज्ज पहुदि दूरवत्तिणी क्खु दे भविस्सं । ताद ! अहं विअ इअं तुए चिन्तणीआ[3] ।

कण्वः । वत्से !

सङ्कल्पितं प्रथममेव मया त्वदर्थे
भर्त्तारमात्मसदृशं स्वगुणैर्गतासि ।
अस्यास्तु सम्प्रति वरं त्वयि वीतचिन्तः
कान्तं समीपसहकारमिमं करिष्ये[4] ॥

तदितः प्रस्थानं प्रतिपद्यस्व ।

(१) तात लताभगिनीं तावन्माधवीमामन्त्रयिष्यामि ।

(२) सौहार्दम् । सुहृदो भाव सौहार्दम् । सुहृच्छब्दाद्ब्राह्मणादित्वात्ष्यञ् अनुशतिकादीनाञ्चेत्युभयपदवृद्धिः ।

(३) लताभगिनि प्रत्यालिङ्ग मां शाखामयैर्बाहुभिः अद्यप्रभृति दूरवर्त्तिनी खलु ते भविष्यामि । तात अहमिवेयन्त्वया चिन्तनीया । इयं लताऽहमिव त्वया प्रियसंगमार्थं चिन्तनीया विचारणीया ।

(४) सङ्कल्पितमिति । हे वत्से पुत्रि । मया प्रथमं पूर्वं त्वदर्थमेव त्वन्निमित्तमेव सङ्कल्पितं मनसि चिन्तितम् । आत्मसदृशं आत्मनः स्वस्य सदृशं तुल्यं भर्त्तारं पतिम् । स्वगुणैः स्वस्य गुणैः सौन्दर्य्यादिभिः गताऽसि प्राप्ताऽसि । सम्प्रतीदानीन्तु । त्वयि वीतचिन्तो विगता चिन्ता यस्य सः । स्याच्चिन्ता स्मृतिराध्यानमित्यमरः । कान्तं सुन्दरम् । समीपसहकारं निकटस्थचूतवृक्षम् अस्या माधवीलतायाः वरं वोढारम् । वरो जामातृवोढाराविति कोषः । करिष्ये ।

शकु । सख्यावुपेत्य । हला ! एसा दोसं पि वो हत्थे णिक्खेवो[1] ।

सख्यौ । अअं जणो दाणिं कस्स हत्थे समप्पिदो[2] ?

इति वाष्पं विसृजतः ।

कण्वः । अनसूये ! प्रियंवदे ! अलं रुदितेन, ननु भवतीभ्यामेव शकुन्तला स्थिरीकर्त्तव्या ।

इति सर्वे परिक्रामन्ति ।

शकु । विलोक्य । ताद ! एसा उड़अपज्जन्तचारिणी गब्भभारमन्थरा मिअबहू जदा सुहप्पसवा भविस्सदि, तदा मे कम्पि पिअणिवेदअं विसज्जइस्ससि, मा एदं विसुमरिस्ससि[3] ।

कण्वः । वत्से नेदं विस्मरिष्यामि ।

शकु । गतिभेदं रूपयित्वा । अम्मो ! कोण् क्खु एसो पदक्कन्तो विअ मे पुणो पुणो वसणन्ते सज्जदि ?[4] ।

इति परावृत्यावलोकयति ।

कण्वः । वत्से !

(१) अयि एषा द्वयोरपि युवयोर्हस्ते निक्षेपः । निक्षेपसमर्पितेत्यर्थः ।

(२) अयञ्जन इदानीं कस्य हस्ते समर्पितः ।

(३) तात एषोटजपर्य्यन्तचारिणी गर्भभारमन्थरा मृगवधूर्यदा सुखप्रसवा भविष्यति तदा मे कमपि प्रियनिवेदकं विसर्ज्जयिष्यसि । मेदं विस्मरिष्यसि । उटजपर्य्यन्तचारिणी । पर्णशालाकोणे चरणशीला । गर्भभारमन्थरा गर्भस्य भारेण मन्थरा मन्दगमना ।

(४) अम्मा को नु खल्वेष, पदाक्रान्त इव मे पुनः पुनर्वसनान्ते सज्जते ।

(१) यस्येति ॥ हे वत्से हे शकुन्तले कुशसूचिविद्धे कुशानान्दर्भाणां

यस्य त्वया व्रणविरोपणमिङ्गुदीनां
तैलं न्यषिच्यत मुखे कुशसूचिविद्धे ।
श्यामाकमुष्टिपरिवर्द्धितको जहाति
सोऽयं न पुत्रकृतकः पदवीं मृगस्ते[1] ॥

शकु । वच्छ ! किं मं सहवासपरिच्चाइणीं अणुबन्धसि ? णं अचिरप्पसूदोवरदाए जणणीए विणा जधा मए वड्ढिदोसि तधा दाणिं पि मए विरहिदं तादो तुमं चिन्तइस्सदि, ता णिवत्तस्स[2] । इति रुदती प्रस्थिता ।

कण्वः । वत्से ! अलं रुदितेन, स्थिरा भव, पन्थानमालोकय ।

उत्पक्ष्मणोर्नयनयोरुपरुद्धवृत्तिं
बाष्पं कुरु स्थिरतया शिथिलानुबन्धम् ।

सूचिभिः कोटिभिः विद्धे यस्य मृगस्य मुखे वदने त्वया व्रणविरोपणं क्षतविनाशकं इङ्गुदीनां तापसतरूणां तैलं स्नेहं न्यषिच्यत निषिक्तम् । श्यामाकानां तृणधान्यानाम् । मुष्टिभिः परिवर्द्धित एव परिवर्द्धितकः स्वार्थे कन् । पालित इत्यर्थः ॥ स पुत्रकृतकः पुत्रतुल्यकृतोऽयं मृगः । ते तव पदवीं वर्त्म । न जहाति न त्यजति । सरणिः पद्धतिः पदव्यध्वर्त्मनीत्यमरः ।

(२) वत्स किं मां सहवासपरित्यागिनीमनुबध्नासि नन्वचिरप्रसूतोपरतया जनन्या विनायथा मया वर्द्धितोऽसि तथेदानीमपि मया विरहितं तातः त्वां चिन्तयिष्यति तन्निवर्त्तस्व । सहवास परित्यक्तुं शीलं यस्याः सा । अनुबध्नासि पश्चाद्यासि । अचिरं सद्यः प्रसूतं यया सैतादृशी चासावुपरतया मृतया । जनन्या विना मातरं विना । पृथग्विनेति तृतीया विनाशब्दयोगे मातृशब्दात् ।

(३) उत्पक्ष्मणोरिति । ऊर्द्ध्वगतं पक्ष्म नेत्ररोमावलिर्ययोस्तयोः नयनयोरुपरुद्धाऽऽहता वृत्तिर्येन सः । एतादृशं बाष्पमश्रु स्थिरतया स्थिरस्य भावस्तया स्थैर्येण । शिथिलोऽनुबन्धः पुनः पुनरुत्पत्तिर्यस्य

अस्मिन्नलक्षितनतोन्नतभूमिभागे
मार्गे पदानि खलु ते विषमीभवन्ति[1] ॥

शिष्यौ । भगवन्नोदकान्तं स्निग्धोऽनुगम्यत इति श्रूयते, तदिदं सरस्तीरम्, अत्र नः सन्दिश्य प्रतिगन्तुमर्हसि ।

कण्वः । तेन हीमां क्षीरवृक्षच्छायामाश्रयामः[2] ।

सर्वे तथा नाटयन्ति ।

कण्वः । किन्नु खलु तत्रभवतो दुष्यन्तस्य युक्तरूपं सन्देष्टव्यम्[3] ॥ इति चिन्तयति ।

अन० । सहि अस्समपदे ण अत्थि कोवि चित्तवन्तो जो तए विरहिज्जन्तो ण ताम्मदि त्ति पेक्ख दाव[4]

पउमिणिपत्तन्तरिअं वाहरिओवि ण वाहरेइ पिअं ।
दुरुव्वूढमिणालो तइ दिट्ठिं देइ चक्काओ[5] ॥

---

मार्गे इति । अत्र उन्नतश्चावनतश्च नतोन्नतौ तौ च तौ भूमिभागौ । अलक्षितौ अदृष्टौ नतोन्नता उच्चावचौ भूमिभागौ इत्यिवेकदेशौ यस्मिन् तत्तादृशम् । अस्मिन्मार्गे वर्तनि ते तव पदानि चरणानि । विषमीभवन्ति स्खलन्तीत्यर्थः ।

(२) तेनेति । इमां सन्निहिताम् क्षीरवृक्षस्य वटस्य छायाम् आश्रयाम. ।

(३) किन्त्विति । युक्तरूपम् अनुरूपम् योग्यमित्यर्थः । सन्देष्टव्यं सन्देशार्हम् । किन्नु शब्दो वितर्कबाधकः । किन्नु प्रश्नवितर्कयोरितिमेदिनीकोषात् ।

(४) सखि आश्रमपदे नास्ति कोऽपि चित्तवान् यस्त्वया विरह्यमाणो न ताम्यतीति प्रेक्षस्व । चित्तवान् सचेतनः ।

(५) पुटकिनी पत्रान्तरितां व्याहृतोऽपि न व्याहरति प्रियाम् । मुख उद्व्यूढमृणालस्त्वयि दृष्टिं ददाति चक्राङ्कः । मुखे उद्व्यूढं धृतं मृणालं बिसं येन सः । एतादृशो व्याहृतोपिउक्तोऽपि । चक्राङ्कश्चक्रवाकः । पुटकिनीपत्रेण कमलिनीपत्रेणाऽन्तरितां तिरोभूतां प्रियां न व्याहरति नाऽऽलपति । त्वयि दृष्टिन्नेत्रं ददाति ।

कण्वः। वत्स शार्ङ्गरव! इति त्वया मद्वचनात् स राजा शकुन्तलां पुरस्कृत्याभिधातव्यः।

शार्ङ्ग। आज्ञापयतु भवान्।

कण्वः। अस्मान् साधु विचिन्त्य संयमधनानुच्चैः कुलञ्चात्मन-

स्त्वय्यस्याः कथमप्यबान्धवकृतां स्नेहप्रवृत्तिञ्च ताम्।

सामान्यप्रतिपत्तिपूर्व्वकमियं दारेषु दृश्या त्वया,

भाग्याधीनमतःपरं न खलु तत् स्त्रीबन्धुभिर्याच्यते[1]॥

शार्ङ्ग। गृहीतोऽयं सन्देशः।

कण्वः। शकुन्तलां विलोक्य। वत्से! त्वमिदानीमनुशासनीयासि, वनौकसोऽपि वयं लौकिकज्ञा एव[2]।

शार्ङ्ग। भगवन्! न खलु कश्चिदविषयो नाम धीमताम्।

(१) अस्मानिति। संयमस्तपएव धनं येषान्तान्। अस्मान् साधु सम्यङ्विचिन्त्यावधार्य्य निश्चित्येतियावत्। तपःप्रभावं ज्ञात्वाऽन्यथा न कर्त्तव्यमितिभावः। आत्मन स्वस्योच्चैः कुलं च विचिन्त्य। तत्र पूर्व्वपुरुषाः दोषलेशरहिता तान्विचार्य्येत्यर्थः॥ स्त्रीपरित्यागे तु दोषः स्यादितिभावः। त्वयि अस्याः शकुन्तलाया अबान्धवकृतां बन्धुजनैरकृतामनुत्पादितां ता स्नेहप्रवृत्तिं स्नेहस्य प्रणयस्य प्रवृत्तिं वृत्तान्तञ्च विचार्य्य। इयं शकुन्तला दारेषु पत्नीषुमध्ये। सामान्यप्रतिपत्तिपूर्व्वकं साधारण ज्ञानपूर्व्वकं त्वया दृश्या द्रष्टुं योग्या। अतः परमेतस्मादधिकम्। भाग्याधीनं भाग्यस्य दैवस्याधीनमायत्तम्। तत् स्त्रीणां बन्धुभिर्नयाच्यते याचृयाच्ञायां कर्मणि लट्।

(२) वत्से इति। अनुशासनीयास्युपदेष्टव्याऽसि। वनौकसोपिवनमेवौकः सद्म येषान्ते। नगराचारमपश्यन्तोपीत्यर्थः। लौकिकज्ञा लोकाचारं जानीम इत्यर्थः। तपःप्रभावादिति भावः।

(३) भगवन्निति। धीमतां बुद्धिमतां कश्चिकोपि अविषयोऽज्ञातो न खलु नेत्यर्थः। न खल्विति [illegible] र्थसूचकं। धीमतां [illegible]

कण्वः । सा त्वमितः पतिगृहं प्राप्य

शुश्रूषस्व गुरून्, कुरु प्रियसखीवृत्तिं सपत्नीजने,
भर्त्तुर्विप्रकृतापि रोषणतया मास्म प्रतीपं गमः ।
भूयिष्ठं भव दक्षिणा परिजने, भोगेष्वनुत्सेकिनी,
यान्त्येवं गृहिणीपदं युवतयो वामाः कुलस्याधयः[1] ॥

गौतमी वा किं मन्यते ।

गौत । एत्तिओ क्खु बहूजणे उवदेसो । जादे ! एदं क्खु हिअए करेहि, मा विसुमरिस्ससि[2] ।

कण्वः । वत्से ! एहि परिष्वजस्व मां सखीजनञ्च ।

(१) शुश्रूषस्वेति । गुरून् गुरुजनान् । मान्यानित्यर्थः । शुश्रूषस्व । आराधय । शृणोतेः सनि ज्ञाश्रुस्मृदृशां सन इत्यात्मनेपदम् । अज्झनगमां सनीति दीर्घः । सपत्नीजने समानः पतिर्यस्याः सा सपत्नी । पत्न्यौ यज्ञसंयोग इति पत्युर्नकारादेशो ङीप् चेति नकारङीपौ । सा चासौ जनश्चेति विग्रहः । प्रियसखी वृत्तिं प्रियसख्या वृत्तिं व्यापारमाचारमिति यावत् । कुरु । विप्रकृताऽपि तिरस्कृताऽपि भर्त्रेति शेषः । भर्त्तुः पत्युः प्रतीपं पराङ्मुखं रोषणतया रोषणाया आत्मनया क्रुद्धतया मास्मगमः मायाहि । नमाङ्योग इत्यडागमनिषेधः । भोगेषु सुखेष्वऽनुत्सेकिनी उत्साहाभाववती सती । परिजने भूयिष्ठमतिशयेन बहु भूयिष्ठं बहुतरं दक्षिणा छन्दवर्त्तिनी भव । दक्षिणो दक्षिणोद्भूतसरलच्छन्दवर्त्तिष्विति मेदिनी । एवम् अनेन प्रकारेण युवतयः गृहिणीपदं गृहिणीशब्दं यान्ति प्राप्नुवन्ति । वामा एतत्प्रतिकूला युवतयः कुलस्याऽऽधयो मनः पीडाजनिका भवन्ति । पुंस्याधिर्मानसीव्यथेत्यमरः । इदमुपदेशनामकं लक्षणम् । उपदिष्टं मनोहारि वाक्यं शास्त्राऽनुसारत इत्युक्तेः ।

(२) एतावान् खलु बधूजन उपदेशः । जाते इदं खलु हृदये कृत्वा मा विस्मरिष्यसि । बधूजने नवोढाजने । अशिक्षित जन इति यावत् । बधूः स्त्रीशारिवौषधौ । स्नुषा शठी नवोढासु-भिर्मेदिनी ।

शकु । ताद ! इदोज्जेव किं पिअसहीओ णिवत्तिस्सन्ति[1] ? ।

कण्वः । वत्से ! इमे अपि प्रदेये, तन्न युक्तमनयोस्तत्र गन्तुं, त्वया सह गौतमी गमिष्यति ।

शकु । पितुरङ्कमाश्लिष्य । कधं दाणिं तादस्स अङ्कादो परिब्भट्ठा मलअपव्वदादो उम्मूलिदा चन्दनलदा विअ देसन्तरे जीविदं धारइस्सं[2] ? ।

कण्वः । वत्से ! किमेवं कातरासि ?

अभिजनवतो भर्त्तुः श्लाघ्ये स्थिता गृहिणीपदे
विभवगुरुभिः कृत्यैरस्य प्रतिक्षणमाकुला ।
तनयमचिरात्प्राचीवार्कं प्रसूय च पावनं
मम विरहजां न त्वं वत्से ! शुचं गणयिष्यसि[3]॥

(१) तात इत एव किं प्रियसख्यौ निवर्त्तिष्यते ।

(२) कथमिदानीं तातस्याङ्कात्परिभ्रष्टा मलयपर्वतादुन्मूलिता चन्दनलतेव देशान्तरे जीवितं धारयिष्यामि । देशान्तरे मलयादन्यत्र गता चन्दन लता यथा नजीवति तथाऽहमपि जीवितन्नधारयिष्यामीत्यर्थः ।

(३) अभिजनेति । अभिजनवतः कुलध्वजभूतस्य । भवेदभिजनख्यातौ जन्मभूम्यां कुलध्वजे इतिमेदिनी । भर्त्तुः पत्युः । दुष्यन्तस्येत्यर्थः । श्लाघ्ये गौरविते । गौरविताश्लाघ्यमिश्रा श्लाघ्यइति त्रिकाण्डशेषः । गृहिणी पदे गृहिणी शब्दे स्थिता । अस्य दुष्यन्तस्य । विभवैरैश्वर्यैर्गुरुभिर्महद्भिः । कृत्यैः गृहकार्यैः । प्रतिक्षणं क्षणं क्षणमिति विग्रहः । क्षणे क्षण इत्यर्थः । आकुला च सती । प्राचीदिग् पूर्वदिग् । पावनं पवित्रताकारणमर्कमिव सूर्यमिव । अचिराच्छीघ्रं पावनं धातूनामनेकार्थत्वात्तेजस्विनमित्यर्थः । तनयं पुत्रं प्रसूय जनयित्वा । हे वत्से मम मत्सम्बन्धिनीं विरहजां परित्यागभवां शुचं शोकङ्गणयिष्यसि । चौरादिकस्य गणधातोर्विध्यर्थे लिङ्

शकु । पितुः पादयोः पतित्वा । ताद ! वन्दामि[1] ।

कण्वः । वत्से ! यदहमिच्छामि तदस्तु ते ।

शकु । सख्यावुपगम्य । सहीओ ! एध, दुवेवि मं समं ज्जेव परिस्सजध[2] ।

सख्यौ । तथा कृत्वा । सहि ! जइ णाम सो राएसी पच्चहिस्साणमन्थरो भवे तदो से इमं अत्तणो णामधेअङ्किदं अङ्गुलीअअं दंसइस्ससि[3] ॥

शकु । इमिणा वो सन्देसेण कम्पिदं मे हिअअं[4] ।

सख्यौ । सहि ! मा भाआहि, सिणेहो पावमासङ्कदि[5] ।

शार्ङ्ग । भगवन् ! दूरमधिरूढः सविता, तत्त्वरयात्रभवतीम्[6] ।

शकु । भूयः पितुरङ्कमाश्लिष्य आश्रमाभिमुखीभूय च । ताद ! कदा णु क्खु भूओ तवोवणं पेक्खिस्सं[7] ? ।

कण्वः । वत्से !

(१) तात वन्दे ।

(२) सख्यौ एतं द्वे अपि मां सममेव परिष्वजेथाम् ।

(३) सखि यदि नाम स राजर्षिः प्रत्यभिज्ञानमन्थरो भवेत् तदास्येदमात्मनो नामधेयाङ्कितमङ्गुलीयकन्दर्शयिष्यसि । प्रत्यभिज्ञाने सेयं शकुन्तलेति ज्ञाने मन्थरो मन्दः । मन्थरः कोषफलयोर्वाड्वस्थानयोः पुमान् । कुसुम्भ्यां न द्वयोर्मन्द इतिमेदिनी ।

(४) अनेन वां सन्देशेन कम्पितमिव मे हृदयम् । वां युवयोः सन्देशेनानिष्टार्थोपदेशेन मे मम हृदयं चित्तं कम्पितमिव जातमित्यर्थः ।

(५) सखि मा विभीहि, स्नेहः पापमाशङ्कते । पापमनिष्टम् ।

(६) भगवन्निति । सविता सूर्यः दूरमुदयस्थानादधिकदेशम् अधिरूढः प्राप्तः ।

(७) तात कदाऽनु खलु तपोवनं प्रेक्षिष्ये ।

भूत्वा चिराय चतुरन्तमहीसपत्नी
दौष्यन्तिमप्रतिरथं तनयं प्रसूय ।
तत्सन्निवेशितधुरेण सहैव भर्त्रा
शान्त्यै करिष्यति पदं पुनराश्रमेऽस्मिन्[१] ॥

गौत । जादे ! परिहीअदि दे गमणवेला, ता णिवत्तावेहि पिदरं, अधवा चिरेणावि एसा ण णिवत्तइस्सदि, ता णिवत्तदु भवं[२] ।

कण्वः । वत्से ! उपरुध्यते मे तपोऽनुष्ठानम् ।

शकु । तवच्चरणवावारेण णिरुक्कण्ठो तादो, अहं उण उक्कण्ठाभाइणी संवुत्ता[३] ।

कण्वः । वत्से ! मामेवं जडीकरोषि । निःश्वस्य

---

(१) भूत्वेति । चिराय चिरकालं व्याप्य । दिगन्तमन्ता दिगन्तास्तैः सहिता सा चासौ मही च इत्वा च । गोत्राकुष्टधिवीष्टथ्वी क्ष्माऽवनिर्मेदिनीमहीत्यमरः । तस्याः सपत्नी समानभर्तृका भूत्वा । अप्रतिरथं प्रतिभटरहितं चक्रवर्त्तिनमिति यावत् । दौष्यन्ति दुष्यन्तस्याऽपत्यभूतं तनयं पुत्रं प्रसूयोत्पाद्य । तस्मिन्सन्निवेशिता न्यस्ता धूर्येन । ऋक्पूरब्धूः पथामित्यच्प्रत्ययः । भर्त्रा पत्या सह । दुष्यन्तेन सहितेत्यर्थः । शान्त्यै मोक्षाय तादर्थ्ये चतुर्थी । पुनरस्मिन् प्रसिद्धे । आश्रमे वानप्रस्थवने । आश्रमे ब्रह्मचर्य्यादौ वानप्रस्थवने मठ इति मेदिनी । पदं स्थानं निवासमिति यावत् । करिष्यति ।

(२) जाते परिहीयते गमनवेला, तन्निवर्त्तय पितरमथवा चिरेणाप्येषा न निवर्त्तयिष्यति तन्निवर्त्ततां भवान् ।

(३) तपश्चरणव्यापारेण निरुत्कण्ठस्तातोऽहमनुत्कण्ठाभागिनी संवृत्ता ।

(१) अपयास्यतीति । हे वत्से त्वया रचितपूर्वं पक्षिणां भोजनार्थं स्थापितपूर्वमित्यर्थः । उटजद्वारे पर्णशालाद्वारे विरूढमुत्पन्नम् अङ्कुरितमितियावत् । नीवारस्य बलिमुपहारं विलोकयतः पश्यतो

अपयास्यति मे शोकः कथं नु वत्से ! त्वया रचितपूर्व्वम् ।
उटजद्वारविरूढ़ं नीवारबलिं विलोकयतः[१]।

गच्छ, शिवास्ते सन्तु पन्थानः ।

इति निष्क्रान्ताः शकुन्तलया सह गौतमीशार्ङ्गरवशारद्वतमिश्राः ।

सख्यौ । चिरं विचिन्त्य सकरुणम् । हद्धी हद्धी ! अन्तरिदा सउन्तला वणराइहिं[२] ।

कण्वः । सनिःश्वासम् । अनसूये ! प्रियंवदे ! गता वां सहचरी, निगृह्य शोकावेगं मामनुगच्छतम् ।

सर्व्वे प्रस्थिताः ।

उभे । ताद ! सउन्तलाविरहिदं सुण्णं विअ तवोवणं पविसम्ह[३] ।

कण्वः । स्नेहप्रवृत्तिरेवंदर्शिनी[४] । सविमर्शं परिक्रम्य । हन्त, भोः ! शकुन्तलां पतिगृहे विसर्ज्य लब्धमिदानीं स्वास्थ्यम् । कुतः

अर्थो हि कन्या परकीय एव,
तामद्य संप्रेष्य परिग्रहीतुः ।

मे मम शोकः कथमपयास्यति गमिष्यति नकथमपीत्यर्थः । तत्स्मारकत्वादिति भावः ।

(२) हा धिक् हा धिक अन्तरिता शकुन्तला वनराजिभिः । वनराजिभिः वनपङ्क्तिभिः । श्रेणीलेखास्तु राजयइत्यमरः । अन्तरिता व्यवधीनमीता ।

(३) तात शकुन्तला विरहितं शून्यमिव तपोवनं प्रविशामः ।

(४) स्नेहेति । स्नेहस्य सौहार्दस्य प्रवृत्तिः प्रवाहः । स्नेहः स्यात्पुंसि तैलादि रसद्रव्येच सौहृद इति मेदिनी । प्रवृत्तिस्तु प्रवाहे-स्यादुदन्ते चेति मेदिनी ।

(१) अर्थ इति । कन्या कुमारिकारूपः । कन्या कुमारिकानारीरिति मेदिनी । अर्थो धनम् । अर्थोऽभिधेयरैवस्त्वित्यमरः । पर-

जातोऽस्मि सद्यो विशदान्तरात्मा
चिरस्य निक्षेपमिवार्पयित्वा॥

इति निष्क्रान्ताः सर्व्वे।

चतुर्थोऽङ्कः।

---

कीय एव परस्वामिक एव तां शकुन्तलाख्यां कन्यां परिग्रहीतुः स्वीकर्त्तुर्दुष्यन्तस्य स्त्रह इत्यर्थः। अद्येदानीं सम्प्रेष्य प्रेषयित्वा। चिरस्य चिरकालस्य निक्षेपमर्पयित्वादत्वा इव। सद्यस्तत्क्षणे। सद्यः सपदि तत्क्षण इतिकोषः। विशदो व्यक्तः। निर्म्मल इतियावत्। विशदः पाण्डुरे व्यक्ते इतिमेदिनी। अन्तरात्मा यस्य स एतादृशो जातोऽस्मि।

इति श्रीपन्तोपनामक श्रीजनकवल्लभकृतायां
शकुन्तलाव्याख्यायां चतुर्थोऽङ्कः।



# अभिज्ञानशाकुन्तलम् ।

पञ्चमोऽङ्कः ।

ततः प्रविशति कञ्चुकी (१) ।

कञ्चु । अहोबत ! कीदृशीं वयोऽवस्थामापन्नोऽस्मि ।

आचार इत्यधिकृतेन मया गृहीता
या वेत्रयष्टिरवरोधगृहेषु राज्ञः ।
काले गते बहुतिथे मम सैव जाता
प्रस्थानविक्लवगतेरवलम्बनाय२ ॥

यावदभ्यन्तरगताय देवाय स्वमनुष्ठेयमकालक्षेपार्हं नि-वेदयामि३ । स्तोकमन्तरं गत्वा । किं पुनस्तत् ?

---

(१) कञ्चुकीति । अन्तःपुरचरो वृद्धो विप्रो गुणगणान्वितः । सर्वकार्य्यार्थकुशलः कञ्चुकीत्यभिधीयत इति ।

(२) आचार इति । अवरोधगृहेष्वन्तःपुरेषु अधिकृतेनान्तर्वंशिकेन । अन्तःपुरेत्वधिकृतः स्यादन्तर्वंशिकोजन इत्यमरः । मयाऽऽचार इति अस्माकमयमाचार इतिहेतोः या वेत्रस्य यष्टिर्दण्डः गृहीता । सैव यष्टिः । बहुतिथे बहूनाम्पूरणस्तस्मिन् । बहुशब्दात्पूरणेऽर्थे तस्य पूरणे डडिति डटि तस्मिन् परे बहुपूगगणसङ्घस्य तिथुगिति तिथुगागमः । काले गते याते सति । प्रस्थाने यात्राकाले विक्लवा विकृता गतिर्गमनं यस्य तस्य ममाऽवलम्बनाय आश्रयणाय जाता । अवस्थाविशेषेणैतादृशी दुर्बलता जातेति भावः ।

(३) यावदिति । अभ्यन्तरगताय अन्तःपुरगताय देवाय राज्ञे । राजास्वामीति देवेति भृत्यैरित्युक्तत्वाद्देवशब्दप्रयोगः । अकालक्षेपार्हं कालक्षेपे विलम्बे अनर्हमयोग्यम् । स्वस्यात्मीयस्यानुष्ठेयम् अनुष्ठातुमितं योग्यम् । निवेदयामि विज्ञापयामि ।

विचिन्त्य । आं, ज्ञातं कण्वशिष्यास्तपस्विनो देवं द्रष्टुमिच्छन्ति, भोः चित्रमेतत् !

क्षणात् प्रबोधमायाति, लङ्घ्यते तमसा पुनः[1] ।
निर्व्वास्यतः प्रदीपस्य शिखेव जरतो मतिः ॥

परिक्रम्यावलोक्य च । एष देवः

प्रजाः प्रजाः स्वा इव तन्त्रयित्वा,
निषेवते श्रान्तमना विविक्तम् ।
यूथानि सञ्चार्य्य रविप्रतप्तः
शीतं गुहास्थानमिव द्विपेन्द्रः[2] ॥

भोः ! सत्यं धर्म्मकार्य्यमनतिपात्यं देवस्य,[3] तथापि शङ्कितवानस्मि इदानीमेव धर्म्मासनादुत्थिताय देवाय क-

(१) क्षणादिति । जरतो वृद्धस्य मतिर्बुद्धिः । निर्वास्यतो-ऽञ्चमितदीपस्य शिखेव क्षणात्प्रबोधं स्मरणम् । पक्षे परिस्फुरणमायाति प्राप्नोति । पुनस्तमसा तमोगुणेन पक्षेऽन्धकारेण । लङ्घ्यते व्याप्यते ।

(२) प्रजाइति । स्वाः स्वकीयाः प्रजाः सन्तानानिव । प्रजाः स्वनगरवासिनो जनान् तन्त्रयित्वा पालयित्वा । न्यायमार्गन्दर्शयित्वेति यावत् । यूथानि करिकुलानि सञ्चार्य्य । रविप्रतप्तो रविणा सूर्य्येण प्रतप्तः सन्तप्तः द्विपेन्द्रो हस्तिपतिः शीतं गुहास्थानं बिलस्थानमिव । दरीतु कन्दरोवास्त्री देवखात बिलेगुहेत्यमरः । श्रान्तमनो यस्य स एतादृश एष देवः विविक्तञ्जनरहितस्थानं निषेवते अधिवसति ।

(३) सत्यमिति । देवस्य राज्ञः धर्मकार्यं धर्मस्यादृष्टविशेषस्य कार्यं कर्म अनतिपात्यं लङ्घनानर्हम् इति सत्यं नम्यथा तथाऽपि इदानीमेवाऽस्मिन्काले एव धर्मासनात् धर्मदर्शकस्यासनादासनादुत्थिताय । शङ्कितवानस्मि भीतोऽस्मि ।

एवमृष्यागमनं निवेदयितुम्। अथवा कुतो विश्रामो लोकपालानाम्। तथाहि।

भानुः सकृद्युक्ततुरङ्ग एव,
रात्रिन्दिवं गन्धवहः प्रयाति।
शेषः सदैवाहितभूमिभारः,
षष्ठांशवृत्तेरपि धर्म्म एषः[1]॥

इति परिक्रामति।

ततः प्रविशति राजा विदूषको विभवतश्च परीवारः।

राजा। अधिकारखेदं निरूप्य। सर्व्वः प्रार्थितमधिगम्य सुखी सम्पद्यते जन्तुः, राज्ञान्तु चरितार्थता दुःखोत्तरैव। कुतः

औत्सुक्यमात्रमवसादयति प्रतिष्ठा,
क्लिश्नाति लब्धपरिपालनवृत्तिरेव।

---

(१) भानुरिति। यथासकृत् युक्ताः सम्बद्धा तुरङ्गा अश्वा येन तादृश एव भानुः सूर्यः प्रयाति अहर्न्निशं गच्छतीत्यर्थः। गन्धान् वहति प्रापयतीति गन्धवहो वायुः। रात्रिन्दिवं रात्रिश्च दिवा चेति इनुइटचतुरविचतुरेत्यादिना मान्तत्वन्निपातितम्। अहोरात्रं प्रयाति वहति। शेषोऽनन्तः सदैवाहितो भूमिभारो यस्मिन् स एतादृशः भवति। तथा षष्ठांशो वृत्तिर्जीवनं यस्यैतादृशस्य राज्ञोऽपि एष विश्रामाभावरूपो धर्मः। अनवसरे मया विज्ञापितोऽयं स्वधर्ममवेक्ष्य न कुप्यतीति भावः।

(१) औत्सुक्यमात्रमिति। प्रतिष्ठा गुरुता औत्सुक्यमात्रमुत्कण्ठामात्रमवसादयति नाशयति। लब्धस्य राज्यस्य परिपालनवृत्तिः पालनरूपाचारः क्लिश्नात्येव दुःखञ्जनयत्येव। नतु सुखमुत्पादयतीत्यर्थः। स्वहस्तेनात्मकरेण धृतो दण्डो यस्य तत्तथाभूतमातपत्रमिवातया त्रायतेऽइति आतपत्रं छत्रमिव। राज्यं यथा स्वधृतच्छत्रं श्रमायखेदाय भवति। तथेति श्रमापनयन.य श्रम आतपजनितो श्रः-

नातिश्रमापनयनाय यथा श्रमाय
राज्यं स्वहस्तधृतदण्डमिवातपत्रम्[१]॥

नेपथ्ये। वैतालिकौ। जयति जयति देवः।

एकः।

स्वसुखनिरभिलाषः खिद्यसे लोकहेतोः
प्रतिदिनमथवा ते वृत्तिरेवंविधैव।
अनुभवति हि मूर्ध्ना पादपस्तीव्रमुष्णं
शमयति परितापं छायया संश्रितानाम्[२]॥

द्वितीयः।

नियमयसि विमार्गप्रस्थितानात्तदण्डः,
प्रशमयसि विवादं, कल्पसे रक्षणाय।
अतनुषु विभवेषु ज्ञातयः सन्तु नाम,-
त्वयि तु परिसमाप्तं बन्धुकृत्यं जनानाम्[३]॥

खेदस्यापनयनाय निराकरणाय न भवति तद्वदिदमपि श्रान्तिशमनाय न भवतीत्यर्थः।

(२) स्वसुखेति। स्वस्यात्मनः सुखेषु निरभिलाषः सन्नाकाङ्क्षारहितः सन् लोकहेतोः प्रजार्थम्। खिद्यसे खेदं प्राप्नोषि। अथवा पक्षान्तरे ते तव एवंविधा एवंप्रकारा वृत्तिः स्वभावः। वृत्तिस्तु निर्मितौ। स्वभावेऽप्यथ वर्त्तत इति मेदिनीकोषः। हि तथाहि। मूर्ध्ना शिखरेण। तीव्रं गाढं दुःसहमिति यावत्। उष्णं निदाघं अनुभवति स्वीकरोति। छायया संश्रितानामाश्रितानां परितापं सन्तापं शमयति शमुउपशम इत्यस्माच्छ्रिचि मितां ह्रस्व इति ह्रस्वः।

(३) नियमयसीति। विमार्गे उत्पथे प्रस्थितान् गतान् जनान्। अविहितकर्मकरणे प्रवृत्तानित्यर्थः। आत्तो गृहीतो दण्डो दण्डविधिः येनैतादृशः सन् नियमयसि नियमनं करोषि दण्डयसीति यावत्। विवादं कलहं प्रशमयसि नाशयसि। तव राज्ये कलहकारी कोऽपि नास्तीत्यर्थः। रक्षणाय प्रजानां पालनाय कल्पसे समर्थोऽसि। क्लृपसमर्थकधातुयोगे सम्पद्यमानस्य यः कर्त्ता तत्र चतुर्थी

राजा। आकर्ण्य साश्चर्य्यम्। एतेन कार्य्यानुशासन-परिश्रान्ताः पुनर्नवीकृताः स्मः।

विदू। विहस्य। भोः! गोविन्दारअत्ति भणिदस्स विसभस्स किं परिस्समो णस्सदि[1]?।

राजा। सस्मितम्। ननु क्रियतामासनपरिग्रहः।

उभौ। उपविष्टौ, परिजनश्च यथास्थानं स्थितः।

नेपथ्ये वीणाशब्दः।

विदू। कर्णं दत्त्वा। भो वअस्स! सङ्गीदसालब्भन्तरे कण्णं देहि, ताललअसुद्धाए वीणाए सरसंजोओ सुणीअदि, जाणे तत्थभोदी हंसवदी वण्णपरिचअं करेदि त्ति[2]।

•

स्यादित्यर्थकेन क्लृपिसम्पद्यमाने चेत्यनेन पालनशब्दे चतुर्थी। ज्ञातयो बान्धवाः अतनुषु महत्सु विभवेषु धनेषु। संविभक्ताः सम्यग्विभागिनः आप्ता। न तु यथाकथञ्चिदित्यर्थः। तु किन्तु जनानां बन्धुकृत्यं त्वयि परिसमाप्तं त्वय्येव जातम्।

(१) भो गोवृन्दारक इति भणितस्य वृषभस्य किं श्रमो नश्यति। किं वृषभस्य गवां वृन्दारकः श्रेष्ठ इत्यनेनैव श्रमः खेदो नश्यति। किमिति प्रश्ने। वृन्दारकः सुरे पुंसि मनोज्ञश्रेष्ठयोस्त्रिष्विति मेदिनीकारः। आसनमत्रस्थीयतामिति भावः। नन्विति। आसनस्य परिग्रहः स्वीकारः।

(२) भो वयस्य सङ्गीतशालाभ्यन्तरे कर्णन्देहि, ताललयशुद्धाया वीणायाः स्वरसंयोगः श्रूयते। जाने तत्र भवती हंसवती वर्णपरिचयं करोति। सङ्गीतस्य नृत्यगीतवाद्यस्य शाला गृहं तस्या अभ्यन्तरे कर्णन्देहि श्रोत्रं नियोजय। शृण्विति यावत्। ताललयशुद्धायाः गीतस्य कालक्रियामानन्तालः। गीतस्य वाद्यस्य च साम्यं लयस्ताभ्यां शुद्धाया विस्वरादि दोषरहितायाः। तालः कालक्रियामानं लयः

राजा। तूष्णीं भव, यावदाकर्णयामि।

कञ्चु। विलोक्य। अभ्यासन्नो देवः, तदवसरं प्रतिपालयामि।

इत्येकान्ते स्थितः।

नेपथ्ये गीयते।

अहिणवमहुलोहभाविदो
तह परिचुम्बिअ चूअमञ्जरिम्।
कमलवसदिमेत्तणिव्बुदो
महुअर। विह्मरिदोसि णं कहं[1]?॥

राजा। अहो! रागपरिवाहिणी गीतिः[2]।

विदू। भो वअस्स! किं दाव से गीदिआए अवि गहीदो भअदा अक्खरत्थो[3]?।

मान्यमित्यमरः। वर्णस्य गीतिभेदस्य। परिचयः सप्तस्वराणामारोहाऽवरोहक्रमभेदेनाभ्यासस्तं करोति।

(१) अभिनवमधुलोभभावितस्तथा परिचुम्ब्य चूतमञ्जरीम्। कमलवसतिमात्रनिर्वृतो मधुकरः विस्मृतोऽस्येनाङ्कथम्। हे मधुकर भ्रमर। अभिनवस्य नूतनस्य मधुलोभेन भावितः उक्तः। तथा चूतस्याम्रस्य मञ्जरी परिचुम्ब्य। कमले वसतिमात्रेण वासमात्रेण सुस्थिता स्वस्थस्त्वम् एताञ्चूतमञ्जरीं कथं विस्मृतोऽसि। इदं प्रच्छेदकनामकं लास्याङ्गम्। अन्याऽऽसक्तं पतिं मत्वा प्रेमविच्छेदमन्युना। वीणापुरःसरंगानं स्त्रियाः प्रच्छेदको मतं इत्युक्तेः। एतेन शकुन्तलाया विस्मरणमप्याऽऽयिष्कृतम्।

(२) अहोः इति। रागं गान्धारादिस्वरं वहति प्रापयतीति विग्रहः। गीतिर्गानम्। रागस्तु मात्सर्ये रोहितादिषु। क्लेशादावनुरागेच गान्धारादाविति मेदिनी।

(३) भो वयस्य किन्तावदस्या गीतिकाया अपि गृहितो भवताऽक्षरार्थः। गृहीतो ज्ञातः।

राजा। सस्मितम्। सकृत्कृतप्रणयोऽयं जन इत्यत्र-राथिः। तदहं देवीं हंसवतीमन्तरेण उपालम्भन-मागतोऽस्मि, सखे माधव्य! मद्वचनादुच्यतां देवी हंसवती सम्यगुपालब्धोऽस्मीति[1]।

विदू। जं भवं आणवेदि। उत्थाय। भो वअस्स! गहीदो तुए परकीएहिं हत्थेहिं सिहण्डए अच्छभल्लो, ता वीदरायस्स अमरणस्स णत्थि मे मोक्खो[2]।

राजा। सखे। गच्छ नागरिकवृत्त्या सान्त्वयैनाम्[3]॥

विदू। का गई[4]। इति निष्क्रान्तः।

राजा। स्वगतम्। किन्नु खलु गीतमेवंविधमाकर्ण्य इष्टजनविरहादृतेऽपि बलवदुत्कण्ठितोऽस्मि? अ-थवा,

---

(१) सकृदिति। सकृदेकवारं कृतः प्रणयो यस्मिन् स एता-दृश इति अयं जनः वर्णस्याऽर्थाभिधेयः। देवीं कृताऽभिषेकाम्। वसुमतीमन्तरेण हंसवतीं विना। अन्तरान्तरेणयुक्ते इति द्वितीया। उपालम्भनमभियतामागतोऽस्मि प्राप्तोऽस्मि। उपालब्धोऽस्मि दूषितो-ऽस्मि।

(२) यद्भवानाज्ञापयति। भो वयस्य गृहीतस्त्वया परकीयाभ्यां हस्ताभ्यां शिखण्डके अच्छभल्लः तद्वीतरागस्याऽमरणकस्य नास्ति मे मोक्षः। परकीयाभ्यां हस्ताभ्याम् अन्यदीयहस्ताभ्याम्। करणाभ्याम्। शिखण्डके शिखायाम्। अच्छभल्लो भल्लूकः। वीतरागस्य गतो रागो यस्य। कं प्राप्यशुभमशून्यस्येत्यर्थः।

(३) नागरिकेति। नगरेभवा नागरिका विदग्धजनाश्रिता वृत्त्या स्वभावेनैनां हंसवतीं सान्त्वय शान्ताकुरु।

(४) का गतिः। अन्योपायो नास्तीत्यर्थः।

(५) रम्याणीति। रम्याणि मनोहराणि द्रव्याणि वीक्ष्य दृष्ट्वा तथा मधुरांश्च मधुरगुणयुक्तांश्च निशम्य श्रुत्वा मधुरगुणान्यश्च इत्यादि-

रम्याणि वीक्ष्य मधुरांश्च निशम्य शब्दान्
पर्य्युत्सुको भवति यत् सुखितोऽपि जन्तुः।
तच्चेतसा स्मरति नूनमबोधपूर्व्वं
भावस्थिराणि जननान्तरसौहृदानि[1]॥

इत्यस्मृतिनिमित्तमुन्मनस्कत्वं रूपयति।

कञ्चु। उपसृत्य। जयति जयति देवः! एते खलु हिमगिरेरुपत्यकारण्यवासिनः कण्वसन्देशमादाय सस्त्रीकास्तपस्विनः संप्राप्ताः। श्रुत्वा देवः प्रमाणम्[2]।

राजा। सविस्मयम्। किं कण्वसन्देशहारिणः सस्त्रीकास्तपस्विनः?

कञ्चु। अथ किम्।

राजा। तेन हि विज्ञाप्यतां मद्वचनादुपाध्यायः सोमरातः, अमूनाश्रमवासिनः श्रौतेन विधिना सत्कृत्य स्वयमेव प्रवेशयितुमर्हतीति। अहमप्येतांस्तपस्विदर्शनोचितप्रदेशे प्रतिपालयामि।

कञ्चु। यथाज्ञापयति देवः। इति निष्क्रान्तः।

---

ना। मधुरं रसवद्वाचि वस्तुन्यपि रसस्थितिः। येन माद्यन्ति धीमन्तो मधुनेव मधुव्रताः इति। सुखितोऽपि सुखयुक्तोऽपि जन्तुः पर्य्युत्सुको भवति उत्कण्ठितो भवति। तत्तस्मात्कारणादबोधपूर्व्वं यथास्यात्तथा। भावस्थिराणि भावात् अभावात् स्थिराणि निश्चलानि। भावः सत्ता स्वभावेत्यमरः। जननान्तरसौहृदानि अन्यज्जननं जननान्तरं तस्य सौहृदानि चेतसा मनसा स्मरति। अन्यथा मयि एतादृश्युत्कण्ठता नस्यादिति भावः।

(२) एते इति। हिमगिरेर्हिमालयस्य। उपत्यकाऽऽसन्न भूमिस्तटस्तस्मिन् वसन्ति तच्छीलाः। कण्वस्य सन्देशं संवादम् आदाय गृहीत्वा।

राजा । उत्थाय । वेत्रवति ! अग्निशरणमार्गमादेशय ।

प्रतीहारी । इदो इदो एदु देवो । परिक्रम्य । एसो अहिणवसम्मज्जणरमणीओ सण्णिहिदहोमधेणू अग्गिसरणालिन्दो ता आरोहदु देवो[1] ।

राजा । आरुह्य परिजनांसावलम्बी तिष्ठन् । वेत्रवति ! किमुद्दिश्य तत्रभवता काश्यपेन मत्सकाशमृषयः प्रेषिताः ?

किन्तावद्व्रतिनामुपोढतपसां विघ्नैस्तपो दूषितं ?
धर्मारण्यचरेषु केनचिदुत प्राणिष्वसच्चेष्टितम् ? ।
आहोस्वित् प्रसवो ममापरिचितैर्विष्टम्भितो वीरुधा ?
मित्यारूढबहुप्रतर्कमपरिच्छेदाकुलं मे मनः[2] ॥

(१) इत इत एतु देवः । एषोऽभिनवसम्मार्जनरमणीयः सन्निहितहोमधेनुरग्निशरणाऽलिन्दः तदारोहतु देवः अभिनव । संमार्जनेनाचिरनिष्पन्नेन रमणीयः सुन्दरः । सन्निहिता होमधेनुर्यस्मिन् एतादृशः । एषोऽग्निशरणस्याग्निगृहस्य । शरणं गृहरक्षित्रोरिति कोषः । अलिन्दः कोष्ठाकारकोद्वारस्य वहिर्भागः । प्रघाणप्रघणाऽलिन्दावहिर्द्वारप्रकोष्ठके इत्यमरः । तत्तस्मादारोहतु । प्रार्थनायां लोट् ।

(२) किमिति । उपोढं तपो यैस्ते तेषां तापसानामित्यर्थः । व्रतिनां यज्वनाम् । व्रती यज्वा च यजमानश्चेत्यमरः । तपस्तपस्यादि तावत्काकल्पेन विघ्नैः राक्षसादिकृतान्तरायैः । दूषितं व्याहतम् । उत धर्मारण्ये चरन्तीति धर्मारण्यचरास्तेषु प्राणिषु केनचिदसता असञ्चेष्टितं पापमाचरितम् । आहोस्वित् मम अपरिचितैः नास्ति परिचितं येषान्ते अपरिचितास्तैरजातमत्परिचयैरित्यर्थः । वीरुधाम् । लताप्रतानिनी वीरुदित्यमरः । प्रसवः फलम् । विष्टम्भितः प्रतिबन्धितः । विष्टम्भः प्रतिबन्धे स्यादिति मेदिनी । इति आरूढा बहवः प्रतर्का यस्मिन्नदेतादृशं मेमम मनश्चित्तम् अपरिच्छेदाऽऽकुलम् अपरिच्छेदेनासमाप्त्या आकुलं भवतीत्यर्थः ।

(१) देवस्य भुजदण्डनिर्वृत्ते आश्रमपदे कुत एवं, किन्तु सुचरिता-

अनौ । देवस्स भुअदण्डणिव्वुदे अस्समपदे कुदो एव्वं किन्तु सुचरिदाहिणन्दिणो इसीओ देवं सभाज-इदुं आअदे त्ति तक्केमि[1] ।

ततः प्रविशतो गौतमीसहितौ शकुन्तलामादाय कण्वशिष्यौ पुरतश्चैषां पुरोहितकञ्चुकिनौ ।

कञ्चु । इत इतो भवन्तः ।

शार्ङ्गरवः । सखे शारद्वत ।

महाभागः कामं नरपतिरभिन्नस्थितिरसौ
न कश्चिद्वर्णानामपथमपकृष्टोऽपि भजते ।
तथापीदं शश्वत्परिचितविविक्तेन मनसा
जनाकीर्णं मन्ये हुतवहपरीतं गृहमिव[2] ॥

शारद्वतः । शार्ङ्गरव । स्थाने खलु पुरप्रवेशात्तवेदृशः संवेगः[3] । अहन्तु

---

ऽभिनन्दिन ऋषयो देवं सभाजयितुमागता इति । सुचरिताऽभिनन्दिनः सदाचरण प्रशंसनशीलाः । सभाजयितुमानन्दयितुम् । आनन्दनसभाजने इत्यमरः ।

(२) महाभाग इति । महान् भागो यस्यैतादृशः असौ नरपतिर्दुष्यन्तनामको राजा । कामं पर्य्याप्तम् अभिन्नस्थितिरभिन्ना स्थितिर्मर्यादा येन स एतादृशोऽस्ति । अत्र राजनि वर्णानामपकृष्टोऽधम शूद्रादिरपि कश्चिदपरिचितोऽपि अपथं कुत्सितं मार्गञ्च भजते । किं पुनर्ब्राह्मणादय इति भावः । तथाप्यपकृष्टाद्भयाऽभावेऽपि । शश्वन्निरन्तरं परिचितः सेवितः विविक्तो विजनो येन तदेतादृशेन मनसा चित्तेन जनाकीर्णं जनेनाकीर्णं व्याप्तमिदं भवनं हुतवहपरीतं हुतं होमद्रव्यं वहति उद्दिष्टान्देवतान् प्रापयतीति हुतवहोऽग्निस्तेन परीतमाक्रान्तं गृहमिव मन्ये । अन्तर्ज्जाटीति गन्तुमशक्यत इति भावः ।

(२) स्थान इति । पुरस्य नगरस्य प्रवेशात् । संवेग आवेगः सम्भ्रम इति यावत् ।. स्थाने युक्तम् ।

अभ्यक्तमिव स्नातः, शुचिरशुचिमिव, प्रबुद्ध इव सुप्तम्।
बद्धमिव स्वैरगतिर्जनमिह सुखसङ्गिनमवैमि[1]॥

पुरोधाः। अतएव भवद्विधा महात्मानः।

शकुन्तला। दुर्निमित्तमभिनीय। अम्मो! किं मे वामेदरं णअणं विप्फुरदि[2]।

गौतमी। जादे! पड़िहदं अमङ्गलं, सुहाइं दे होन्तु[3]।

इति परिक्रामन्ति।

पुरो। राजानं निर्द्दिश्य। भो भोस्तपस्विनः! असावत्र भवान् वर्णाश्रमाणां रक्षिता प्रागेव मुक्तासनः प्रतिपालयति वः, पश्यतैनम्।

शार्ङ्ग। भो महाब्राह्मण काममेतदभिनन्दनीयं, तथापि वयमत्र मध्यस्थाः[4]। कुतः

(१) अभ्यक्तमिवेति। इह स्नातो जनः अभ्यक्तइव तैलाभ्यक्तं यक्तमिव। शुचिः पुमान् अशुचिवाऽपवित्रमिव। प्रबुद्धो जाग्रदवस्थो जन सुप्तमिव निद्राणमिव। स्वैरगतिः स्वैरा स्वच्छन्दा गतिर्गमनं यस्य स एताऽशो जनो बद्धमिव अहन्तु सुखसङ्गिनं सुखासक्तं जनं तथा अवैमि अपकृष्टं जानामि।

(२) अम्ब किं मे वामेतरन्नयनं विस्फुरति। वामेतरं दक्षिणम्। स्त्रीणां हि दक्षिणाक्षिस्पन्दनमशुभसूचकम्।

(३) जाते प्रतिहतममङ्गलं सुखानि ते भवन्तु। भत्तिकुलदेवदाओ विदरन्तु इति वा पाठः। तेनव सुखानि भक्तिकुलदेवता वितरन्त्वित्यर्थः।

(४) काममिति। एतन्मुक्तासनत्वं कामं पर्य्याप्तम् अभिनन्दनीयं प्रशंसार्हन्तथाऽपि अत्र प्रशंसार्हे वस्तुनि वयं मध्यस्था उदासीनाः।

(१) भवन्तीति। यथा तरवो वृक्षाः फलोद्गमैः नम्राः भवन्ति। घना मेघाः। नवाम्बुभिर्नूतनजलैः प्रथमं सञ्चित जलैरिति यावत्।

भवन्ति नम्रास्तरवः फलोद्गमै,
र्नवाम्बुभिर्दूरविलम्बिनो घनाः ।
अनुद्धताः सत्पुरुषाः समृद्धिभिः,
स्वभाव एवैष परोपकारिणाम्[1] ॥

प्रती । देव ! पसण्णमुहा इसीओ दीसन्ति[2] ।

राजा । शकुन्तलां निर्वर्ण्य । अये ! अत्र
केयमवगुण्ठनवती, नातिपरिस्फुटशरीरलावण्या ।
मध्ये तपोधनानां, किसलयमिव पाण्डुपत्राणाम्[3] ॥

प्रती । भट्टा ! कुदूहलगब्भो पडिहदो ण मे तक्को पसरदि, दंसणीआ उण से आकिदी लक्खीअदि[4] ।

राजा । भवत्वनिर्वर्ण्यं खलु परकलत्रम् ।

दूरं विलम्बन्त इति दूरविलम्बिनः । अनतिदूरवर्त्तिनो यथाभवन्ति जायन्ते । तथा सत्पुरुषाः सज्जनाः समृद्धिभिः ऐश्वर्याधिक्यसमृद्धिलाभिः । अनुद्धता औद्धत्यरहिता नम्रा इति यावत् । भवन्ति । परोपकारिणां स्वेतरोपकारशीलानाम् एष एव स्वभावः प्रकृतिः । यथा प्रजापालनाय काले काले वर्षति तथाऽयमपि दानादिना जनान् ममत्वेन पालयतीतिभावः ।

(२) देव प्रसन्नमुखा ऋषयो दृश्यन्ते । प्रसन्नानि मुखानि येषान्ते प्रसन्नमुखाः । अननुभूतदुःखा इत्यर्थः ।

(३) केयेति । अत्र ऋषिसमुदाये पाण्डुपत्राणां सितपत्राणामध्ये । निर्द्धारणे षष्ठी । पाण्डुर्ना नृपतौ सित इति मेदिनी । किशलयमिव पल्लवमिव तपोधनानां तप एव धन येषान्तेषामृषीणाम्मध्ये । नातिपरिस्फुटं शरीराणां लावण्य यस्याः सा एतादृशी । मुक्ताफलेषुच्छायायास्तरलत्वमिवान्तरा । प्रतिभाति यदङ्गेषु तल्लावण्यमिहोच्यत इति लावण्यलक्षणम् । अवगुण्ठन शिरश्छादनं विद्यते यस्यामेतादृशीयं का ।

(४) भर्त्तुः कुतूहलगर्भः प्रतिहतो न मे तर्कः प्रसरति दर्शनीया पुनरस्या आकृतिर्लक्ष्यते । कुतूहलं गर्भेऽन्तरे यस्यैतादृशो

शकु। उरसि हस्तं दत्त्वा स्वगतम्। हिअअ! किं एव्वं वेवसि? अज्जउत्तस्स तादिसभाणुबन्धं सुमरिअ धीरत्तणं दाव अवलम्बस्स[1]।

पुरो। पुरोगत्वा। स्वस्ति देवाय, देव! एते खलु विधिवदर्च्चितास्तपस्विनः, कश्चिदेतेषु उपाध्याय-सन्देशोऽस्ति; तं देवः श्रोतुमर्हति।

राजा। अवहितोऽस्मि।

शिष्यौ। हस्तमुद्यम्य। भो राजन्! विजयतां भवान्।

राजा। सर्व्वानभिवादये वः।

शिष्यौ। स्वस्ति देवाय।

राजा। अपि निर्व्विघ्नं तपः?

शिष्यौ।

कुतो धर्म्मक्रियाविघ्नः? सतां रक्षितरि त्वयि।
तमस्तपति घर्म्मांशौ कथमाविर्भविष्यति[2]॥

राजा। आत्मगतम्। सर्व्वथा अर्थवान् खलु मे राज-शब्दः[3]। प्रकाशम्। तत्रभवान् कुशली कण्वः?

---

न मम। तर्को विचारणं प्रतिहतः सन्। न प्रसरति न गच्छति। न निर्णेतुं शक्नोतीत्यर्थः।

(१) हृदय किमेवं वेपसे आर्य्यपुत्रस्य तादृशभावानुबन्धं स्मृत्वा धीरत्वन्तावदवलम्बस्व।

(२) कुत इति। त्वयि रक्षितरि पालनकर्त्तरि सति सतां शिष्टानां धर्म्मक्रियायां विघ्नोऽन्तरायः कुतः स्यात् कस्मादपीत्यर्थः। घर्म्मांशौ घर्मा उष्णा अंशवः किरणा यस्य सतस्मिन्दिवाकरे तपति सन्तापयति सति तमः कथमाविर्भविष्यति। सूर्य्यकल्पे राजनि त्वयि विघ्नकथैव नास्तीति भावः।

(३) सर्व्वथेति। मे मम राजशब्दो राजेति शब्दः। अर्थवान्। प्रजारञ्जनेनानुगतार्थ इत्यर्थः।

शार्ङ्ग । राजन् ! स्वाधीनकुशलाः सिद्धिमन्तः[१] । सम-
वन्तमनामयप्रश्नपूर्व्वकमिदमाह ।

राजा । किमाज्ञापयति भगवान् ?

शार्ङ्ग । यन्मिथः समयादिमां मदीयां दुहितरं भवा-
नुपयेमे, तन्मया प्रीतिमता युवयोरनुज्ञातम्[२] ।
कुतः

त्वमर्हतामग्रसरः स्मृतोऽसि नः,
शकुन्तला मूर्त्तिमतीव सत्क्रिया ।
समानयंस्तुल्यगुणं वधूवरं,
चिरस्य वाच्यं न गतः प्रजापतिः[३] ॥

तदिदानीमापन्नसत्त्वेयं गृह्यतां सहधर्म्मचरणायेति ।

गौत । भद्दमुह ! किम्पि वत्तुकामम्हि, ण मे वअ-
णावसरो अत्थि[४] ।

---

(१) स्वाऽधीनेति । स्वाऽधीनान्यन्याऽनधीनानि कुशलानि येषान्त एताद्दशाः । स कण्वोऽनामयम् आरोग्य प्रश्नपूर्व्वकम् इद वक्ष्यमाणं आह कथयति स्म ।

(२) यन्मिथ इति । मिथः समयाद्गान्धर्वेण विधिना । उप-येमे । उपयमनं विवाहस्तं कृतवान् । उपाद्यम स्वकरण इत्यात्मने-पदम् ।

(३) त्वमिति । अर्हतां पूज्यानाम् अग्रसरोऽग्रेसरतीति अग्रसरो-ऽग्रगण्यः स्मृतोऽसि चिन्तितोऽसि नोऽस्माकं मूर्त्तिमती शरीरिणी सत्क्रियेव सत्कार इव । सत्कारार्हे त्वयि शकुन्तलासमर्पणमशोचनी-यमिति भावः । तुल्यगुणं तुल्या गुणा यस्य तत् तुल्यगुणमेताद्दशा वधूवरं समानयन् मेलयन् प्रजापतिर्ब्रह्मा चिरस्य । वाच्यं वच-नार्हं वाच्यन्तु कुत्सिते हीने वचनार्हे नपुंसिकत्विति कोषात् । न गतो न प्राप्तः । त्वदर्थमेवैषा विधात्रा सृष्टेति भावः ।

(४) भद्रमुख किमपि वक्तुकामाऽस्मि न् मे वचनाऽवसरोऽस्ति ।

राजा । आर्ये ! कथ्यताम् ।

गौत ।

णावेक्खिदो गुरुअणो इमिए, तुएवि ण पुच्छिदो बन्धू ।
एक्कक्कस्स अ चरिए किं भणादु एक एक्कस्सिं[1] ॥

शकु । आत्मगतम् । किस्सु क्खु अज्जउत्तो भणिस्सदि[2] ? ।

राजा । साशङ्कमाकर्ण्य । अये ! किमिदमुपन्यस्तम्[3] ?

शकु । आत्मगतम् । हद्दी, हद्दी ! सावलेवो से वअ-णाबक्खेवो[4] ।

शार्ङ्ग । किं नाम किमिदमुपन्यस्तमिति, ननु भवन्त एव सुतरां लोकवृत्तान्तनिष्णाताः[5] ।

सतीमपि ज्ञातिकुलैकसंश्रयां
जनोऽन्यथा भर्तृमतीं विशङ्कते ।

(१) नापेक्षितो गुरुजनोऽनया त्वयाऽपि न पृष्टो बन्धुः । एकैकस्य च चरिते किम्भणत्वेक एकस्मिन् । अनया शकुन्तलया गुरुजनः पितृजनो माऽपेक्षितो नकृतापेक्षः मातृमुखापित इतियावत् । त्वयाऽपि बन्धुरात्मीय जनो न पृष्टः । एकैकस्यान्योन्यस्यै कस्मिन् चरिते विवाहरूप व्यवहारविषये एकोऽपरः किम्भणतु ! युवाम्भ्राऽनुयोगार्हाविति भावः ।

(२) किन्नु खल्वार्यपुत्रो भणिष्यति ।

(३) अये इति । इदं शकुन्तलारूपमुपन्यस्त कथनसमीपन्यासीकृतमासीत्किम् इति प्रश्नः ।

(४) हा धिक् हा धिक् सावलेपोऽस्य वचनाऽपक्षेपः । वचनानामुक्तीनामवक्षेपः प्रयोगः सावलेपो गर्वसहितः ।

(५) किमिति । भवन्तः पूज्या एव सुतरामत्यन्तं लोकवृत्तान्तस्य लोकाना जनानां वृत्तान्तस्य वार्त्तीया निष्णाताः प्रवीणाः । प्रवीणे निपुणाऽभिज्ञविज्ञनिष्णातशिक्षिता इत्यमरः ।

(१) सतीमपीति । ज्ञातिकुलमेवैकं मुख्यं संश्रयन्त्याश्रयतीति ज्ञातिकुलैकसंश्रयाम् । केवलं पितृकुल एव स्थितामित्यर्थः । सती-

अतः समीपे परिणेतुरिष्यते
प्रियाऽप्रिया वा प्रमदा स्वबन्धुभिः[१] ॥

राजा। किमत्रभवती मया परिणीतपूर्व्वा ?

शकु। सविषादमात्मगतम्। हिअअ ! संपदं संवुत्ता दे आसङ्का[२] ।

शार्ङ्ग। किं कृतकार्य्यद्वेषाद्धर्म्मं प्रति विमुखतोचिता राज्ञः[३] ?

राजा। कुतोऽयमसत्कल्पनाप्रसङ्गः[४] ?

शार्ङ्ग। सक्रोधम्। मूर्च्छन्त्यमी विकारा प्रायेणैश्वर्य्यमत्तानाम्[५]।

राजा। विशेषेणाधिक्षिप्तोऽस्मि।

अपि जनलोकोऽन्यथाभर्तृमतीं व्यभिचारिणीं विशङ्कते शङ्कते इति। अतोऽस्मात् स्वस्याः प्रमदायाः बन्धुभिः पितृभिः। प्रियाऽप्रिया वा प्रमदाः। परिणेतुर्विवाहकर्त्तुः समीपे निकटे विद्यमाना इष्यते इच्छाविषयी क्रियते। प्रमदः समदेमत्ते स्त्रियामुत्तमयोषितीति मेदिनी। अर्थविशेषण नामकोनाख्याऽलङ्कारः। उक्तस्यास्य यत्तु स्यादुत्कीर्त्तनमनेकधा उपालम्भस्वरूपेण तत्स्यादर्थविशेषणमित्युक्तं।

(२) हृदय साम्प्रतं संवृत्ता ते आशङ्का।

(३) किमिति। कृतकार्य्यस्य कन्यानुमत्याऽपिकृत विवाहस्य द्वेषाद्धर्म्मं प्रति लक्षणेत्थं भूतत्यादिनाऽनोः कर्म्मप्रवचनीयत्वात्तद्योगे धर्मशब्दाद्द्वितीया। राज्ञः। विमुखता परिणीत जने। पराङ्मुखता। उचिता किं योग्या किम्।

(४) कुत इति। असत्कल्पनाया अन्यतोद्भावनाया अयं प्रसङ्गः प्राप्तिः कुतः कस्मात्।

(५) मूर्च्छन्तीति। अमी विकाराः प्रकृतिविपर्य्यासाः। ऐश्वर्य्येण मत्तानामुन्मत्तानां प्रायेण बहुधा मूर्च्छन्ति समुच्छ्रयन्ति प्रकटीभवन्तीति यावत्। मूर्च्छा मोहसमुच्छ्रयोरिति कोषः। दोषभाषणात्मको हम्भकमङ्गम्।

गौत। शकुन्तलां प्रति। जादे! मुहुत्तअं मा लज्ज, अवणइस्सं दाव दे अवगुण्ठणं, तदो भट्टा तुमं अहिजाणिस्सदि[1]। इति तथा करोति।

राजा। शकुन्तलां निर्व्वर्ण्य स्वगतम्

इदमुपनतमेवं रूपमक्लिष्टकान्ति
प्रथमपरिगृहीतं स्यान्नवेत्यव्यवस्यन्।
भ्रमर इव निशान्ते कुन्दमन्तस्तुषारं
न खलु सपदि भोक्तुं नापि शक्नोमि मोक्तुम्[2]॥

इति विचारयन् स्थितः।

प्रती। स्वगतम्। अम्मो! धम्मावेक्खिणो भट्टिणो, ईदिसं णाम सुहोवणदं इत्थीरअणं पेक्खिअ को अण्णो विआरेदि[3]।

शा॰। भो राजन्! किमिति जोषमास्यते[4]?

(१) जाते मुहूर्त्तं मा लज्जस्वाऽपनेष्यामि तावत्तेऽवगुण्ठनं ततो भर्त्ता त्वामभिज्ञास्यति।

(२) इदमिति। एवम् उपनतम् इत्थं प्रकारेण समीपागतम्। अक्लिष्टा कान्तिः यस्य तत् अम्लानशोभमिदं रूपं प्रथम परिगृहीतं स्यान्नवेति पूर्वं स्वीकृतं स्यान्नवेति अव्यवस्यन् सन्दिहानोऽहम्। भ्रमरो निशान्ते रात्र्यन्ते अन्तर्मध्ये तुषारस्तुहिनं यस्य तत् एतादृशं कुन्दमिव माघ्यमिव। माघ्यकुन्दं रक्तकल्मिलममरः। सपदि तत्क्षणे भोक्तुं न शक्नोमि मोक्तुमपि न शक्नोमि। धर्म्मलोपशङ्कयोभयमपि कर्त्तुमशक्नोमीति भावः।

(३) अहो धर्म्माऽपेक्षिणो भर्त्तारः। ईदृशनाम सुखोपनतं स्त्रीरत्नं प्रेक्ष्य कोऽन्यो विचारयति। धर्माऽपेक्षिणो धर्मम् अपेक्षन्ते तच्छीलाः। अन्य एतदतिरिक्तः कः पुरुषो विचारयति न कोपीत्यर्थः।

(४) भो इति। किमिति किमर्थं जोषं तूष्णीम् आस्यते। आस उपवेशने कर्मणि लट्।

राजा। भोस्तपस्विन्! चिन्तयन्नपि न खलु स्वीकरणमत्रभवत्याः स्मरामि, तत्कथमिमामभिव्यक्तसत्त्वलक्षणामात्मानमक्षेत्रियं मन्यमानः प्रतिपत्स्ये[1]?।

शकु। स्वगतम्। हद्दी, हद्दी! कधं परिणए ज्जेव सन्देहो, भग्गा दाणिं दूरारोहिणी आसालदा[2]।

शार्ङ्ग[1]। मा तावत्

कृताभिमर्शामनुमन्यमानः
सुतां त्वया नाम मुनिर्विमान्यः।
मुष्टं प्रतिग्राहयता स्वमर्थं
पात्रीकृतो दस्युरिवासि येन[3]॥

(१) चिन्तयन्निति। चिन्तयन्नपि तर्कयन्नपि भवत्याः शकुन्तलायाः स्वीकरणं प्रतिग्रहणं न स्मरामि तत्तस्मात्कथङ्केन प्रकारेण। अभिव्यक्तं स्पष्टं सत्त्वलक्षणं गर्भलक्षणं यस्यास्ताम्। विचारं विना गृहीतायान्तु क्षत्रियत्वस्यैव व्याघातः स्यादिति भावः।

(२) हा धिक् हा धिक् कथं परिणय एव सन्देहः भग्नेदानीं दूरारोहिणी आशालता।

(३) कृतेति। कृताभिमर्शां त्वया सह कृतसम्बन्धाम्। सुतां पुत्रीं शकुन्तलामित्यर्थः। अनुमन्यमानोऽनुजानन् मुनिः कण्वस्त्वया विमान्योऽपमाने योग्यः। नाम क्रोधे। नाम प्राकाश्यसम्भाव्यक्रोध इत्यमरः। मुष्टं चोरितद्रव्यं मुषस्तेय इत्यस्माद्धातोः क्ते। स्वं स्वकीयमर्थं वस्तु। अर्थोऽभिधेयरैवस्तु इत्यमरः। प्रतिग्राहयता जनेन दस्युरिव चौर इव येन मुनिना कण्वेन त्वं पात्रीकृतोऽसि हृतद्रव्यमादाय चौरायैव पुनर्दानवद्भवतोऽपि तेन ऋषिणा तथैव दत्ता इति भावः। इदं गुरोस्तिरस्कारणाद्द्रवनामकनाटकाङ्गम्। द्रवो गुरुतिरस्कृतिरित्युक्तेः।

(१) शार्ङ्गरवेति। त्वम् इदानीम् अस्मिन् काले विरम तूष्णीं भव। अस्माभिर्यद्वक्तव्यं तदुक्तम्। सोऽयं यमुद्दिश्योक्तं स दुष्यन्त एवं

शार । शार्ङ्गरव ! विरम त्वमिदानीं, शकुन्तले ! वक्तव्यमुक्तमस्माभिः, सोऽयमत्रभवानेवमाह, दीयतामस्मै प्रत्ययप्रतिवचनम्[1] ।

शकु । स्वगतम् । इमं अवत्थन्तरं गदे तादिसे अणुराए किंवा सुमराविदेण, अधवा अत्ता दाणिं मे सोधणीओ होदु त्ति किञ्चिवदिस्सं । प्रकाशम् । अज्जउत्त ! इत्यर्द्धोक्ते । अधवा संसइदो दाणिं एसो समुदाचारो । पोरव ! जुत्तं णाम तुह पुरा अस्समपदे सब्भावुत्ताणहिअअं इमं जणं तधासमअपुव्वअं सम्भाविअ सम्पदं ईदिसेहिं अक्खरेहिं पच्चाक्खादुं[2] ? ।

राजा । कर्णौ पिधाय । शान्तं शान्तम् ।

व्यपदेशमाविलयितुं समीहसे माञ्च नाम पातयितुम् ।
कूलङ्कषेव सिन्धुः प्रसन्नमोघं तटतरुञ्च[3] ॥

चिन्तयन्नपि भवत्या परिणयनं न स्मरामीत्याह । हे शकुन्तले अस्मै राज्ञे प्रत्ययप्रतिवचनं प्रतीतिकरमुत्तरं दीयताम् ।

(२) इदमवस्थान्तरङ्गते तादृशेऽनुरागे किं वा स्मारिते न, अथवाऽऽत्मेदानीं मे शोधनीयो भवत्विति किञ्चिद्वदिष्यामि । आर्य्यपुत्र, अथवा संशयित इदानीमेष समुदाचारः । पौरव युक्तन्नाम पुराऽऽश्रमपदे सद्भावोत्तानहृदयमिमञ्जनं तथा समयपूर्व्वकं सम्भाव्य साम्प्रतमीदृशैरक्षरैः प्रत्याख्यातुम् । आश्रमपदे आश्रमस्थाने । पदशब्दमधिकृत्य पादतच्चिह्नयोः स्थानेति मेदिनीकोषात् । समयपूर्व्वकं प्रतिज्ञापूर्व्वकं सम्भाव्य बहुमानं कृत्वा ।

(३) व्यपदेशमिति । कूलन्तीरं कषति विदारयतीति कूलं कषा । सिन्धुर्नदी सिन्धुर्नदविशेषेऽब्धौ सिन्धुर्ना सरिति स्त्रियामित्यमरात् । प्रसन्नं कलुषरहितम् ओघं जलवेगम् आविलयतुं कलुषीकर्त्तुं तटतरुञ्च तीरस्थवृक्षञ्च, पातयितुं समीहते इच्छति । तथा त्वमपि

शकु । भोदु, जइ परमत्थदो परपरिग्गहसङ्किणा तुए एव्वं पउत्तं, ता अहिसाणेण केणवि तुह आसङ्कं अवण इस्सं[1] ।

राजा । प्रथमः कल्पः[2] ।

शकु । मुद्रास्थानं परामृश्य । हद्धी, हद्धी ! अङ्गुली-अअसुण्णा मे अङ्गुली ![3] । इति सविषादं गौतमी-मुखमीक्षते ।

गौत । णूणं दे सक्कावदारे सचीतीत्थोदअं बन्दमाणाए पब्भट्टं अङ्गुलीअअं[4] ।

राजा । सस्मितम् । इदं तावत्प्रत्युत्पन्नमतित्वं स्त्रीणाम् ।

---

व्यपदिश्यते ख्याप्यते अनेनेति व्यपदेशः कुलम् आविलयितुं सदोषीकर्त्तुं माञ्च पातयितुं पतितङ्कर्त्तुं समीहसे इच्छसि । कुले नाम्नि वा ज्ञाते सति स्वीकारे दोषः स्यादिति भावः ।

(१) भवतु यदि परमार्थतः परप्रतिग्रहशङ्किना त्वया एवं प्रवृत्तं तदभिज्ञानेन केनाऽपि तवाऽऽशङ्कामपनेष्यामि । परपरिग्रह-शङ्किना परस्य इतरस्य परिग्रहशङ्किना स्त्रीजनाऽऽशङ्किना । परि-ग्रहः परिजने पत्नीति मेदिनी । अभिज्ञानेन अभिज्ञायते निश्ची-यतेऽनेनाऽङ्गुलीयकेन तेन तवाऽऽशङ्का तव सन्देहमपनेष्यामि नाश-यिष्यामि ।

(२) प्रथम इति । प्रथमः प्रधानः प्रथमस्तु भवेदादौ प्रधानेपी-तिमेदिनीकोषात् । कल्पो न्यायः कल्पःशास्त्रे विधौ न्याय इति मेदिनीकोषात् ।

(३) हा धिक् हा धिक् अङ्गुलीयकशून्या मेऽङ्गुली ।

(४) नूनन्तेशक्राऽवतारे शचीतीर्थोदकं वन्दमानायाः प्रभ्रष्टम-ङ्गुलीयकम् । शक्रावतारे शक्रावतारो देशविशेषस्तस्मिन् शचीतीर्थं शचीकृतक्षेत्रम् । तीर्थं शास्त्राऽध्वरे क्षेत्र इति मेदिनी । उदकञ्जलम् । वन्दमानायाः प्रणमन्त्याः । प्रभ्रष्टं पतितम् ।

शकु । एत्थ दाव विहिणा दंसिदं पहुत्तणं, अवरं दे कधइस्सं[1] ।

राजा । श्रोतव्यमिदानीम् ।

शकु । णं एक्कदिअहे वेदसलदामण्डवे णलिणीवत्त-भाअणगदं उदअं तुह हत्थे सण्णिहिदं आसी[2] ।

राजा । शृणुमस्तावत् ।

शकु । तक्खणं सो मे पुत्तकिदओ दीहापङ्गो णाम मिअपोदओ उवट्ठिदो, तदो तुए अअं दाव पढमं पिअदु त्ति अणुकम्पिणा उवच्छन्दिदो उदएण, ण उण सो अपरिचिदस्स दे हत्थादो उदअं उवगदो पादुं, पच्छा तस्सिं ज्जेव उदए मए गहिदे किदो तेण पणओ, एत्थन्तरे विहसिअ तुए भणिदं सव्वो सगन्धे वीससदि, जदो दुवेवि तुम्हे आरण्णआओ त्ति[3] ।

---

(१) अत्र तावद्विधिना दर्शितं प्रभुत्वम् अपरन्ते कथयिष्यामि ।

(२) नन्वेकदिवसे वेतसलतामण्डपे नलिनीपत्रभाजनगतम् उदकं तव हस्ते सन्निहितमासीत् ।

(३) तत्क्षणं स मे पुत्रकृतको दीर्घापाङ्गोनाम मृगपोतकः उप-स्थितः । ततस्त्वयाऽयन्तावत् प्रथमं पिबतु इति अनुकम्पिनोपच्छन्दित उदकेन, न पुनः सोऽपरिचितस्य ते हस्तादुदकमुपगतः पातुं, पश्चा-त्तस्मिन्नेवोदके मया गृहीते कृतस्तेन प्रणयः अत्रान्तरे विहस्य त्वया भणितं सर्वः स्वगन्धे विश्वसिति यतो द्वे अपि युवामारण्यके इति । अनुकम्पिना दयालुना उपच्छन्दितो भितः । तेन मृगशि-शुना । प्रणयो विश्वासः । स्वगन्धे आत्मीयसमुदाये । गन्धः समूहे प्रथम इति विश्वः । यतो यस्मात् । युवां त्वञ्च मृगपोतश्चेति विग्रहे त्यदादीनि सर्वैर्नित्यमित्यनेन त्यदादेर्युष्मच्छब्दस्य शेषे त्यदादितः शेषे पुन्नपुंसकयोर्लिङ्गवचनानीत्यनया स्त्रीत्वम् । आरण्यके वनोत्पन्ने ;

राजा। आभिरात्मकार्य्यनिर्व्वर्त्तिनीभिर्मधुराभिरनृतवाग्भिराकृष्यन्ते विषयिणः[1]।

गौत। महाभाअ! णारिहसि एव्वं मन्तिदुं, तवोवणसंवड्‌ढिदो क्खु अअं जणो अणभिण्णो कइदवस्स[2]।

राजा। अयि तापसवृद्धे!

स्त्रीणामशिक्षितपटुत्वममानुषीणां
संदृश्यते, किमुत याः परिबोधवत्यः।
प्रागन्तरिक्षगमनात् स्वमपत्यजात-
मन्यद्विजैः परभृताः किल पोषयन्ति[3]॥

शकु। सरोषम्। अणज्ज! अत्तणो हिअआणुमाणेण किल सव्वं पेक्खसि, को णाम अण्णो धम्मकञ्चुअव्वदेसिणो तिणच्छण्णकूवोवमस्स तुह अणुआरी भविस्सदि?[4]।

---

(१) आभिरिति। आत्मकार्य्यनिर्व्वर्त्तिनीभिः स्वकार्य्यकरणशीलाभिर्मधुराभिः प्रियाभिरनृतवाग्भिः रसत्यवाग्भिः विषयिणः कामिन आकृष्यन्ते स्ववशनीयन्ते। वयन्तु न तथेति भावः।

(२) महाभाग नार्हस्येवं मन्त्रयितुं, तपोवनसंवर्द्धितः खल्वयं जनोऽनभिज्ञः कैतवस्य।

(३) स्त्रीणामिति। अमानुषीणां मनुष्यजातिव्यतिरिक्तानां तीर्य्यग्जातीयानां स्त्रीणाम् अशिक्षितपटुत्वम् उपदेशाभावेऽपि चतुरत्वं सन्दृश्यते। उतः भो याः परिबोधवन्त्यः मनुष्यादयः ताः किमुपदिश्यन्त इत्यर्थः। परभृताः कोकिलाः अन्तरीक्षगमना उड्डयनात् प्राक् पूर्वं स्वं स्वकीयम् अपत्यजातम् अपत्यसमूहम् अन्यद्विजैः तदन्यपक्षिभिः काकैरितियावत्। पोषयन्ति पालयन्ति किलेति निश्चये।

(४) अनार्य्य आत्मनो हृदयाऽनुमानेन किल सर्व्वं प्रेक्षसे को नामान्यो धर्मकञ्चुकव्यपदेशिनस्तृणच्छन्नकूपोपमस्य तवाऽनुकारी

राजा । आत्मगतम् । वनवासाद्विभ्रमः पुनरत्रभवत्याः कोपो लक्ष्यते । तथाहि

न तिर्य्यगवलोकितं, भवति चक्षुरालोहितं,
वचोऽपि परुषाक्षरं, नच पदेषु संगच्छते ।
हिमार्त्त इव वेपते सकल एवबिम्बाधरः,
प्रकामविनते भ्रुवौ युगपदेव भेदं गते२ ॥

अपिच । सन्दिग्धबुद्धिं मामधिकृत्य अकैतव इवास्याः कोपः सम्भाव्यते । तथाह्यनया

मय्येवमस्मरणदारुणचित्तवृत्तौ
वृत्तं रहः प्रणयमप्रतिपद्यमाने ।
भेदाद्भ्रुवोः कुटिलयोरतिलोहिताक्ष्या
भग्नं शरासनमिवातिरुषा स्मरस्य३ ॥

---

भविष्यति । धर्मकञ्चुकव्यपदेशिन धर्मरूपाऽऽवरणेन व्यपदेशिनो न्निर्दोष मदर्शयतस्तृणैश्छन्नो यः कूपस्तत्सदृशस्य तवाऽनुकारी त्वत्तुल्योन्यः को भविष्यति । त्वदनुरूपोऽन्यः कोपिनास्तीति भावः ।

( १ ) वनेति । भवत्याः शकुन्तलायाः । अविभ्रमो विलासरहितः । लक्ष्यते दृश्यते ।

( २ ) नेति । अस्याः शकुन्तलायाः अवलोकितं दर्शनं न तिर्य्यक् वनवासितया न वक्रम् । नागरीणां सविभ्रमे कोपे तु तिर्य्यगेव स्यादिति भावः । चक्षुर्नेत्रम् आलोहितमासमन्ताद्रक्तम् । सविभ्रमे तु ईषद्रक्तं स्यादिति भावः । अतिपरुषाण्यक्षराणि यस्मिन्नेतादृशं वचोऽपि वचनमपि पदेषु तत्प्रभृतेष्वस्मासु न सङ्गच्छते । नागरीराग-भुक्तिस्तु परुषाऽपि अनुरागस्य व्यञ्जिकाऽस्मास्तु न तथेति भावः । सकल एव सम्पूर्ण एव बिम्बाऽधरः । हिमेनाऽऽर्त्तः पीडित इव वेपते कम्पते । सविभ्रमे तु न तथाभवतीति भावः । प्रकामविनते अत्यन्तनम्रीभूते भ्रुवौ युगपदेवैकस्मिन् काल एव भेदं गते प्राप्ते । अन्यथा तथा न स्यादिति भावः ।

( ३ ) मय्येवेति । एवममेन प्रकारेणाऽस्मरणेन दारुणाभिषया

प्रकाशम्। भद्रे! प्रथितं दुष्मन्तस्य चरितं प्रजास्वपीदं न दृश्यते[1]।

शकु।

तुम्हे ज्जेव पमाणं जाणध धम्मत्थिदिं च लोअस्स।
लज्जाविणिज्जिदाओ जाणन्ति ण किम्पि महिलाओ[2]॥

सुट्ठु दाव अत्तच्छन्दाणुचारिणी गणिआ समुवट्ठिदा[3]।
गौत। जादे! इमस्स पुरुवंसपच्चएण मुहमहुणो हिअअट्ठिअविसस्स हत्थं समुवगदासि[4]।

शकु। पटान्तेन मुखमाच्छाद्य रोदिति।

शार्ङ्ग। इत्थमप्रतिहतं चापल्यं दहति।

---

चित्तवृत्तिर्यस्य तस्मिन्नत एव रक्ते एकान्ते रक्ते जाते प्रणयम् अप्रतिपद्यमानेऽमन्यमाने मयि अतिकषायातिक्रोधेन अतिलोहिते अत्यन्तरक्ते अक्षिणी यस्याः सा तया शकुन्तलया कुटिलयोर्वक्रयोर्भ्रुवोर्भेदात् द्विधाकरणात्स्मरस्य मदनस्य शरासनस्य धनुर्भग्नमिव। येन धनुषा पुनः प्रहर्त्तुं न शक्नुयादिति कन्दर्पधनुर्भग्नमिति भावः।

(१) प्रजास्विति। इदं परकलत्रग्रहणं प्रजास्वपि न दृश्यते न ज्ञायते। प्रजाभिरप्यधर्म्मोऽचरणान्न क्रियत इति भावः।

(२) यूयमेव प्रमाणं जानीथ धर्म्मस्थितिञ्च लोकस्य। लज्जाविनिर्जिता जानन्ति न किमपि महिलाः। लोकस्य जनस्य धर्मस्थितिं धर्मस्य मर्यादां प्रमाणञ्च विधिनिषेधरूपञ्च यूयमेव जानीथ। लज्जया विनिर्जिता तिरस्कृता महिला नार्य्यो न किमपि जानन्ति। वनिता महिलाश्चेत्यमरकोषः।

(३) सुष्ठु तावदात्मच्छन्दानुचारिणी गणिका समुपस्थिता आत्मच्छन्दानुचारिणी स्वेच्छाचारिणी गणिका वेश्या समुपस्थिता प्राप्ता। वारस्त्री गणिका वेश्येत्यमरः।

(४) जाते अस्य पुरुवंशप्रत्ययेन मुखमधोहृदयविषस्य हस्तं समुपगतासि। पुरुवंशप्रत्ययेन पुरुवंशे सर्वे महात्मान इति विश्वासेनेत्यर्थः।

अतः परीक्ष्य कर्त्तव्यं विशेषात् सङ्गतं रहः।
अज्ञातहृदयेष्वेवं वैरीभवति सौहृदम्[1]॥

राजा। अयि! भोः किमत्रभवतीप्रत्ययादेवास्मानसम्भूतदोषैरधिक्षिपन्ति भवन्तः[2]?

शार्ङ्ग। सासूयम्। श्रुतं भवद्भिरधरोत्तरम्?[3]।

आजन्मनः शाठ्यमशिक्षितो य-
स्तस्याप्रमाणं वचनं जनस्य।
पराभिसन्धान मधीयते यै-
र्विद्येति ते सन्तु किलाप्तवाचः[4]॥

राजा। अहो! सत्यवादिन्! अभ्युपगतं तावदस्माभिः एवंविधा एव वयं, किं पुनरिमामभिसन्धाय लभ्यते[5]?

---

(१) अत इति। अत एतस्मात्कारणात् विशेषात्परीक्ष्यात्यन्तं विचार्य्य रह एकान्ते सङ्गतं कर्त्तव्यम्। अज्ञातमनवबुद्धं हृदयं येषान्तेषु जनेषु सौहृदम् एवं वैरीभवति अवैरमपि वैरं भवति। एकान्ते कृतं सौहृदं पश्चाद्विद्वेषायत इति भावः।

(२) किमिति। भवत्यां शकुन्तलायां प्रत्ययादेव विश्वासादेव भवन्तः पूज्याः असम्भूतदोषैरकृतदोषैः। अस्मान् अधिक्षिपन्ति निन्दन्ति। किं शब्दः प्रश्ने। असम्भूतदोषैरिति पाठान्तरे तु। अनुत्पन्नदोषैरित्यर्थः।

(३) अधरोत्तरं हीनोत्तरम्। अधरस्तु पुमानोष्ठे हीनेऽनूर्द्धे च वाच्यवदिति मेदिनीकोषात्।

(४) आजन्मन इति। यो जनः आजन्मनो जन्मपर्यन्तं शाठ्यं कैतवम् अशिक्षितस्तस्य जनस्य वचनं भाषितं यदि अप्रमाणं निश्चयजनकञ्च तदा यैर्जनैः परेषामुत्कृष्टानाम् अभिसन्धानं वञ्चनं विद्येति हेतोरधीयते पठ्यते ते पुरुषा आप्ता विश्वसिता वाचो येषान्ते एतादृशाः सन्तु। वञ्चनस्याऽभिसन्धानमिति हेमचन्द्रः।

(५) अहो इति। अहोशब्दः सम्बोधने। सम्बोधने प्रशंसायामित्यहोशब्दप्रकरणे मेदिनीकोषात्। अभ्युपगतमङ्गीकृतम्। एव-

शार्ङ्ग। विनिपातः।

राजा। विनिपातः पौरवैर्लभ्यत इत्यश्रद्धेयमेतत्[१]।

शार्ङ्ग। भो राजन्! किमत्तोत्तरैः, अनुष्ठितो गुरुनियोगः, संप्रति प्रतिनिवर्त्तामहे वयम्।

तदेषा भवतः पत्नी, त्यज वैनां ग्टहाण वा।
उपयन्तुर्हि दारेषु प्रभुता सर्व्वतोमुखी[२] ॥

गौतमि! गच्छाग्रतः।

इति सर्व्वे प्रस्थिताः।

शकु। अहं दाणिं इमिणा किदवेण विप्पलद्धा, तुह्मेवि मं परिच्चअध[३]? । इत्यनुप्रस्थिता गौतमीमनुगच्छति।

गौत। स्थित्वा परिवृत्यावलोक्य च। वच्छ सङ्करव! अणुगच्छदि णो करुणपरिदेविणी सउन्तला, पच्चादेसपरुसे भत्तरि किं करेदु तवस्सिणी[४]।

---

स्त्रिया एव परतन्त्रकाः असत्यवाचश्च एनां शकुन्तलाम् अभिमन्याय किं लभ्यते किं प्राप्यते न किमपीत्यर्थः। भोः सत्यवादिन्निति टर्पणाङ्कृतपाठः।

(१) विनिपात इति। विनिपातो दैवादिव्यसनम्। विनिपातोनिपाते स्याद्दैवादिव्यसने पुमानिति मेदिनीकोषात्। अयमक्षमानामकनाटकाऽलङ्कारः। अक्षमा सापरिभवः स्वल्पोऽपि नाऽभिसह्यत इत्युक्तेः।

(२) तदिति। तदेषा शकुन्तला। भवतः पत्नी त्वत्कर्त्तृकयज्ञफलभोक्त्री। पत्युर्नो यज्ञसंयोगे इत्यनेन नकारान्तादेशोङीप्च। एनां त्यज वा ग्टहाण वा। हि दारेषु स्त्रीषु उपयन्तुः पत्युः प्रभुता सर्वतोमुखी परितोगामिनी।

(३) अहमिदानीमनेन कितवेन विप्रलब्धा यूयमपि मां परित्यजथ।

(४) वत्स शार्ङ्गरव, अनुगच्छति नः करुणपरिदेविनी शकुन्तला प्रत्यादेशपरुषे भर्त्तरि किङ्करोतु तपस्विनी। प्रत्यादेशेन प्रत्ययवचन-

शार्ङ्ग। सरोषं प्रतिनिवृत्त्य। आः पुरोभागिनि!
किमिदं स्वातन्त्र्यमवलम्बसे[1]?

शकु। भीता वेपते।

शार्ङ्ग। शकुन्तले! शृणोतु भवती

यदि यथा वदति क्षितिप, स्तथा
त्वमसि, किं पुनरुत्कुलया त्वया।
अथ तु वेत्सि शुचि व्रतमात्मनः
पतिगृहे तव दास्यमपि क्षमम्[2] ॥

तिष्ठ, साधयामो वयम्[3]।

राजा। भोस्तपस्विन्! किमत्रभवतीं विप्रलभसे?[4]

कुतः

कुमुदान्येव शशाङ्कः, सविता बोधयति पङ्कजान्येव।
वशिनां हि परपरिग्रहसंश्लेषपराङ्मुखी वृत्तिः[5] ॥

---

व्याख्यानेन पत्रुषे निष्ठुरे। भर्त्तरि पत्यौ। तपस्विनी कृपार्हा। तपस्वी तापसे चानुकम्पार्हे चेति विश्वप्रकाशात्।

(१) आ इति। पुरोभागिनि दोषैकदर्शिनि। स्वातन्त्र्यम् इतरानधीनत्वम्। दोषैकदृक्पुरोभागीत्यमरः।

(२) यदीति। क्षितिं पाति रक्षतीति क्षितिपो दुष्यन्तो यथा वदति इयं नमया परिणीतेति कथयति। यदि त्वं हे शकुन्तले तथाऽसि पूर्वन्न परिणीतासि तदोत्कुलया उद्यातं कुलं यस्याः सा एतादृश्या त्वया। पुनः किम् अस्माकं किङ्कार्य्यमिति भावः। अथ तु आत्मनः स्वस्य व्रतं शुचि वेत्सि तदा पतिगृहे स्वामि गृहे तव दास्यमपि क्षमं हितकरम्।

(३) साधयामः गच्छामः।

(४) भवतीमिति। भवती शकुन्तलां विप्रलभसे महृहेऽवस्थानोपदेशेन वञ्चयसि।

(५) कुमुदान्येवेति। हि यस्मात्कारणात् शशाङ्कश्चन्द्रमा कुमुदान्येव कैरवाण्येव बोधयति विकाशयति। न पद्मानीत्यर्थः। सविता

शार्ङ्ग । राजन् ! अथ पूर्व्ववृत्तं अन्यसङ्गाद्विस्मृतं भवेत् तदा कथमधर्म्मभीरोर्दारपरित्यागः[१] ।

राजा । पुरोधसं प्रति भवन्तमेवात्र गुरुलाघवं पृच्छामि ।

मूढः स्यामहं, मेषा वा वदेन्मिथ्येति संशये ।

दारत्यागी भवाम्याहो परस्त्रीस्पर्शपांशुलः ?[२] ॥

पुरोधाः । विचार्य्य यदि तावदेवं क्रियताम् ।

राजा । अनुशास्तु मां गुरुः ।

पुरो । अत्रभवती तावदाप्रसवादस्मद्गृहे तिष्ठतु[३] ।

राजा । कुत इदम् ? ।

पुरो । त्वं साधुभिरुपदिष्टपूर्व्वः प्रथममेव चक्रवर्त्तिनं पुत्रं जनयिष्यसीति, स चेन्मुनिदौहित्रस्तल्लक्षणोप-

---

सूर्य्यः पङ्कजान्येव बोधयति न कुमुदानीत्यर्थः । वशिनां जितेन्द्रियाणां हत्तिर्वर्तनं परेषां स्वेतरेषां परिग्रहाणां पत्नीनां संश्लेषेषु सम्बन्धेषु पराङ्मुखी भवति ।

(१) राजन्निति । पूर्व्ववृत्तं पूर्व्वचरितं वृत्तं पद्ये चरित्रे चेति कोषात् । अन्य सङ्गात् कार्य्यान्तरासक्तत्वात् विस्मृतं भवेत् । अधर्मभीरोरधर्माद्भयशीलस्य तव कथं दारपरित्यागः केन प्रकारेण दारान् त्यजसीत्यर्थः । अयमुत्प्रासन नामकनाटकालङ्कारः । उत्प्रासनन्तूपहासोयोऽसाधौ साधुमानिनि इति लक्षणात् ।

(२) मूढ इति । अहं मूढो विकृतचित्तः स्याम्भवेयं उयवा शकुन्तला मिथ्याऽनृतं वदेदिति संशये सन्देहे । दारत्यागी स्वकीयस्त्रीपरित्यागी भवामि । आहो किमुत परस्त्रीस्पर्शेनाऽन्यस्त्रीसम्बन्धेन पांसुलो दुष्टो भवामीति अत्र गुरुलाघवं पृच्छामीत्यन्वयः । आहो उताहो किमुतेत्यमरः ।

(३) आप्रसवादिति । आप्रसवात् प्रसवाऽवधि भवती पूज्या शकुन्तलेत्यर्थः । तिष्ठतु वसतु ।

(४) त्वमिति । साधुभिः शिष्टैः चक्रवर्त्तिनं पुत्रं जनयिष्यति उत्पादयिष्यति प्रथममेव पूर्व्वमेवोपदिष्ट पर्व्वः पूर्व्वम् उद्दिष्टः

पन्नो भविष्यति, ततोऽभिनन्द्य शुद्धान्तमेनां प्रवेशयिष्यसि, विपर्य्यये त्वस्याः पितुः समीपगमनं स्थितमेव[1]।

राजा। यथा गुरुभ्यो रोचते[2]।

पुरो। उत्थाय। वत्से! इत इतोऽनुगच्छ माम्।

शकु। भगवति वसुन्धरे! देहि मे अन्तरं[3]।

इति सह पुरोधसा गौतमीतपस्विभिश्च रुदती निष्क्रान्ता।

राजा। शापव्यवहितस्मृतिः शकुन्तलागतमेव चिन्तयति।

नेपथ्ये। आश्चर्य्यमाश्चर्य्यम्!

राजा। कर्णं दत्त्वा। किन्नु खलु स्यात्?।

पुरोधाः। प्रविश्य। सविस्मयम्। देव! अद्भुतं खलु संवृत्तम्[4]।

राजा। किमिव?

पुरो। देव। परावृत्तेषु कण्वशिष्येषु[5]

सा निन्दन्ती स्वानि भाग्यानि बाला

बाहूत्क्षेपं रोदितुञ्च प्रवृत्ता[6]।

---

चेद्यदि स उत्पन्नो मुनिदौहित्रस्तल्लक्षणोपपन्नोऽङ्कुशकुलिशतोरण चक्रकमलादिविशिष्टस्वरेखायुक्तो भविष्यति तदाऽभिनन्द्याहृत्यएनां शकुन्तलां शुद्धान्तमन्तःपुरं प्रवेशयिष्यसि। विपर्य्यये तु वैपरीत्येतु स्थितमेवाऽवधारितमेव।

(२) यथेति। अनेन शकुन्तलाऽऽदानरूपस्य कार्यस्य सङ्ग्रहादादाननामकमङ्गम्। कार्य्यसङ्ग्रह आदानमित्युक्तेः।

(३) भगवति वसुन्धरे देहि मे अन्तरम्। अन्तरमवकाशम्। अन्तरमवकाशाऽवधीत्यमरः।

(४) देवेति। देव राजन्। राजा स्वामीति नृपतिर्देवेत्युक्तेः। अद्भुतमाश्चर्य्यम्। विस्मयोद्भुतमाश्चर्यमित्यमरः। संवृत्तं सञ्जातम्।

(५) परेति। कण्वशिष्येषु शार्ङ्गरवादिषु परावृत्तेषु परागतेषु।

(६) सेति। स्वानि स्वकीयानि भाग्यानि निन्दन्ती गर्हयन्ती सा बाला शकुन्तला बाहूत्क्षेपं भुजोवत्क्षिप्य रोदितुम् अश्रूणि विमोक्तुं प्रवृत्ता सति। स्त्रीसंस्थानं स्त्रियाः संस्थानमिव संस्थानम् आकृतिर्यस्य तत्

राजा । ततः किम् ?

पुरो० ।

स्त्रीसंस्थानञ्चाप्सरस्तीर्थमारा
दुत्क्षिप्यैनां ज्योतिरेनां तिरोऽभूत् ॥

सर्वे । विस्मयं रूपयन्ति ।

राजा । भगवन् ! प्रागेवास्माभिरेषोऽर्थः प्रत्यादिष्टः किं वृथा तर्केणान्विष्यते, विश्राम्यताम् [१]।

पुरोधाः । विजयस्व । इति निष्क्रान्तः ।

राजा । वेत्रवति ! पर्य्याकुलोऽस्मि, शयनीयगृहमार्गमादेशय ।

प्रती । इदो इदो देवो [२]। इति प्रस्थिता ।

राजा । परिक्रम्य स्वगतम् ।

कामं प्रत्यादिष्टां स्मरामि न परिग्रहं मुनेस्तनयाम् ।
बलवत्तु दूयमानं प्रत्याययतीव मां हृदयम् [३] ॥

इति निष्क्रान्ताः सर्वे ।

पञ्चमोऽङ्कः ।

---

एतादृशम् । अप्सरसान्तीर्थं योनिर्यस्य तत् एतादृशम् । तीर्थं योनौ जलावतारे चेति हलायुधः । ज्योतिः । आरात्समीपात् । एनां शकुन्तलाम् अङ्कं क्रोडं उत्क्षिप्य निधाय तिरोभूत् अन्तर्दधे ।

(१) भगवन्निति । एष शकुन्तलारूपोऽर्थः वस्तु प्रागेव पूर्व्वमेव प्रत्यादिष्टो निराकृतः । वृथातर्केण असत्यविचारेण ।

(२) इत इतो देवः ।

(३) काममिति । प्रत्यादिष्टां निराकृतां मुनेः कण्वस्य तनयां पुत्रीं शकुन्तलामित्यर्थः । परिग्रहं परिणीतां कामन्न स्मरामि । यथार्थतः स्मरामि । बलवदतिशयेन दूयमानं उपतप्यमानं हृदयन्तु चित्तन्तु मां प्रत्याययति इव विश्वासयतीव ।

इति श्रीपञ्चाननमकडमकृतवल्लभकृतायां शकुन्तलाव्याख्यायां पञ्चमोऽङ्कः ।

# अथ पञ्चमाङ्कषष्ठाङ्कयोर्मध्ये प्रवेशकः ।



ततःप्रविशति नागरकश्यालः पश्चाद्बाहुबद्धं पुरुषमादाय रक्षिणौ च(१)।

रक्षिणौ । पुरुषं ताड़यित्वा । अले कुम्भिलआ ! कधेहि कहिं तुए एशे महामणिभाशुले उक्किण्णणामक्खले लाअकीए अङ्गुलीअए शमाशादिदे ? [२] ।

पुरुषः । भीतिनाटितकेन । पशीदन्तु पशीदन्तु मे भावमिश्शे ! ण हग्गे ईदिशश्श अकज्जश्श कालके[३] ।

एकः । किण्णु क्खु शोहणे बम्हणेशि त्ति कदुअ लण्णा दे पड़िग्गहे दिण्णे ?[४] ।

पुरुषः । शुणुध दाव, हग्गे क्खु शक्कावदालवाशी धीवले[५] ।

(१) अथ पञ्चमाङ्कांशे धीवरसंवादरूपाऽल्पा प्रासङ्गिकी कथा प्रवेशकनामकथ्यते । प्रासङ्गिकं प्रदेशस्यचरितं प्रवेशमितेति तल्लक्षणम् । तत इति । नागरकस्य नगररक्षकस्य श्यालः पत्नीभ्राता । श्यालाः स्युर्भ्रातरः पत्न्याः इत्यमरः । पश्चाद्बाहुबद्धं पृष्ठलग्नं कृत्वा बद्धबाहुं पुरुषं जनान्तरम् आदाय रक्षिणौ च प्रविशत इत्यर्थः ।

(२) अरे कुम्भिलक कथय कुत्र त्वया एतन्महामणि भासुरं उत्कीर्णनामाक्षरं राजकीयमङ्गुलीयकं समासादितम् । कुम्भिलकश्चौरः । चौरः शङ्कितवर्णः स्यात् कुम्भिलकश्चेति त्रिकाण्डः । उत्कीर्णानि संस्थापितानि नामाक्षराणि यस्मिन्नदेतादृशं महामणिना हीरकेन भासुरं कान्तियुक्तं कुत्र कस्मिन् समासादितं प्राप्तं कथय ।

(३) प्रसीदन्तु प्रसीदन्तु मे भावमिश्राः नाहमीदृशस्याकार्य्यस्य कारकः ।

(४) किन्तु खलु शोभनो ब्राह्मणोऽसीति कृत्वा राज्ञा ते प्रतिग्रहो दत्तः ।

(५) शृणुत तावत् अहं खलु शक्रावतारवासी धीवरः । धीवरः । कैवर्त्तः कैवर्त्ते दासधीवराविति कोषात् ।

द्वितीयः । अले पाअच्चले ! किं तुमं अह्मेहिं वशदिं जादिश्च पुच्छीअशि ?[१] ।

नाग । सूअअ ! कधेदु सव्वं अणुक्कमेण, मा अन्तरा पडिबन्धेय[२] ।

उभौ । जं आवुत्ते आणवेदि, लवेहि ले[३] ।

धीव । शो हग्गे जालवलिशप्पहुदिहिं मच्छबन्धणोवा एहिं कुडुम्बभलणं कलेमि[४] ।

नाग । विहस्य । विसुद्धो दाणिं से आजीवो[५] ।

धीव । भट्टके ! मा एव्वं भण[६] ।

शहजे किल जे विणिन्दिदे णहु शे कम्म विवज्जणीअए ।
पशुमालणमकम्मदालुणे अणुकम्पामिदुकेवि शोत्तिए[७] ॥

(१) अरे पाटच्चर किन्त्वमस्माभिर्वसतिं जातिञ्च पृष्टः । पाटच्चरश्चौरः । पाटच्चरमलिम्लुचा इति कोषात् ।

(२) सूचक कथयतु सर्व्वमनुक्रमेण, मा अन्तरा प्रतिबध्नीयाः । अनुक्रमेण क्रममनतिक्रम्य सर्वं कथयतु अन्तरा मध्ये मा प्रतिबध्नीयाः रोधको मा भव ।

(३) यदावुत्त आज्ञापयति लप रे । आवुत्तो भगिनीपतिः । लप व्यक्तं कथय ।

(४) सोऽहं जालवडिशप्रभृतिभिर्मत्स्यबन्धनोपायैः कुटुम्बभरणङ्करोमि ।

(५) विशुद्ध इदानीमस्याजीवः । अस्य धीवरस्य । आजीवो जीविका ।

(६) भर्त्त मैवं भण ।

(७) सहजङ्किलयद्विनिन्दितं नहितत्कर्म्मविवर्जनीयकम् । पशुमारणकर्म्मदारुणोऽनुकम्पा मृदुकोऽपि श्रोत्रियः । निन्दितमपि सद्भिःस्व पूर्वजैराचरितं कर्म न दुष्यतीति भावः । उक्तञ्च मनुना । येनास्य पितरो याता येन याताः पितामहाः । तेन यायात्सतां मार्गन्तेन गच्छन्नदुष्यतीति ।

नाग। तदो तदो[1]?।

धीव। एक्कश्शिं दिअशे मए लोहिदमच्छके पाविदे, तदो खण्डशो कप्पिदे, जाव तश्श उदलब्भन्तले पेक्खामि दाव एशे महालअणभाशुले अङ्गुलीअए पेक्खिदे, पच्चा इध विक्कअत्थं दंशअन्ते ज्जेव गहिदे भावमिश्शेहिं, एत्तिके दाव एदश्श आगमे, अध मं मालेध कुट्टेध वा[2]।

नाग। अङ्गुरीयकमाघ्राय। जालुअ! मच्छोदलब्भन्तलगदो त्ति णत्थि सन्देहो, जदो अअं आमिसगन्धो वाअदि, आगमो दाणीं एदस्स एसो विमरिसिदव्वो, ता एध, लाअउलं ज्जेव गच्छह्म[3]।

रक्षिणौ। धीवरं प्रति। गच्छ ले गण्ठिच्छेदअ! गच्छ[4]।

इति परिक्रामन्ति।

---

(१) ततस्ततः।

(२) एकस्मिन्दिवसे मया रोहितमत्स्यः प्राप्तस्ततः खण्डशः कल्पितो यावत्तस्योदराभ्यन्तरे प्रेक्षे, तावदेतन्महारत्नभासुरमङ्गुलीयकं प्रेक्षितं, पश्चादिह विक्रयार्थं दर्शयन्नेव गृहीतो भावमिश्रैः एतावांस्तावदेतस्या आगमः, अत मां मारयत कुट्टयत वा। खण्डशः खण्डं खण्डमितिविग्रहे संख्यैकवचनाच्च वीप्सायामिति शः। मुञ्चेध इति क्वचित्पाठः।

(३) जालुक मत्स्योदराभ्यन्तरगतमिति नास्ति सन्देहः यतोऽयमामिषगन्धो वाति। आगम इदानीमेतस्यैष विमर्ष्टव्यस्तदेत राजकुलमेव गच्छामः। आमिषगन्धो मत्स्यगन्धः। एतस्याङ्गुलीयकस्यैष धीवरोक्त आगमो विमर्ष्टव्यो विचारणीयस्तस्माद्राजकुलमेव राजगृहमेव। कुलमद्रमधिकृत्य भवने च तनौ क्लीवमिति मेदिनीकरोक्तेः। एत आगच्छत।

(४) गच्छ रे ग्रन्थिच्छेदक गच्छ। ग्रन्थिच्छेदकश्चौरः।

(१) सूचक इह गोपुरद्वारे अप्रमत्तौ प्रतिपालयतं मां याव-

नाग । सूअअ ! इध गोउरदुआले अप्पमत्ता परिपालेध मं, जाव लाअउलं पवेसिअ णिक्कमामि[1] ।

उभौ । पविसदु आवुत्ते सामिप्पसादत्थं[2] ।

नाग । परिक्रम्य निष्क्रान्तः ।

सूच । जालुअ ! चिराअदि क्खु आवुत्ते[3] ।

जालु । णं अवसरोवसप्पणीआ राआणो होन्ति[4] ।

सूच । फुरन्ति मे अग्गहत्था इमं गण्ठिच्छेदअं वावादिदुं[5]

धीव । णारिहदि भावे अकारणमारके भविदुं[6] ।

जालु । विलोक्य । एसो अम्हाणं ईसले पत्तं गेण्हिअ लाअसासणं आअच्छदि, सम्पदं एसो सउलाणं मुहं पेक्खदु, अहवा गिद्धसिआलाणं बली होदु[7] ।

नाग । प्रविश्य । सिग्घं सिग्घं एदं । इत्यर्द्धोक्ते[8] ।

---

(१) राजकुलं प्रविश्य निष्क्रामामि । अप्रमत्तौ सावधानौ । प्रतिपालयतं प्रतीक्षां कुर्यातम् । निष्क्रामामि क्रमेर्द्दीर्घः परस्मैपदेष्विति दीर्घः ।

(२) प्रविशतु आवुत्तः स्वामिप्रसादार्थम् । स्वामिनो राज्ञः प्रसादार्थं प्रसन्नतार्थम् । प्रसादस्तु प्रसन्नतेत्यमरः ।

(३) जालुक चिरयति खल्वावुत्तः । हे जालुक भगिनीपतिः चिरयतीत्यर्थः ।

(४) नन्ववसरोपसर्प्पणीया राजानो भवन्ति । अवसरे यथाऽवकाशेन उपसर्प्पणीयाः समीपे गन्तुं योग्याः । ननु निश्चये ।

(५) स्फुरतो मेऽग्रहस्तौ इमं ग्रन्थिच्छेदकं व्यापादयितुम् ।

(६) नार्हति भावोऽकारणमारको भवितुम् ।

(७) एषोऽस्माकमीश्वरः पत्रं गृहीत्वा राजशासनमागच्छति, साम्प्रतमेष शकुन्तानां मुखं प्रेक्षतामथवा गृध्रशृगालानां बलिर्भवतु । ईश्वरो नियन्ता राजशासनं राजाज्ञां पत्रं गृहीत्वा । साम्प्रतमिदानीम् एष धीवरः । शकुन्तानां सपुत्रादीनाम् । बलिरुपहारः ।

(८) शीघ्रं शीघ्रमेतम् । इत्यर्द्धोक्ते त्यजतं धीवरमिति समुदितस्य वाक्यस्यार्द्धे उक्ते कथिते ।

धीव। हा, हदोह्मि[1]! । इति विषादं नाटयति।

नाग। मुञ्चध जालोवजीविणं। उववसो से अङ्गुलिअस्स आगमे, अह्म सामिणा जाव कधिदं[2]।

सूच। जहा आणवेदि आवुत्ते, जमवसदिं गदुअ पडिणिउत्तो क्खु एसो[3]। इति धीवरं बन्धनान्मोचयति।

धीव। भट्टके! सम्पदं तुह केलके मे जीविदे[4]।

इति पादयोः पतति।

नाग। उट्ठेहि, एसे भट्टिणा अङ्गुलीअमुल्लसम्मिदे पारिदोसिए दे पसादीकदे, ता गेह्ण एदं[5]। इति धीवराय कटकं ददाति।

धीव। सहर्षं सप्रणाममस्य प्रतिगृह्य। अणुग्गहीदोह्मि[6]।

जालु। एसे क्खु रखा तधा अणुग्गहिदे जधा सूलादो ओदालिअ हत्थिक्खन्धे समालोविदे[7]।

सूच। आवुत्ते! पालिदोसिएण जाणामि महालिह लदणेण अङ्गुलीअएण सामिणो बहुमदेण होदव्वं[8]।

---

(१) हा हतोऽस्मि। मारयत कुट्टयत इति क्रियामनुमायेति भावः।

(२) मुञ्चत बालोमजीविनम् उपपन्नोऽस्याऽऽगमः, अस्मत्स्वामिना यावत्कथितम्।

(३) यथाऽऽज्ञापयत्यावुत्तः, यमवसतिं गत्वा प्रतिनिवृत्तः खल्वेषः।

(४) साम्प्रतन्तव क्रीतकं मे जीवितम्। क्रीतकमधीनम्।

(५) उत्तिष्ठ, एतद्भर्त्राऽङ्गुलीयमूल्यसम्मितं पारितोषिकं ते प्रसादीकृतं तद्गृहाणैतत्। भर्त्रा स्वामिना। अङ्गुलीयमूल्यसम्मितम् अङ्गुलीयमूल्यपरिमितम्। प्रसादीकृतम् दत्तमित्यर्थः।

(६) अनुगृहीतोऽस्मि।

(७) एष खलु राज्ञा तथाऽनुगृहीतः, यथा शूलादवतार्य हस्तिस्कन्धं समारोपितः।

(८) आवुत्त पारितोषेण जानामि महार्हरत्नेनाङ्गुलीयकेन स्वामिनो बहुमतेन भवितव्यम्।

नाग। ण तस्सिं भट्टिणो महालिहलदणं त्ति कदुअ पलिदोसो, एत्ति उण तक्केमि[1]।

उभौ। किं उण[2] ?

नाग। तस्स दंसणेण भोट्टिणा कोवि अहिमदो जणो सुमरिदो त्ति, जदो मुहुत्तअं पदूदिगम्भीरोवि पज्जुस्सुअमणो आसी[3]।

सूच। तोसिदे शोहदे अ दाणिं भट्टा आवुत्तेण[4]।

जालु। णं भणेमि इमश्श मच्छशत्तुणोकदे[5]।

इति धीवरमसूयया पश्यति।

धीव। भट्टालके! इदो अद्धं तुम्हाणम्पि शुलामुल्लं होदु[6]।

---

(१) न तस्मिन् भर्त्तुर्महार्हरत्नमिति कृत्वा परितोष, एतत्पुनस्तर्कयामि।

(२) किम्पुनः। किं शब्दः प्रश्ने।

(३) तस्य दर्शनेन भर्त्ता कोऽप्यभिमतो जनः स्मृत इति यतो मुहूर्त्तं प्रकृतिगम्भीरोऽपि पर्य्युत्सुकमना आसीत्। भर्त्ता स्वामिना अभिमत इष्टः कोऽपि जनः स्मृत इति एतत्तर्कयामीति पूर्व्वेण सम्बन्धः। यतो यस्मात्प्रकृत्या स्वभावेन गम्भीरो गाम्भीर्य्ययुक्तोऽपि मुहूर्त्तं क्षणमात्रं पर्य्युत्सुकमना उत्कण्ठितमना आसीत्। अनद्यतने लुङ्।

(४) तोषितः शोचितश्चाऽऽवुत्तेन। आवुत्तेन भगिनीपतिना। भर्त्ता स्वामिना तोषितः अङ्गुरीयकदानादिना प्रसन्नीकृतः शोचितः तस्येष्टजनस्मारकत्वात् शोचितश्चेत्यर्थः।

(५) ननु भणामि अस्य मत्स्यशत्रोःकृते। आवुत्तेनेति पूर्व्ववाक्येनान्वयी।

(६) भट्टारक इतोऽर्द्धं युष्माकमपि सुरामूल्यं भवतु।

(१) धीवर महत्तरः साम्प्रतमस्माकं प्रियवयस्य संवृत्तोसि कादम्बरीसाक्षिकं खलु प्रथमसौहृदमिष्यते तदेहि शौण्डिकाऽऽलयमेव गच्छामः। हे धीवर कैवर्त्त साम्प्रतमिदानीं महत्तरः अति-

**जालु। धीवल! मइत्तले शम्पदं अम्हाणं पिअवअस्सके शंवुत्तेशि, कादम्बलीशक्खिके क्खु पढमं शोहिदे इच्छीअदि, ता एहि शुण्डिआलअं ज्जेव गच्छम्ह[1]।**

इति निष्क्रान्ताः सर्वे।

पवेशकः।

.शयेन महानितिविग्रहे द्विवचनविभज्योपपदेत्यनेन तरप्प्रत्ययः। संवृत्तोऽसि जातोऽसि। यदस्माकं लोकैः प्रथमसौहृदं प्रथमसौहार्द्दं कादम्बरी साक्षिकं कादम्ब इक्षुः कादम्ब कलहंसेष्वोरितिविश्वप्रकाशात् तं राति आदत्ते प्रकृतितयेति कादम्बरी मदिरा सैव साक्षिणी यस्य तदेतादृशम् इष्यते तत्तस्मात् एहि आगच्छ शौण्डिकालयं मदिराकारभवनमेव गच्छाम.।

(२) प्रवेशक इति। वृत्तानामङ्गुल्यादिकथानां वर्त्तिष्यमाणानां शकुन्तलादिस्मरणरूपाणां कथांशानान्निदर्शकत्वादनुदात्तोक्त्या नीचपात्रैर्नागरकश्यालादिभिः प्रयुक्तत्वात्। उक्तञ्च विष्कम्भलक्षणमधिकृत्य। तद्वदेवाऽनुदात्तोक्त्या नीचपात्रप्रयोजितः। प्रवेशोऽङ्कद्वयस्यान्तः शेषार्थस्योपसूचक इति। यथा मालविकाग्निमित्रे अयवा मुदंगसद्दो ज्जेव णं उट्ठावयिस्सदि (अथवा मृदङ्ग शब्द एवेनमुत्थापयिष्यति) इति उपक्रमे त्वरयति मां मुरजवाद्योऽस्मिति मृदङ्ग श्रवणानन्तरं प्रथमाङ्कप्रक्रान्त सङ्क्रान्तिद्वितीयाङ्कादौ दृष्टा नयात्र यदि पूर्वाङ्कपात्रसङ्क्रान्तिः स्यात्तदा भवेदङ्काऽवतारः। न चात्र तथाऽस्ति। किञ्च प्रवेशकादिभिन्नत्वमपि नेहास्ति। उक्तञ्च। अङ्काऽवतारस्त्वङ्कान्ते पातोऽङ्कस्याऽविभागत इति धनञ्जयोक्त कारिकाव्याख्यायां धनिकेन यत्र प्रविष्टपात्रेण सूचितमेव पूर्वाङ्काऽविच्छिन्नार्थतयैवाऽङ्कान्तरमापतति प्रवेशकविष्कम्भकादिशून्यं सोऽङ्कावतार इति। मालशास्त्रान्तरेऽपि। अङ्काऽवतरलक्षणे यत्र स्यादुत्तराङ्कार्थः पूर्वाङ्कार्थानुषङ्गत इति। यदितु प्रवेशकादिभिन्नत्वं विशेषणं सदीयते पूर्वपात्रसङ्क्रान्तिरपि नापेक्ष्यते तदाङ्कावतारः। अतएव साहित्यदर्पणकारः। अभिज्ञानशकुन्तले। पञ्चमाङ्के पात्रैः सूचितषष्ठाङ्कस्तदङ्कस्याङ्गविशेष इवाऽवतीर्ण इत्यङ्कावतारमेवात्राऽऽह।

इति पन्तोपनामक श्रीइमकवल्लभकृतायां

शकुन्तला व्याख्यायां प्रवेशकः।

# अभिज्ञानशाकुन्तलम् ।

---

षष्ठोऽङ्कः ।

ततः प्रविशत्याकाशयानेन मिश्रकेशी ।

मिश्र । णिव्वत्तिदं मए पज्जाअणिव्वत्तणिज्जं अच्छरातित्थसन्निज्झं, ता जाव साहुजणस्स अहिसेअकालो भवे दाव सम्पदं इमस्स राएसिणो वुत्तन्तं पच्चक्खीकरिस्सं, णं मेणआसम्बन्धेण सरीरभूदा दाणिं मे सउन्तला, तए अ दुहिदुणिमित्तं सन्दिट्ठपुव्वह्मि[1] । समन्तादवलोक्य । किं णु क्खु उवत्थिदुच्छवेवि दिअहे णिरुच्छवारम्भं विअ एदं राअउलं दीसदि, अत्थि

---

(१) निर्वर्त्तितं मया पर्य्यायनिवर्त्तनीयमप्सरस्तीर्थसन्निध्यं तद्या वत्साधुजनस्याऽभिषेककालो भवेत् तावत् साम्प्रतमस्य राजर्षेर्वृत्तान्तं प्रत्यक्षीकरिष्यामि, ननु मेनकासम्बन्धेन शरीरभूतेदानीं मे शकुन्तला तया च दुहितृनिमित्तं सन्दिष्टपूर्व्वाऽस्मि । पर्य्यायेण क्रमेण निर्वर्त्तनीयं निष्पादनीयम् अप्सरस्तीर्थैः अप्सरोयोनिभिः मेनकादिभिरिति यावत् । मेनकादिभिर्यद्यदुक्तं तत्सर्व्वम्मया यथाक्रमं कृतमित्यर्थः । तद्यावत् साधुजनस्य सज्जनस्य कुवेरस्येति यावत् । साधुर्वार्धुषिके चारौ सज्जने चाऽभिधेयवदिति विश्वमेदिन्यौ । अभिषेककाल स्नानकालः । अभिषेकः स्नानमित्यपीति त्रिकाण्डात् । तावदस्य राजर्षेर्दुष्यन्तस्य वृत्तान्तं प्रक्रियाम् । वृत्तान्तः स्यात्प्रक्रियायामिति मेदिनी । प्रत्यक्षीकरिष्यामि चक्षुषा विषयीकरिष्यामि । किमर्थमित्याह ।

(१) किन्नु खलूपस्थितोत्सवेऽपि दिवसे निरुत्सवारम्भमिवैतद्राजकुलं दृश्यते, अस्ति, मे विभवः सर्वं प्रणिधानेन ज्ञातुं किन्तु सख्या मयाऽऽदरो मानयितव्यः भवतु एषामेवोद्यानपालकानां पार्श्वपरि-

मे विहवो सव्वं पणिधाणेण जाणिदुं, किन्तु सहीए मए आदरो माणइदव्वो, भोदु इमाणं ज्जेव उज्जाणवालिआणं पासपरिवत्तिणी भविअ तिरक्करिणीए विज्जाए पच्छण्णा उवलहिस्सं[1]। इति नाटयेनावतीर्य्य स्थिता।

ततः प्रविशति चूताङ्कुरमालोकयन्ती चेटी तत्पृष्ठेऽपरा च।

प्रथमा। कधं उवत्थिदो महुमासो[2] ?

आतम्महरितवेण्टं उस्ससिअं विअ वसन्तमासस्स।
दिट्ठं चूअङ्कुरअं छणमङ्गल्लं णिअच्छामि[3] ॥

द्वितीया। परहुदिए! किं एदं एआइणी मन्तेसि ?।

प्रथमा। महुअरिए! चूअकलिअं पेक्खिअ उम्मत्तिआ क्खु परहुदिआ होदि[5]।

द्वितीया। सहर्षं त्वरया उपगम्य। कधं उवत्थिदो महुमासो[6]?

---

वर्त्तिनी भूत्वा तिरस्करिण्या विद्यया प्रच्छन्नोपलप्स्ये। उपस्थितोत्सवेऽपि आगतोत्सवेऽपि। निर्गतोत्सवारम्भ उत्सवप्रवृत्तिर्यस्मिन्नेतादृशम्। राजकुलं राजगृहम्। प्रणिधानेन समाधिना ज्ञातुं मे मम विभवः सामर्थ्यम्। तिरस्करिण्या विद्यया शरीरादृश्यताकरण मन्त्रविशेषेण प्रच्छन्ना तिरोहितशरीरा सती।

(२) कथमुपस्थितो मधुमासः। मधुमासो वसन्तमासः। मधु-मद्य वसन्ते चेति कोषात्।

(३) आताम्रहरितवृन्तम् उच्छ्वसितमिव वसन्तमासस्य। दृष्टं चूताङ्कुरकं क्षणमङ्गल्यं नियच्छामि। आताम्रमीषद्रक्तं हरितं पालाशवर्णं वृन्तं यस्य तत् एतादृशं वसन्तमासस्य उच्छ्वसितमिव प्राणभूतमिव दृष्टं चूताङ्कुरकम् आम्रमुकुलम् आम्रश्चूतो रसालोऽसावित्यमरः। क्षणो वसन्तोत्सवे मङ्गल्यं नियच्छामि सम्मानयामि।

(४) परभृतिके किमिदमेकाकिनी मन्त्रयसि।

(५) मधुकरिके चूतकलिकां प्रेक्ष्योन्मत्ता खलु परभृतिका भवति।

(६) कथमुपस्थितो मधुमासः।

प्रथमा । महुअरिए ! तवावि एसो कालो मदविब्भमुग्गीदाणं[1] ।

द्वितीया । सहि ! अवलम्बस्स मं जाव अग्गपदे परिट्ठिदा भविअ चूअप्पसवं गेह्निअ सम्पादेमि कामदेवस्स अच्चणं[2] ।

प्रथमा । जइ एव्वं ता ममावि अद्धं अच्चणफलस्स[3] ।

द्वितीया । सहि ! अभणिदेवि एदं सम्पज्जइ एव्व जदो एक्कं ज्जेव णो एदं सरीरं द्विधा भिस्सं पजावइणा[4] । सखीमवलम्ब्य चूतप्रसवं गृहीत्वा । अम्महे ! अप्पबुद्धोवि चूअप्पसवो बन्धणभङ्गसुरही राअदि[5] । कपोतहस्तं कृत्वा । णमो भअवदे मअरद्धआअ[6] ।

---

(१) मधुकरिके तवाप्येष कालो मदविभ्रमोद्गीतानाम् ।

(२) सखि अवलम्बस्व मां यावदग्रपदे परिस्थिता भूत्वा चूतप्रसवं गृहीत्वा सम्पादयामि कामदेवस्यार्चनम् । अवलम्बस्व धारय । चूतप्रसवं आम्रपुष्पम् । आम्रश्चूतो रसालोऽसौ । पुष्पे प्रसवो गर्भमोचन इतिद्वयोरमरः ।

(३) यद्येवं तन्ममाप्यर्द्धम् अर्चनफलस्य । मदवलम्बनेन पुष्पग्रहणादिति भावः ।

(४) सखि अभणितेऽपीदं सम्पद्यत एव एकमेवावयोरिद शरीरं द्विधाभिन्नं प्रजापतिना ।

(५) अम्म अप्रबुद्धोऽपि चूतप्रसवो बन्धनभङ्गसुरभी राजते । बन्धनस्य वृन्तस्य भङ्गेन सुरभिः सुगन्धिः ।

(६) कपोतेति । गीतौ प्रयुज्यमानोऽञ्जलिविशेषः कपोतहस्तः । उक्तञ्च भरतेन । सर्वपार्श्व समाश्लेषात् कपोतः सर्पशीर्षकः । गीतौ विज्ञापने चैव विनये च प्रयुज्यत इति ।

(६) नमो भगवते मकरध्वजाय । मकरध्वजाय कन्दर्पाय । नमः स्वस्तीत्यादिना चतुर्थी ।

(१) अर्हसि मे चूताङ्कुर दत्तः कामस्य गृहीतचापस्य । पथिकजनयुवतिलक्ष्यः पञ्चान्तरितः शरीभवितुम् । पथिकजनानां प्रोषि-

अरिहसि मे चूअङ्कुर ! दिण्णो कामस्स गहिदचावस्स ।
पहिअजणजुअदिलक्खो पञ्चब्भहिओ सरो होदुं[1] ।

कञ्चुकी । प्रविश्य सक्रोधम् । मा तावदनात्मज्ञे ! देवेन प्रतिषिद्धेऽपि मधूत्सवे चूतकलिकाभङ्गमारभसे ।

उभे । भीते । पसीददु पसीददु अज्जो, अगहिदत्था अम्हे[2] ।

कञ्चु । ऊं, न किल श्रुतं भवतीभ्यां ? यद्वासन्तैस्तरुभिरपि देवस्य शासनं प्रमाणीकृतं तदाश्रयिभिश्च[3] । तथाहि

चूतानां चिरनिर्गतापि कलिका बध्नाति न स्वं रजः,
सन्नद्धं यदपि स्थितं कुरुबकं तत् कोरकावस्थया ।
कण्ठेषु स्खलितं गतेऽपि शिशिरे पुंस्कोकिलानां रुतं,
शङ्के संहरति स्मरोऽपि चकितस्तूणार्द्धकृष्टं शरम्[4] ॥

---

तपथिजनानां युवतयः लक्ष्याः शरव्या यस्यैतादृशः पञ्चाभ्यधिकः पञ्चानामभ्यधिकोऽन्तर्गतः शरो बाणो भवितुमर्हसि । शकधृषेति तुमुन् ।

(२) प्रसीदतु प्रसीदत्वार्यः अगृहीतार्थे आवाम् । अगृहीतोऽज्ञातो वसन्तोत्सवप्रतिषेधरूपोऽर्थो याभ्यामेतादृशे ।

(३) ऊमिति । वासन्तैर्वसन्तसम्बन्धिभिस्तरुभिः । तदाश्रयिभिः तेषु आश्रयन्त इति तदाश्रयिणः तैः पक्षिभिश्च देवस्य राज्ञः शासनमाज्ञा यत्प्रमाणीकृतं तद्भवतीभ्यान्नश्रुतङ्किल । ऊमिति प्रश्ने ।

( ४ ) चूतानामिति । चिरनिर्गता पूर्वन्निर्गता अपि चूतानामाम्राणां कलिकास्वं स्वकीयं रजः परागः न बध्नाति नोत्पादयति । यदपि कुरुवकं तत्पुष्पं स्थितं तत्कोरकावस्थयैव कुड्मलाऽवस्थयैव । कोरकोऽस्त्रीकुड्मले स्यादिति मेदिनी । सन्नद्धं बद्धम् । शिशिरे गतेऽपि पुंस्कोकिलानां पुमांसश्च ते कोकिलास्तेषां रुतं शब्दं कण्ठेषु स्खलितम् । अस्मात्कारणात् स्मरोऽपि कामोऽपि चकितोः तेषान्तदवस्थादर्शनेन शङ्कितः सन् तूणादर्द्धकृष्टं शरं बाणं संहरति ननिष्काशयतीत्यर्थः ।

मिश्र। णत्थि एत्थ सन्देहो, महाप्पहावो क्खु राएसी [1]।

प्रथमा। अज्ज! कदिचिदिअसाइं मित्तावसुणा रट्टिएण भट्टिणो पादमूलं पेसिदा अम्हे इध पमदवणो चित्तकम्म अप्पिदुं, ता आगन्तुअदाए ण सुदपुव्वो अम्हेहिं एसो वुत्तन्तो[2]।

कञ्चु। तेन हि न पुनरेवं प्रवर्त्तितव्यम्।

उभे। सकौतूहलम्। अज्ज! जइ इमिणा जणेन सोदव्वं ता कधेदु अज्जो किं णिमित्तं भट्टिणा वसन्तुच्छवो पड़िसिद्धोत्ति?[3]।

मिश्र। उच्छवप्पिआ क्खु राआणो होन्ति, ता एत्थ गुरुणा कारणेण होदव्वं[4]।

कञ्चु। स्वगतम्। बहुलीभूतोऽयमर्थः, तत् किं न कथ्यते? प्रकाशम्। अस्ति भवत्योः कर्णपथमायातं शकुन्तलाप्रत्यादेशकौलीनम्?[5]।

---

(१) नास्त्यत्र सन्देहः महाप्रभावः खलु राजर्षिः।

(२) आर्य्य कतिचिद्दिवसानि मित्रावसुना राष्ट्रियेण भर्त्तुः पादमूलं प्रेषिते आवाम् इह प्रमदवने चित्रकर्म्मार्पयितुं तदागन्तुकतया नश्रुतपूर्व्व आवाभ्यामेष वृत्तान्तः। आगन्तुकतया अतिथितया एष प्रतिषेधरूपो वृत्तान्तः। न श्रुतपूर्व्वः श्रुतं पूर्व्वं यस्य श्रुतपूर्व्वः नश्रुतपूर्व्वोऽश्रुतपूर्व्वः।

(३) आर्य्य यद्यनेन जनेनश्रोतव्यं तत्कथयत्वार्य्यः किन्निमित्तं भर्त्त्रा वसन्तोत्सवः प्रतिषिद्ध इति।

(४) उत्सवप्रिया खलु राजानो भवन्ति तदत्र गुरुणा कारणेन भवितव्यम्।

(५) बहुलीति। अयं प्रतिषेधरूपोऽर्थः बहुलीभूतः प्रकाशीभूतः। भवत्योः। कर्णपथं कर्णविवरम् आयातं प्राप्तम्। श्रुतमित्यर्थः। शकुन्तलायाः प्रत्यादेशस्य निराकरणस्य कौलीनं लोकवादः। स्यात्कौ-

उभ। अज्ज ! सुदं रट्ठियमुहादो अङ्गुलीअअदंसणं जाव [1]।

कञ्चु। तेन हि स्वल्पं कथयितव्यम्, यदैवाङ्गुरीयदर्शनादनुस्मृतं देवेन सत्यमूढपूर्व्वा रहसि मया तत्रभवती शकुन्तला मोहात्प्रत्यादिष्टेति तदाप्रभृत्येव पश्चात्तापमुपगतो देवः। तथाहि

रम्यं द्वेष्टि, यथापुरा प्रकृतिभिर्न प्रत्यहं सेव्यते,
शय्योपान्तविवर्त्तनैर्विगमयत्युन्निद्र एव क्षपाः।
दाक्षिण्येन ददाति वाचमुचितामन्तःपुरेभ्यो, यदा
गोत्रेषु स्खलितस्तदा भवति च व्रीडाविनम्रश्चिरम् [2] ॥

मिश्र। पिअं मे पिअं [3]।

कञ्चु। अस्मात् प्रभवतो वैमनस्यादुत्सवः प्रत्याख्यातः।

उभे। जुज्जदि [4]।

नेपथ्ये। एदु एदु भवं [5]।

कञ्चु। कर्णं दत्त्वा। अये ! इत एवाभिवर्त्तते देवः, तद्गच्छतं स्वकर्म्मानुष्ठानाय ॥

---

लीनं लोकवाद इत्यमरः। अनेन दुष्यन्तस्य शकुन्तलापरित्यागरूपदोषोद्भावनादपवादनामकमङ्गम्। दोषप्रख्याऽपवादः स्यादित्युक्तेः।

(१) आर्य्य श्रुतं राष्ट्रियमुखादङ्गुलीयदर्शनं यावत्।

(२) रम्यमिति। रम्यं मनोहरं वस्तु द्वेष्टि। यथा पुरा पूर्व्वकाले प्रकृतिभिरमात्यादिभिः अस्येवि तथा प्रत्यहमहरहः न सेव्यते। तथोद्गता निद्रा यस्य स एतादृश सन् शय्याया उपान्तयोर्विवर्त्तनैः परिवर्त्तनै क्षपा रात्रीः विगमयति। न निद्रातीत्यर्थः। तथा दक्षिणस्य कुशलस्य भावस्तेन दाक्षिण्येन। यदाऽन्तःपुरेभ्यः स्त्रीभ्य उचितां वाचं वचनं ददाति कथयति तदा गोत्रेषु नामसु गोत्रन्तु नाम्नि चेति कोषात्। स्खलितः शकुन्तलानामोच्चारणेन भ्रष्टः चिरं चिरकालपर्य्यन्तं व्रीडया लज्जया अवनम्रो नतशिरा भवति।

(३) प्रियं मे प्रियम्। (४) युज्यते। (५) एतु एतु भवान्।

उभे । तह[१] । इति निष्क्रान्ते ।

ततः प्रविशति पश्चात्तापसदृशवेशो राजा विदूषकः प्रतिहारी च ।

कञ्चु । राजानं विलोक्य । अहो ! सर्व्वास्ववस्थासु रामणीयकमाकृतिविशेषाणाम् । तथाह्येवं वैमनस्यपरीतोऽपि प्रियदर्शनो देवः । य एषः

प्रत्यादिष्टविशेषमण्डनविधि,र्वामप्रकोष्ठे श्लथं
बिभ्रत् काञ्चनमेकमेव वलयं, श्वासोपरक्ताधरः ।
चिन्ताजागरणप्रताम्रनयन, स्तेजोगुणैरात्मनः
संस्कारोल्लिखितो महामणिरिवक्षीणोऽपि नालक्ष्यते[२]॥

मिश्र । राजानं विलोक्य । ठाणे क्खु पञ्चादेसविमाणिदाबि इमस्स किदे सउन्तला किलिस्सदि[३] ।

राजा । ध्यानमन्दं परिक्रम्य ।

( १ ) तथा ।

( २ ) प्रत्यादिष्टेति । प्रत्यादिष्टो निराकृतस्त्यक्त इति यावत् । विशेषमण्डनविधिर्विशेषाऽलङ्कारपरिधानं येन स एतादृशस्तथा काञ्चनं स्वर्णमयं श्लथम् एकं सजातीयद्वितीयरहितं वलयं कटकं वामप्रकोष्ठे बिभ्रत् धारयंस्तथा श्वासोपरक्ताधरइति श्वासैर्निश्वाससमाकृतैरुपरक्तोऽन्तस्तापाच्छासस्योष्णतया तत्सम्बन्धेनोपरक्तः पीडितोधरो यस्य स । उपरक्तं व्यसनार्त्ते इति मेदिनी । श्वासापरक्ताधर इति पाठेतु श्वासात् क्षीणरागाधर इत्यर्थः । तथा चिन्तया शकुन्तलाचिन्तया यज्जागरणं निद्राच्छेदस्तेन प्रताम्रे अतिरक्ते नयने 'लोचने यस्य स एतादृशः । संस्कारेण मलमार्जनादिनोल्लिखित उत्कीर्णः आत्मनः स्वस्य तेजोगुणैर्दीप्तिमहिम्ना क्षीणोऽपि कृशोऽपि महामणिरिव यएष । तेजोगुणैः प्रभावमहिम्ना क्षीणोऽपि कृशोऽपि नाऽलक्ष्यते कृशत्वेनाऽननुभूयते । तेजः प्रभावे दीप्तौ चेत्युभयत्राप्यमरः ।

( ३ ) स्थाने खलु प्रत्यादेशविमानिताप्यस्य कृते शकुन्तला क्लिश्यति ।

( १ ) प्रथममिति । शारङ्गवन्मृगवदक्षिणी यस्याः सा तथा वक्रभ्रूभिर्हवकटाक्षैरिति यावत् ... सितापाङ्गैरतिडीम् । प्रियया प्रियभू-

प्रथमं सारङ्गाक्ष्या प्रियया प्रतिबोध्यमानमपि सुप्तम् ।
अनुशयदुःखायेदं हतहृदयं सम्प्रति विबुद्धम्[1]॥

मिश्र । णं ईदिसाइं तवस्सिणीए भाअधेआइं[2] ।

विदू । अपवार्य्य । हुं, भूओवि लङ्घिदो एसो सउन्तलावादेण, ण आणे कधं चिकिच्छिदव्वो भविस्सदि[3] ।

कञ्चु । उपसृत्य । जयति जयति देवः, देव ! प्रत्यवेक्षिताः प्रमदवनभूमयः, यथाकाममध्यास्तां विनोदस्थानानि देवः ।

राजा । वेत्रवति ! मद्वचनादमात्यपिशुनं ब्रूहि अद्य चिरप्रबोधान्न सम्भावितमस्माभिर्धर्मासनमध्यासितुं यत्प्रत्यवेक्षितमार्य्येण पौरकार्य्यं तत्पत्रमारोप्य प्रस्थाप्यतामिति ।

प्रती । जं देवो आणवेदि[4] । इति निष्क्रान्ता ।

राजा । पार्व्वतायन ! त्वमपि स्वनियोगमशून्यं कुरु ।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रान्तः ।

विदू । किदं भअदा णिम्मक्खिअं, सम्पदं सिसिरविच्छेअरमणीए इमस्सिं पमदवणुद्देसे अत्ताणं विणोदेहि[5]

तया शकुन्तलया प्रथमं प्रतिबोध्यमानमपि सुप्तं मोहेन जड़ीकृतं इदं हतहृदयं सम्प्रत्यस्मिन्काले अनुशयदुःखाय अनुतापदुःखाय विबुद्धं स्मृतिमज्जातम् ।

(२) नन्वीदृशानि तपस्विन्या भागधेयानि । ईदृशान्येव तपस्विन्या अनुकम्पार्हाया भागधेयानि भाग्यानि। न तत्र तव दोषलेश इति भावः।

(३) हुं भूयोऽपि लङ्घित एष शकुन्तलावातेन न जाने कथं चिकित्सितव्यो भविष्यति । (४) यद्देव आज्ञापयति ।

(५) कृतं भवता निर्म्मक्षिकं साम्प्रतं शिशिरविच्छेदरमणीयेऽस्मिन् प्रमदवनोद्देशे आत्मानं विनोदय ।

राजा। निश्वस्य। वयस्य! यदुच्यते रन्ध्रोपपातिनोऽनर्था इति तदव्यभिचारि[1]। पश्य

मुनिसुताप्रणयस्मृतिरोधिना
मम च मुक्तमिदं तमसा मनः।
मनसिजेन सखे! प्रहरिष्यता
धनुषि चूतशरश्च निवेशितः[2]॥

उपहितस्मृतिरङ्गुलिमुद्रया
प्रियतमामनिमित्तनिराकृताम्।
अनुशयादनुरोदिमि चोत्सुकः,
सुरभिमाससुखं समुपैति च[3]॥

विदू। भो वयस्य! चिट्ठ दाव जाव इमिणा दण्डकट्ठेण कन्दप्पबाणं णासेमि[4]। इति दण्डकाष्ठमुद्यम्य चूताङ्कुरं पातयितुमिच्छति।

---

(१) वयस्येति। अनर्था अनिष्टा। रन्ध्रोपपातिनः छिद्रोपगामिनः।

(२) मुनिसुतेति। हे सखे मुनिसुतायाः कण्वसुतायाः शकुन्तलाया प्रणयस्य स्मृतिं रुणद्धीति तेन तमसा ममेदं मनश्चित्तं मुक्तम्। प्रहरिष्यता प्रहारकरिष्यता मनसिजेन कन्दर्पेण धनुषि चूतशरो निवेशितः।

(३) उपहितेति। अङ्गुलिमुद्रया अक्षरयुक्ताङ्गुलीयकदर्शनेन उपहितस्मृतिरुपहितोपगता स्मृतिर्यस्य स एतादृशोऽहमुत्सुको दर्शनोद्युक्तः सन् अनिमित्तनिराकृताम् अकारणेन प्रत्याख्यातां प्रियतमां अत्यन्तं प्रिया प्रियतमा तां शकुन्तलाम् अनुशयेनानुशयात्पश्चात्तापात् रोदिमि। सुरभिमाससुखं सुरभिमासस्य वसन्तमासस्य। वसन्ते पुष्पसमयः सुरभिरिति कोषः। सुखमानन्दञ्च समुपैति समागच्छति। प्रियाविरहदुःखमासाद्यैव वसन्तकालः समागत इतिभावः।

(४) भो वयस्य तिष्ठ तावदनेन दण्डकाष्ठेन कन्दर्पबाणं नाश-

राजा। सस्मितम्। भवतु दृष्टं ब्रह्मवर्चसं, सखे ! क्वेदानीमुपविष्टः प्रियायाः किञ्चिदनुकारिणीषु लतासु दृष्टिं विनोदयामि ? ।

विदू। णं भअदा आसण्णपरिचारिआ लिविअरी मेहाविणी आदिट्ठा, माहवीलदाहरए इमं वेलम् अदिवाहिस्सं तहिं चित्तफलए मे सहत्थलिहिदं तत्थभोदीए सउन्तलाए पडिकिदं आणेहित्ति[1] ।

राजा। ईदृशमेव हृदयाश्वासनं. तत्तदेवादेशय माधवीलतागृहम् ।

विदू। इदो इदो एदु भवं[2]। इत्युभौ परिक्रामतः।

मिश्रकेशी। अनुगच्छति।

विदू। एसो मणिसिलापट्टसणाहो माहवीलदामण्डवो-विवित्तदाए उवहाररमणीअदाए णिसग्गमारुदेण अ साअदेण विअ पडिच्छदि तुमं, ता पविसिअ णिसीददु भवं[4] ।

---

यामि। अनेन चूताङ्कुरपातनरूपायाः स्वशक्तेरुक्त्या व्यवसायनामकं नाटकाङ्गम्। व्यवसाय स्वशक्त्युक्तिरिति रूपकात्।

(१) ननु भवताऽऽसन्नपरिचारिका लिपिकरी मेधाविनी आदिष्टा माधवीलतागृहे इमां वेलामतिवाहयिष्यामि तत्र चित्रफलके मे स्वहस्तलिखितां तत्र भवत्याः शकुन्तलायाः प्रतिकृतिमानयेति। भवता आसन्नपरिचारिका निरन्तरसमीपस्थपरिचारिका लिपिकरी लेखनचतुरा मेधाविनी धारणावती बुद्धियुक्ता। आदिष्टा आज्ञप्ता।

(२) इत इत एतु भवान्।

(३) एष मणिशिलापट्टसनाथो माधवीलतामण्डपो विविक्ततयोपहाररमणीयतया च निसर्गमारुतेन स्वागतेनेव प्रतीच्छति त्वां तत्प्रविश्य निषीदतु भवान्। मणिशिलापट्टसनाथो मणिखचितशिलायाः [illegible]

उभौ । प्रविश्योपविष्टौ ।

मिश्र । लदासंस्थिदा पेक्खिस्सं दाव पियसहिए पडि-
किदिं, तदो से भत्तुणो बहुमदं अणुराअं णिवेद-
इस्सं[१] ।

इति तथा कृत्वा स्थिता ।

राजा । निश्वस्य । सखे ! सर्व्वमिदानीं स्मरामि शकु-
न्तलायाः प्रथमदर्शनवृत्तान्तं, यं कथितवानस्मि
भवते । स भवान् प्रत्यादेशसमये मत्समीपगतो
नासीत्, किन्तु पूर्व्वमपि न त्वया कदाचित् सङ्कीर्त्तितं
तत्रभवत्या नामादिकं, कच्चिदहमिव विस्मृतवांस्त्व-
मपि ? !

मिश्र । अदोज्जेव महीवदीहिं खणम्हि सहिअअ।दो
सहाआओ ण बिरहिदव्वाओ[२] ।

विदू । ण बिसुमरामि, किन्तु सव्वं कहिअ अवसाणे
उण तुए भणिदं परिहासबिअप्पिओ एसो ण
भूदत्थोत्ति, मएबि मन्दबुद्धिणा तधा ज्जेव गहिदं,
अधवा भविदव्वदा क्खु एत्थ बलवदी[३] ।

---

दुहः । पहृशब्दमुपक्रम्य राजादिशासनान्तरपीठयोरिति मेदिनी ।
विविक्ततया शून्यतया स्वागतेमेव मङ्गलप्रश्नेमेव निसर्गमारुतेन स्वाभा-
विकमारुतेन ।

(१) लता संश्रिता प्रेक्षिष्ये तावत्प्रियसख्याः प्रतिकृतिं ततोऽस्या
भर्तुर्बहुमतमनुरागं निवेदयिष्यामि ।

(२) अतएव महीपतिभिः क्षणमपि सहृदयाः सहाया न विर-
हितव्याः । सहृदयाः पण्डिताः ।

(३) न विस्मरामि किन्तु सर्व्वं कथयित्वाऽवसाने पुनस्त्वया भणितं,
परिहासविकल्पित एष न भूतार्थ इति मयाऽपि मन्दबुद्धिना तथैव
गृहीतम् अथवा भवितव्यता खलु बलवती ।

मिश्र । एव्वमेदं[1] ।

राजा । क्षणं ध्यात्वा । सखे ! परित्रायस्व माम् ।

विदू । भो वअस्स ! किं एदं तुह उववण्णं ? ण कदावि सप्पुरिसा सोअचित्ता होन्ति, णं पवादेवि णिक्कम्पा ज्जेव गिरिओ[2] ।

राजा । वयस्य ! निराकरणविक्लवायास्ते सख्यास्तामव स्थामनुस्मृत्य बलवदशरणोऽस्मि । सा हि

इतः प्रत्यादिष्टा स्वजनमनुगन्तुं व्यवसिता
स्थिता तिष्ठेत्युच्चैर्वदति गुरुशिष्ये गुरुसमे ।
पुनर्दृष्टिं वाष्पप्रकरकलुषामर्पितवती
मयि क्रूरे यत्तत् सविषमिव शल्यं दहति माम्[3] ॥

मिश्र । अह्महे ! ईदिसी परवसदा इमस्स मम्मि सन्दावेदि[4] ।

---

(१) एवमिदम् ।

(२) भो वयस्य किमिदन्तवोपपन्नं न कदाऽपि सत्पुरुषाः शोकचित्ता भवन्ति । ननु प्रवातेऽपि निष्कम्पा एव गिरयः । ननु यस्मात् प्रवाते प्रबलवायावपि गिरयः पर्वतानिष्कम्पाः स्थिरा एव । सत्पुरुषा कदाऽपि कस्मिन्नपि काले शोकःचित्ते येषान्ते एतादृशा न भवन्ति भो वयस्येदं विरहयुक्तत्वं तव उपपन्नं युक्तं किम् । सत्पुरुषत्वे नायुक्तमित्यर्थः ।

(३) इत इति । इतोऽस्मात् इदमस्तसिलि तस्मिन्निदमइशिति इदम इशादेशः । प्रत्यादिष्टा निराकृता तदनु स्वजनं शार्ङ्गरवादिकम् अनुगन्तुं पश्चाद्यातुं व्यवसिता कृतनिश्चया तत्पश्चाद्गुरुसमे गुरुतुल्ये गुरुशिष्ये कण्वस्य शिष्ये शार्ङ्गरवे तिष्ठेति उच्चैर्वदति सति स्थिता सा शकुन्तला क्रूरे निष्ठुरे मयि वाष्पप्रकरेणाश्रुलोमेन कलुषां दृष्टिमेवं यत् अर्पितवती दत्तवती तत् सविषं विषसहितं शल्यमिव मां दहति पीडयति ।

(४) अहो ईदृशी परवशताऽस्य मनाऽपि सन्तापयति । परवशता शकुन्तलाऽधीनतेत्यर्थः ।

विदू । भो ! अत्थि मे तक्को, केण उण तत्थभोदी आआस सञ्चारिणा णीदेत्ति?[१] ।

राजा । वयस्य ! कः पतिव्रतां तामन्यः परामष्टुमुत्सहते, मेनका किल सख्यास्ते जन्मप्रतिष्ठेति[२] तत्सखीजनादस्मि श्रुतवान्, तत्सहचरीभिस्तया वा नीतेति हृदयमाशङ्कते ।

मिश्र । सम्मोहेवि विम्हअणीओ क्खु इमस्स पडिबोधो[३] ।

विदू । भो ! जइ एव्वं ता समस्ससदु भवं, अत्थि क्खु समागमो कालेण तत्थभोदीए[४] ।

राजा । कथमिव ?

विदू । ण क्खु मादापिदरा भत्तिविओअदुक्खिदं दुहिदरं चिरं पेक्खिदुं पारेन्ति[५]।

(१) भोऽस्तिमे तर्कः केन पुनस्तत्र भवती आकाशसञ्चारिणा नीतेति ।

(२) ते तव सख्याः शकुन्तलायाः जन्मप्रतिष्टा जन्मस्थानं मातेति यावत् । प्रतिष्टा गौरवे स्थितौ । स्थाने चेति मेदिनीकरोक्तेः ।

(३) सम्मोहेऽपि विस्मयनीयः खल्वस्य प्रतिबोधः । सम्मोहेऽपि प्रियाविरहजनितशोकेऽपि अस्य वृत्तस्य प्रतिबोधोऽनुभवः विस्मयनीय आश्चर्यकारकः ।

(४) भो यद्येवन्तदाश्वसितु भवानस्ति खलु समागमः कालेन तत्र भवत्याः ।

(५) न खलु मातापितरौ भर्तृवियोगदुःखितां दुहितरं चिरं प्रेक्षितुं पारयतः । मातापितराविति माता च पिता चेति विग्रहे पितामात्रेति वैकल्पिकत्वेनैकशेषाभावे पितुर्द्वयग्रहणं माता गौरवेणाऽतिरिच्यत इत्यतया पितृशब्दापेक्षया मातृशब्दस्याभ्यर्हितत्वान्मातुः पूर्वनिपातः । आनङ् ऋतोद्वन्द्वे इति पितृशब्दे उत्तरपदे मातुरानङ् । चिरं चिरकालं प्रेक्षितुं द्रष्टुं पारयतः शक्नुतः । खल्विति निश्चये । अनेन शकुन्तलालाभविरोधिमेनका नयनजन्यशोकोपशमनाच्छक्तिनामकमङ्गम् । विरोधशमनं शक्तिरिति दशरूपकात् ।

राजा । वयस्य !

स्वप्नो नु माया नु मतिभ्रमो नु क्लृप्तं नु तावत्फलमेव पुण्यैः।
असन्निवृत्त्यै तदतीतमेव मनोरथानामतटप्रपातः[१] ॥

विदू । भो ! मा एव्वं, णं अङ्गुलीअअं ज्जेव एत्थ णिदंसणं, अवस्सम्भाविणो अचिन्तणीअसमागमा होन्ति[२] ।

राजा । अङ्गुरीयकं विलोक्य । अये ! इदं तदसुलभस्थानभ्रंशि शोचनीयम् ।

(१) विदूषकेण केन शकुन्तला नीतेति शङ्किते शकुन्तलाजननी मेनकास्तीति श्रुतं तया तत्सखीभिर्वा नीतेति सम्भावयामीति व्याहृतेन तर्ह्यवश्यं समागमो भविष्यति किमिदानीं दूयसे इत्यभिहितो राजा प्राह । स्वप्नोन्विति । हे वयस्य योऽयं शकुन्तला समागमे प्रत्याख्यानतिरोधानादिवृत्तान्तः स्वप्नो वा मायाबेन्द्रजालादिरूपा ममैव मतेर्भ्रमो वा स्यात्तत्र सत्य इति मन्ये । यदि च सत्यस्तथाऽपि पुण्यैस्तावत् सकृत्समागमादिरूपमेव फलं क्लृप्तं जनितमत्र पुनरपि समागमः साध्येतेति मन्ये । यतस्तद्वृत्तमसन्निवृत्त्यै पुनरावृत्तिविरहाय गतमत्र पुनरावृत्तिस्तिरोहितस्यार्थस्य सम्भाव्यते योयमेष मेनका सखीभिर्नीता भवेत् भर्तृवियुक्तान्दुहितरयं द्रष्टुमशक्नुवद्भ्यां मातापितृभ्यां प्रेषितया समागमो भावीत्येवमादिर्मनोरथानां वयसामिव तीरानिकटे प्रदेशे प्रपात एव ननु यथार्थ इति भावः ।

(२) भो मैवं नन्वङ्गुलीयकमेवात्र निदर्शनम् । अवश्यम्भाविनोऽचिन्तनीयसमागमा भवन्ति । अत्रास्मिन्विषयेऽङ्गुलीयकमेव निदर्शनं दृष्टान्तः । यन्नद्यस्यान्तर्गतमपि भवता पुनः प्राप्तमित्यनुमत्यालगेहकृतेति भावः । कुत इत्याशङ्क्याह । अवश्यम्भवन्तीति अवश्यं भाविनोऽर्था वस्तूनि । अचिन्तनीयः कारणान्तराऽनपेक्षः समागमः सम्बन्धो येषान्त एतादृशा भवन्ति । युवयोः समागमस्य सम्पादयिता दैवमेवेति भावः ।

(१) हे अङ्गुलीय तव सुचरितं क्षयेन फलेन प्रतनु स्वल्पं विभाव्यते निश्चीयते नूनमिति निश्चये । यद्यस्मात्कारणात्तस्याः शकुन्तलायाः

तव सुचरितमङ्गुलीय ! नूनं
प्रतनु ममेन विभाव्यते फलेन ।
अरुणनखमनोहरासु तस्या-
श्च्युतमसि लब्धपदं यदङ्गुलीषु[१] ॥

मिश्र । जइ अणहत्थगदं भवे तदो सच्चं सोअणीअं भवे, सहि ! दूरे वट्टसि एआइणी ज्जेव कससुहाइं अणुहवेमि२ ।

विदू । भो ! इअं णाम मुद्दा केण उद्देसेण भवदा तत्थ भोदीए हत्थसंसग्गं पाविदा३ ? ।

मिश्र । ममवि कोदूहलेण वावारिदो एसो४ ।

राजा । वयस्य ! श्रूयताम् । तदा स्वनगराय तपोवनात् प्रस्थितं मां प्रिया सवाष्पमाह स्म कियच्चिरेणार्य्यपुत्रः पुनरस्माकं स्मरिष्यतीति ।

विदू । तदो तदो५ ? ।

राजा । अथैनां मुद्रामङ्गुल्यां निवेशयता मया प्रत्यभिहिता ।

विदू । किं त्ति६ ? ।

---

अरुणवर्णैर्नखैर्मनोहरासु रम्यासु अङ्गुलीषु लब्धं प्राप्तं पदं स्थानं येन तदेतादृशं सत् च्युतं स्खलितमसि । पदं व्यवसितिस्थानमिति कोषः ।

(२) यद्यनन्यहस्तगतं भवे तदा सत्यं शोचनीयं भवेत् । सखि दूरे वर्त्तसे एकाकिन्येव कर्णसुखान्यनुभवामि ।

(३) भो इयन्नाम मुद्रा केनोद्देशेन भवता तत्र भवत्या हस्तसंसर्गं प्रापिता ।

(४) ममाऽपि कौतूहलेन व्यापारित एषः । कौतूहलेनौत्सुक्येन व्यापारितो नियोजितः ।

(५) ततस्ततः । (६) किमिति ।

(१) एकैकेति । हे प्रिये शकुन्तले अत्राश्रमे दिवसे दिवसे दिने

राजा । एकैकमत्र दिवसे दिवसे मदीयं
नामाक्षरं गणय गच्छसि यावदन्तम् ।
तावत् प्रिये मदवरोधनिदेशवर्त्ती
नेता जनस्तव समीपमुपैष्यतीति[1] ॥

तच्च दारुणात्मना मया मोहान्नानुष्ठितम् ।

मिश्र । रमणीओ क्खु अवही बिहिणा बिसंवादिदो[2] ।

विदू । भो ! कधं लोहिदमच्छस्स बडिसं बिअ मुहप्पबिट्ठं एदं आसी ?[3] ।

राजा । शचीतीर्थे सलिलं वन्दमानायास्ते सख्या हस्ताद्गङ्गास्रोतसि परिभ्रष्टम्[4] ।

विदू । जुज्जदि[5] ।

मिश्र । अदो क्खु तवस्सिणीए सउन्तलाए अधम्मभीरुणो इमस्स राएसिणो परिणए सन्देहो जादो, अधवा ण ईदिसो अणुराओ अहिण्णाणं अबेक्खदि, ता कधं बिअ एदं ?[6] ।

---

दिने मदीयन्नामाक्षरं गणय यावत् यस्मिन्कालेऽन्तं चरमवर्णं गच्छसि प्राप्स्यसि तावत् तस्मिन्काले मदवरोधस्य ममान्तःपुरस्य निदेशवर्त्ती आज्ञाकारको नेतानेष्यन् जनस्तव समीपं मुपैष्यति आगमिष्यसि ।

(२) रमणीयः खलु अवधिर्विधिना बिसंवादितः । विसंवादितो विप्रलब्धः ।

(३) भो कथं लोहितमत्स्यस्य वडिशमिव मुखप्रविष्टमेतदासीत् ।

(४) गङ्गेति । गङ्गास्रोतसि गङ्गाप्रवाहे परिभ्रष्टं स्खलितम् ।

(५) युज्यते ।

(६) अतः खलु तपस्विन्याः शकुन्तलाया अधर्मभीरोरस्य राजर्षेः परिणये सन्देहो जातः, अथवा नेदृशोऽनुरागोऽभिज्ञानमपेक्षते तत्कथमिवैतत् । अतः खलु मुद्राऽदर्शनादेव हेतोः । परिणये विवाहविषये ।

राजा। उपालप्स्ये तावदिदमङ्गुरीयकम्।

विदू। सस्मितम्। भो! अहंपि दाव एदं दण्डकट्ठं उज्जुअं कधं कुडिलं तुमं सित्ति[1]।

राजा। तदुक्तमेव।

कथं नु तं कोमलबन्धुराङ्गुलिं
करं विहायासि निमग्नमम्भसि?।
अथवा अचेतनं नाम गुणं न वीक्षते,
मयैव कस्मादवधीरिता प्रिया?[2]॥

मिश्र। सअं ज्जेव पडिवन्नो जं अह्मि वत्तुकामा[3]।

विदू। भो सव्वधा अहं बुभुक्खाए मारिदव्वो[4]।

राजा। अनादृत्य। प्रिये! अकारणपरित्यागादनुशयदग्धहृदयस्तावदनुकम्प्यतामयं जनः पुनर्दर्शनेन।

प्रविश्य चित्रफलकहस्ता चेटी। भट्टा! इअं चित्तगदा भट्टिणी[5]। इति चित्रफलकं दर्शयति।

(१) भो अहमपि तावदिदं दण्डकाष्ठमुपालप्स्ये कथमृजुकस्य मे कुटिलं त्वमसीति।

(२) कथमिति। कथं केन प्रकारेण कोमला मृदुला बन्धुरा उन्नतानता अङ्गुलयो यस्य स एतादृशं तं करं शकुन्तलायाः हस्तं विहाय त्यक्त्वा अम्भसि जले निमग्नमसि। नु प्रश्ने। अथ वा। अचेतनं वस्तु गुणं न वीक्षते कस्माद्धेतोर्मयैव मयापि एवकारोऽप्यर्थे। प्रिया शकुन्तलाऽवधीरिता तिरस्कृता। तस्मिन्क्षणे ममापि विवेकरहितता जातेत्यर्थः।

(३) स्वयमेव प्रतिपन्नो यमस्मि वक्तुकामा।

(४) भो सर्वथाऽहं बुभुक्षया मारयितव्यः। भोक्तुमिच्छा बुभुक्षा-तया क्षुधा। इदं राज्ञोन्यत्र विक्षेपणार्थम्।

(५) भर्त्तरियं चित्रगता भट्टिनी। भट्टिनी अकृताऽभिषेकापत्नी। इतराम्न च भट्टिनीत्युक्तिः।

राजा । विलोक्य । अहो ! रूपमालेख्यगताया अपि प्रियायाः । तथाहि

दीर्घापाङ्गविसारिनेत्रयुगलं लीलाञ्चितभ्रूलतं
दन्तान्तःपरिकीर्णहासकिरणज्योत्स्नाविलिप्ताधरम् ।
कर्कन्धुद्युतिपाटलोष्ठरुचिरं तस्यास्तदेतन्मुखं
चित्रेऽप्यालपतीव विभ्रमलसत्प्रोद्भिन्नकान्तिद्रवम्[1] ॥

विदू । विलोक्य । साहु वयस्स ! साहु, जं तए महुरो भट्टिणीए दंसिदो भावाणुप्पवेसो, खलदि विअ मे दिट्ठी णिण्णुदप्पदेसेसु, किं बहुणा सत्ताणुप्पवेसस-ङ्काए आलवणकोदूहलं मे जणअदि[2] ।

मिश्र । अहो ! एसा राएसिणो वत्तिआलेहणिदा जाणे पिअसही मे अग्गदो वट्टदि त्ति[3] ।

(१) दीर्घेति । दीर्घेणापाङ्गेन नेत्रयोरन्तेन विसारि नेत्रयुगलं नयनयुग्मं यस्मिन्तत् । तथा लीलया विलासेनाऽञ्चिता शोभिता भ्रूलता यस्मिन्तदेतादृशम् । दन्तान्तर्दशनमध्ये परिकीर्णो व्याप्तो यो हासकिरणस्तस्य ज्योत्स्नया विलिप्तो युक्तोऽधरो यस्मिन् तदेतादृशम् । कर्कन्ध्वद्युतिः पक्वबदरीफलकान्तिरतएवपाटला य ओष्ठस्तेन रुचिरं सुन्दरम् । विभ्रमेण विलासेन लसत् दीप्तिमत् । यद्वा विभ्रमेण विपरीततिलकादिकरणेन । विभ्रमस्त्वरया काले भूषास्थानविपर्ययेति दशरूपकात् । प्रोद्भिन्न उद्गतः कान्तिद्रवो घर्मबिन्दुर्यस्मिन्तदेतादृशं तस्याः शकुन्तलाया एतद्दृश्यमानं तत्पूर्वं लोचनगोचरीकृतं मुखं वदनं चित्रेऽप्यालपतीव । स्यादाभाषणमालाप इति कोषः ।

(२) साधु वयस्य साधु यत्त्वया मधुरो भर्त्र्यादर्शितो भावानुप्रवेशः, स्खलतीव मे दृष्टिर्निम्नोन्नतप्रदेशेषु किं बहुना सत्त्वाऽनुप्रवेशशङ्कयाऽऽलपनकौतूहलं मे जनयति । निम्नतप्रदेशेषु ... स्खलति पतति । तात्त्विकत्वदेशेति भावः । सत्त्वानुप्रवेशशङ्कया ... चयत्वाशङ्कयेत्यर्थः । सत्त्वमस्तीह जन्तुष्वित्यमरः ।

(३) अहो एषा राजर्षेर्वर्तिकालेखनिपुणता, जाने प्रियसखी

राजा

यद्यत् साधु न चित्रे स्यात् क्रियते तत्तदन्यथा ।
तथापि तस्या लावण्यं लेखया किञ्चिदन्वितम्[1] ॥

तथाहि

अस्यास्तुङ्गमिव स्तनद्वयमिदं निम्नेव नाभिः स्थिता,
दृश्यन्ते विषमोन्नताश्च वलयो भित्तौ समायामपि ।
अङ्गे च प्रतिभाति मार्द्दवमिदं स्निग्धप्रभावाच्चिरं,
प्रेम्णा मन्मुखमीषदीक्षत इव स्मेरा च वक्तीव माम्[2] ॥

मिश्र । सरिसं एव्वं पच्चादावगुरुणो सिणेहस्स[3] ।

राजा । निश्वस्य

साक्षात् प्रियामुपगतामपहाय पूर्व्वं
चित्रार्पितामहमिमां बहु मन्यमानः ।

---

मेऽद्यतो वर्त्तत इति । वर्त्तिकाभिर्लेखाया निपुणता चतुरताऽहो आश्चर्य्यं ।

(१) यदिति । यद्यद्वस्तु चित्रे आलेख्यगतायां शकुन्तलायां साधु सम्यक् विकाररहितमिति यावत् । न स्यात् तत्तद्वस्तु अन्यथाऽन्यविधं चित्रकारैः क्रियते । तथाऽपि तथाव्यवहारस्य सत्वेऽपि तस्याः शकुन्तलायाः लावण्यं लेखया किञ्चिदन्वितं सम्बद्धं निवेशितमित्यर्थः ।

(२) अस्या इति । समायामुच्चावचरहितायामपि भित्तौफलके अस्याः शकुन्तलायाः इदं दृश्यमानं स्तनद्वयं कुचद्वयं तुङ्गमिव उच्चवत् । तथा नाभिर्निम्ना गभीरेव स्थिता सम्बद्धा । तथा वलय विषमोन्नता विषमा उन्नता इवाश्च दृश्यन्ते । चिरं चिरकालपर्य्यन्तमभ्यस्तस्य स्निग्धस्य चिक्कणवस्तुनः प्रभावाच्छकुन्तलाङ्गे शरीरे इदं मार्दवं मृदुता प्रतिभाति शोभते । प्रेम्णा प्रणयेन मन्मुखं ममवदनमीषत् ईक्षन्तीव पश्यन्तीव एवं स्मेरा ईषद्धासा सती मा वक्तीव किमप्यालपतीव दृश्यते ।

(३) सदृशमेव पश्चात्तापगुरोः स्नेहस्य ।

(१) साक्षादिति । उपगतामुपसमीपे स्थितां साक्षात् अकृत्रिमां प्रियां शकुन्तलां पूर्व्वम् अपहाय अनादरपूर्व्वकं त्यक्त्वा हे सखे इमां

स्रोतोवहां पथि निकाममजलामतीत्य
जातः सखे प्रणयवान् मृगतृष्णिकायाम्[1]॥

विदू। भो! तिस्सो आइदिओ दीसन्ति, सव्वाओ अ दंसणीआओ, ता कदमा एत्थ तत्थभोदी सउन्तला?[2]।

मिश्र। अणहिण्णो क्खु एसो सहीए रूवस्स मोहचक्खू दूअं क्खु ण से गदा पच्चक्खदं[3]।

राजा। त्वं तावत् कतमां तर्कयसि?।

विदू। निर्व्वर्ण्य। तक्केमि जा एसा सिढ़िलबन्धणुव्वन्तकुसुमेण केसहत्थेण बद्धस्सेअबिन्दुणा बअणेण विसेसदो णमिदसाहाहिं बाहूलदाहिं उस्ससिदणीविणा वसणेण अ ईसीपरिस्सन्ता विअ अविसेअसिणिद्धदरपल्लवस्स बालचूदपादवस्स पास्से आलिहिदा एसा तत्थभोदी सउन्तला, इदराओ सहीओत्ति[4]।

---

सन्निहिता चित्रार्पितां लिखितां बहुमन्यमानः पथि निकामजलामधिकजलां स्रोतोवहां नदीमतीत्य विलङ्घ्य, मृगतृष्णिकायां मरीचिकायाम्। मृगतृष्णामरीचिकेत्यमरः। प्रणयवान् याच्ञाविशिष्टो जातः। प्रणयः प्रसरे प्रेम्णि याच्ञेति मेदिनी।

(२) भो तिस्र आकृतयो दृश्यन्ते सर्वा एव दर्शनीयाः, तत्कतमा अत्र तत्रभवती शकुन्तला।

(३) अनभिज्ञः खल्वेष सखीरूपस्य मोघचक्षुः इदं खलु नास्य गता प्रत्यक्षताम्।

(४) तर्कयामि यैषा शिथिलबन्धनोद्वान्तकुसुमेन केशहस्तेन बद्धस्वेदबिन्दुना वदनेन विशेषतो नमितशाखाभ्यां बाहुलताभ्याम् उच्छ्वसितनीविना वसनेन चेषत्परिश्रान्तेवाऽभिषेकस्निग्धतरपल्लवस्य बालचूतकस्य पार्श्वे आलिखितैषा तत्र भवती शकुन्तला इतरे सख्यौ इति। शिथिलबन्धनेनोद्वान्तानि पुष्पाणि येन स तेन केशहस्तेन केशकलापेन। पाशः पक्षश्च हस्तश्च कलापार्थाः इत्यमरः। विशेषतो नमिते शाखे याभ्यां

राजा । निपुणो भवान्, अस्त्यत्र ममापि भावचिह्नम्[1] ।
स्विन्नाङ्गुलिविनिवेशाद्रेखा प्रान्तेषु दृश्यते मलिना ।
अश्रु च कपोलपतितं लक्ष्यमिदं वर्णकोच्छ्वासात्[2] ॥

चेटीं प्रति । चतुरिके ! अर्द्धलिखितमेतद्विनोदस्थानमस्माभिः, तद्गच्छ वर्त्तिकास्तावदानय ।

चेटी । अज्ज माढव्व ! अवलम्ब चित्तफलअं जाव गच्छम्[3] ।

राजा । अहमेवालम्बे । इति यथोक्तं करोति ।

चेटी । निष्क्रान्ता ।

विदू । भो किं एत्थ अवरं आलिहिदव्वं ?[4]

मिश्र । जो जो पिअसहीए अहिमदो पदेसो तं तं आलिहिदुकामोत्ति तक्केमि[5] ।

राजा ! सखे ! श्रूयताम्

---

याभ्यान्ताभ्याम् । बाहुलताभ्यां भुजलताभ्याम् । उच्छ्वसितनीविना चलितनीविना । स्त्रीकटी वस्त्रबन्धेऽपि नीवीत्यमरः ।

(१) निपुण इति । निपुणः प्रवीणः । भावस्य स्वेदादि सात्विकभावस्य चिह्नं लक्ष्म ।

(२) स्विन्नाङ्गुलीति । लिखनसमये शकुन्तलासम्बन्धेन स्विन्नायाः स्वेदवत्या मम अङ्गुल्या विनिवेशात्स्थापनात् प्रान्तेषु मलिना रेखा दृश्यते लक्ष्यते । तथा वर्णकस्यरङ्गस्योच्छ्वासादुत्फुल्लत्वाद्धेतोः कपोलयोर्गण्डस्थलयोः पतितं स्खलितं ममाश्रु नेत्रजलं चेदं लक्ष्यं निश्चायकम् । आभ्यां सात्विकभावो दर्शितः । उक्तञ्च । स्तम्भः स्वेदोऽथ रोमाञ्चः स्वरभङ्गोऽथ वेपथुः । वैवर्ण्यमश्रुप्रलय इत्यष्टौ सात्विका गुणा इति ।

(३) आर्य्य माधवाऽवलम्बस्व चित्रफलकं यावदागच्छामः ।

(४) भो किमत्राऽपरं लिखितव्यम् ।

(५) यो यः प्रियसख्या अभिमतः प्रदेशस्तन्तमालिखितुकाम इति तर्कयामि ।

(१) कार्य्या इति । सैकतेषु वालुकामयतीरेषु लीनानि स्थितानि

कार्या सैकतलीनहंसमिथुना स्रोतोवहा मालिनी,
पादास्तामभितो निषण्णचमरा गौरीगुरोः पावनाः ।
शाखालम्बितवल्कलस्य च तरोर्निर्मातुमिच्छाम्यधः
शृङ्गे कृष्णमृगस्य वामनयनं कण्डूयमानां मृगीम्[1] ॥

विदू । स्वगतम् । जधा मण्णेदि तधा तक्केमि पूरिदव्वं अणेण चित्तफलअं आकिदिहिं लम्बकुच्चाणं वक्कलपरिहाणाणं तावसाणं त्ति[2] ।

राजा । वयस्य ! अन्यच्च शकुन्तलायाः प्रसाधनमभिप्रेतं लेखितुं विस्मृतमस्माभिः[3] ।

विदू । किं विअ ?[4] ।

मिश्र । वणवासस्स कणआभावस्स अ जं सरिसं भविस्सदि[5] ।

---

हंसमिथुनानि यस्याः सैतादृशी मालिनी तन्नामिका स्रोतोवहा नदी कार्या । तां मालिनीम् अभितः उभयतः । अभितः परितः समयेति द्वितीया । गौर्याः पार्वत्याः गुरोः पितुर्हिमालयस्य निषण्णा स्थिता चमरा मृगविशेषा येषु ते एतादृशाः पावनाः पादाः प्रत्यन्तपर्वताः कार्याः । शाखासु तरुस्कन्धेषु लम्बितानि वल्कलानि यस्यैतादृशस्य तरोरधः कृष्णमृगस्य शृङ्गे वामनयनं सव्यनेत्रं कण्डूयमानां कर्षयन्तीं मृगीञ्च निर्मातुमालिखितुमिच्छामि ।

(२) यथा मन्यते तथा तर्कयामि पूरयितव्यमनेन चित्रफलकमाकृतिभिर्लम्बकूर्चानां वल्कलपरिधानानां तापसानामिति । लम्बकूर्चानां दीर्घश्मश्रूणां कूर्चमस्त्री भ्रुवोर्मध्ये कठिनश्मश्रुकैतव इति मेदिनी कोषः ।

(३) अन्यच्चेति । शकुन्तलाया अभिप्रेतमभिमतं प्रसाधनं वेशरचनम् ।

(४) किमिव ।

(५) वनवासस्य कन्याभावस्य च यत्सदृशं भविष्यति । तल्लेखितुमस्माभिर्विस्मृतमिति पूर्व्वेणान्वयः ।

(१) कृतमिति । हे सखे कर्णार्पितबन्धनं कर्णयोरर्पितौ न्यासी-

राजा ।

कृतं न कर्णार्पितबन्धनं सखे !
शिरीषमागण्डविलम्बिकेशरम् ।
न वा शरच्चन्द्रमरीचिकोमलं
मृणालसूत्रं रचितं स्तनान्तरे[1] ॥

विदू । किण्णु क्खु तत्थभोदी रत्तकुवलअसोहिणा अग्गहत्थेण मुहं आवारिअ चकिदचकिदा विअ ट्ठिदा ?[2] ।

साऽवधानं दृष्ट्वा । आ ही ही भो एसो दासीए पुत्तो कुसुमरसपाड़च्चरो दुट्ठमहुअरो तत्थभोदीए वअणकमलं अहिलसदि[3] ।

राजा । ननु वार्य्यतामेष धृष्टः ।

विदू । भो ! तुमं ज्जेव अविणीदाणं सासिदा दूमस्स वारणे पहवसि[4] ।

(१) कृतो बन्धने यस्य तदेतादृशम् । आगण्ड गण्डं कपोलमभिव्याप्याऽऽत्र मर्य्यादेति समासः । विलम्बी केशरं यस्य तदेतादृशम् । शिरीषं शिरीषपुष्पं न कृतन्नचिन्वितम् । शरच्चन्द्रस्य मरीचिवत्कोमलं मृदुलं मृणालसूत्रं वा विसतन्तुश्च स्तनान्तरे कुचमध्यभागे न रचितश्च चिह्नितम् ।

(२) किन्नु खलु तत्र भवती रक्तकुवलयशोभिनाऽग्रहस्तेन मुखमावार्य्य चकितचकितेव स्थिता । रक्तकुवलयमिव रक्तकमलमिव शोभत इति तेन । अग्रहस्तेन पाणिना मुखमावार्य्याऽऽच्छाद्य चकितचकिताऽतिभीतेव स्थिता । चकितः शङ्कितो भीत इति त्रिकाण्डशेषकोषः ।

(३) आ ही ही भो एष दास्याः पुत्रः कुसुमरसपाटच्चरो दुष्टमधुकरस्तत्रभवत्याः वदनकमलमभिलषति । भो राजन् दास्याः पुत्रो नीचः कुसुमरसस्य पुष्परसस्य पाटच्चरश्चौरः दुष्टमधुकरो दुष्टभ्रमरः तत्र भवत्याः शकुन्तलाया वदनकमलं मुखपङ्कजमभिलषतीच्छति आ हीही । आशब्दः पीड़ायाम् । हीहीशब्दो हासे । हीही शब्दो विस्मयहासयोरिति मेदिनीकोषात् ।

(४) भो त्वमेवाऽविनीतानां शास्ताऽस्य वारणे प्रभवसि ।

राजा । युज्यते । अयि भोः कुसुमलताप्रियातिथे ! किमत्र परिपतनखेदमनुभवसि ? ।

एषा कुसुमनिषण्णा तृषितापि सती भवन्तमनुरक्ता ।
प्रतिपालयति मधुकरी न खलु मधु त्वां विना पिबति[1] ॥

मिश्र । अहिअत्थं क्खु वारिदो[2] ।

विदू । भो पडिसिद्धवामा क्खु एसा जादी[3] ।

राजा । सकोपम् । भो न मे शासने तिष्ठसि, श्रूयतां तर्हि, सम्प्रति हि

अक्लिष्टबालतरुपल्लवलोभनीयं
पीतं मया सदयमेव रतोत्सवेषु ।
बिम्बाधरं दशसि चेद्भ्रमर ! प्रियाया-
स्त्वां कारयामि कमलोदरबन्धनस्थम्[4] ॥

विदू । भो एव्वं तिक्खदण्डस्स दे कधं ण भाइस्सदि । वि-

(१) एषेति । कुसुमे पुष्पे निषण्णा । सती पतिव्रताऽतएवाऽनुरक्ताऽनुरागविशिष्टा । एषा मधुकरी तृषिताऽपि पुष्परसं पातुमिच्छुरपि भवन्तं प्रतिपालयति खलु यतः कारणात् त्वां विना मधु पुष्परसं न पिबति । मधु मद्ये पुष्परसे इति कोषः ।

(२) अत्यर्थं खलु वारितः ।

(३) भो प्रतिषिद्धवामा खलु एषा जातिः । एषा जातिर्भ्रमररूपा जातिः प्रतिषिद्धेन निषेधेन वामा प्रतिकूला ।

(४) अक्लिष्टेति । अक्लिष्टोऽम्लानो यो बालश्चासौ नूतनश्चासौ तरुपल्लवस्तद्वल्लोभनीयम् अतिकोमलमित्यर्थः । अतएव रतोत्सवेषु सदयमेव मया पीतं चुम्बितं प्रियायाः प्रियभूतायाः शकुन्तलाया बिम्बाऽधरं बिम्बवदधरम् ओष्ठं हे भ्रमर दशसि चेत् त्वां कमलोदरबन्धनस्थं बध्यतेऽस्मिन्निति बन्धनम् अधिकरणे ल्युट् कमलोदरमेव बन्धनं कारागृहं तत्स्थं कारयामि ।

आत्मगतम् । एसो दाव उम्मत्तो, अहम्पि एदस्स सङ्गेण ईदिसो ज्जेव संवुत्तो[१] ।

राजा । निवार्य्यमाणोऽपि कथं स्थित एव ।

मिश्र । अम्मो ! धीरम्पि जणं रसो विआरेदि[२] ।

विदू । प्रकाशम् । भो ! चित्तं क्खु एदं[३] ।

राजा । कथं चित्रम् !

मिश्र । अहम्पि दाणिं अवगदत्था, किं उण जधा चिन्तिदाणुसारी एसो[४] ।

राजा । किमिदमनुष्ठितं पौरोभाग्यम् ?[५] ।

दर्शनसुखमनुभवतः साक्षादिव तन्मयेन हृदयेन ।
स्मृतिकारिणा त्वया मे पुनरपि चित्रीकृता कान्ता[६] ॥

इति वाष्पं विसृजति ।

मिश्र । पुव्वापरविरुद्धो अपुव्वो एसो विरहमग्गो[७] ।

(१) भो ए-तीक्ष्णदण्डस्य ते कथन्न भेष्यति । एष तावदुन्मत्त अहमप्येतस्य सङ्गेनेदृश एव संवृत्तः ।

(२) अहो धीरमपि जनं रसो विकारयति । रसो विप्रलम्भाख्यो विकारयति अन्यथाकरोति ।

(३) भो चित्रं खल्विदम् ।

(४) अहमपीदानीमवगतार्था किम्पुनर्यथा चिन्तितानुसार्य्येष । ममापि एतत्कालात्प्राक् तात्त्विकबुद्धिरासीदेष राजा पुनः किं वक्तव्यमित्यर्थः ।

(५) पौरोभाग्यमिति । दोषैकदर्शितम् । येनानुष्ठानेन केवलं दोष एवोत्पद्यते तदेवप्रियत्वमित्यर्थः ।

(६) दर्शनेति । तन्मयेन शकुन्तलामात्रविषयकेण हृदयेन चेतसा साक्षात् दर्शनसुखं प्रियायाः दर्शनसुखम् अनुभवतो मे मम स्मृतिकारिणा बोधयता त्वया कान्ता शकुन्तला पुनरपि चित्रीकृता अभूततद्भावे च्विः ।

(७) पूर्वापरविरुद्धोऽपूर्व एष विरहमार्गः । पूर्वं यथा मतः

राजा । वयस्य ! कथमेवमविश्रामं दुःखमनुभवामि ? ।

प्रजागरात् खिलीभूतस्तस्याः स्वप्नसमागमः ।

बाष्पस्तु न ददात्येनां द्रष्टुं चित्रगतामपि[1] ॥

मिश्र । सव्वधा पमज्जिदं तुए पच्चादेसदुक्खं पिअसहीए पच्चक्खं ज्जेव सहीजनस्स[2] ।

चतुरिका प्रविश्य । जेदु जेदु भट्टा, वत्तिआकरण्डअं गेण्हिअ इदो अहं पत्थिदह्मि[3] ।

राजा । ततः किम् ? ।

चेटी । तं मे हत्थादो पिङ्गलिआवेदिआए देवीए वसुमदीए अहं ज्जेव अज्जउत्तस्स उवणइस्संत्ति भणिअ सवलक्कारं गहीदं[4] ।

विदू । तुमं कधं विमुक्का ?[5] ।

---

पश्चात्तयाऽनभिमतः । अतएवाभिनवो नूतनः । विरहिणां वियोगिनां मार्गः पन्थाः ।

(१) प्रजागरादिति । प्रजागरात् प्रकृष्टजागरणात् तस्याः शकुन्तलायाः स्वप्ने समागमः सम्बन्धः खिलीभूतः लोकमवशिष्टस्तुपुनः चित्रगतामपि एनां शकुन्तलां द्रष्टुं बाष्पो नेत्रजलं न ददाति । आवृणोतीत्यर्थः ।

(२) सर्वथा प्रमार्जितं त्वया प्रत्यादेशदुःखं प्रियसख्याः प्रत्यक्षमेव सखीजनस्य ।

(३) जयतु जयतु भर्त्ता । वर्त्तिकाकरण्डकं गृहीत्वेतोऽहं प्रस्थिताऽस्मि । वर्त्तिकाकरण्डकं वर्त्तिकास्थापनाय कृतं वंशपात्रविशेषम् ।

(४) तन्मे हस्तात्पिङ्गलिकावेदितया देव्या वसुमत्या अहमेवाऽऽर्य्यपुत्रस्योपनेष्यामीति भणित्वा सबलात्कारं गृहीतम् । पिङ्गलिकेति नामिकाऽपरा चेटी तयाऽऽवेदितया चित्रकर्म्मणि पेटिकां भर्त्तारं नयतीति कथिते ।

(५) त्वं कथं विमुक्ता ।

(१) यावद्देव्या लताविटपलग्नमुत्तरीयाञ्चलं पिङ्गलिका मोचयति

चेटी। जाव देवीए लदाविडवलग्गं उत्तरीअञ्चलं णिङ्-लिआ मोआवेदि दाव णिव्वुविदो मए अप्पा[1]।

राजा। वयस्य! उपस्थिता देवी बहुमानगर्विता च तद्भवानिमां प्रतिकृतिं रक्षतु।

विदू। अत्ताणम्मि किंत्ति ण भणासि?। चित्रफलक-मादायोत्थाय च। जइ भवं अन्तेउरकूडवागुरादो मुञ्चिस्सदि तदो मं मेहच्छण्णप्पासादे सद्दाविस्सदि, एदञ्च तहिं गोवाएमि जहिं पारावदं उज्झिअ अस्स कोवि ण पेक्खिस्सदि[2]। इति द्रुतपदं निष्क्रान्तः।

मिश्र। अह्मो! अस्सङ्कन्तहिअओवि पढमसम्भावणं र-क्खदि थिरसोहिदो दाव एसो[3]।

प्रविश्य पत्रहस्तः प्रतीहारी। जेदु जेदु देवो[4]।

राजा। वेत्रवति! न खल्वन्तरे त्वया दृष्टा देवी?

प्रतो। देव! दिट्ठा, पत्तहत्थं मं पेक्खिअ पडिणिउत्ता[5]।

---

तावन्निर्वृतो मयात्मा। उत्तरीयस्याञ्चलमन्तम्। स्त्रीवेटाञ्चलञ्च वस्त्रान्त इति कोषात्।

(२) आत्मानमपि किन्नभणसि। यदि भवानन्तःपुरकूटवागुरातो मोक्ष्यते तदा मां मेघच्छन्नप्रासादे शब्दायिष्यते, इदञ्च तत्र गोपायामि यत्र पारावतमुज्झित्वाऽन्यः कोपि न प्रेक्षिष्यते। आत्मानं त्वमपि रक्षा त्विति कथन्न कथयसीत्यर्थः। अन्तःपुरस्य देव्याः कूटं माया सदेवागुरा मृगबन्धिनी तस्या मोक्ष्यसे। शब्दायिष्यते निमन्त्रयिष्यते। शब्दवै-रेति कण्ड्। अन्तेउरवहूवागुरादो इति पाठान्तरेतु। अन्तःपुरवधू देवी सैव वागुरेत्यर्थः।

(३) अहो अन्यसङ्क्रान्तहृदयोऽपि प्रथमसम्भावनं रक्षति स्थिर-सौहृदस्तावदेषः। अन्यसङ्क्रान्तहृदयोऽपि शकुन्तलाग्टहीतचित्तोऽपि प्रथमसम्भावनं प्राक्तनप्रणयं रक्षति एष दुष्यन्तः स्थिरसौहृदोऽविच-लितप्रेमा। (४) जयतु जयतु देवः। देवो राजा।

(५) देव दृष्टा पत्रहस्तां मां प्रेक्ष्य प्रतिनिवृत्ता।

राजा। कार्य्यज्ञा देवी कार्य्योपरोधं मे परिहरति।

प्रती। देव! अमच्चो विण्णवेदि अज्ज रज्जकज्जस्स बहुलदाए एक्कं ज्जेव मए पोरकज्जं पच्चवेक्खिदं, तं देवो पत्तारोविदं पच्चक्खीकरेदुत्ति[1]।

राजा। इतः पत्रं दर्शय।

प्रती। उपनयति।

राजा। वाचयति। विदितमस्तु देवपादानां[2] धनवृद्धिर्नाम वणिक् वारिपथोपजीवी नौव्यसनेन विपन्नः, स चानपत्यः, तस्य चानेककोटिसङ्ख्यं वसु, तदिदानीं राजस्वतामापद्यते, इति श्रुत्वा देवः प्रमाणमिति। सविषादम्। कष्टं खल्वनपत्यता[3] वेत्रवति! महाधनतया बहुपत्नीकेनानेन भवितव्यं, तदन्विष्यतां यदि काचिदापन्नसत्त्वास्य भार्य्या स्यात्।

प्रती। दाणिं ज्जेव साकेदउरस्स सेट्ठिणो दुहिदा णिव्वुत्तपुंसवणा तस्स जाआ सुणीअदि[4]।

---

(१) देव अमात्यो विज्ञापयति अद्य राज्यकार्य्यस्य बहुलतया एकमेव मया पौरकार्य्यं प्रत्यवेक्षितं तद्देवः पत्रारोपितं प्रत्यक्षीकरोतु।

(२) विदितमस्त्विति। इतरेषान्तु वर्णानां सर्व्वाऽभावे हरेन्नृप इतिस्मृत्या तस्य वणिक्तया पुत्रादीनामभावेन राज एवाऽधिकार इति भावः।

(३) कष्टमिति। बह्वः पत्न्यो यस्य स तेन नद्यृतश्चेतिकप्। आपन्नसत्त्वा गर्भिणी। इतितु मानवो धर्म इत्युक्त्या मनुना पत्न्या अधिकारस्याऽबोधनादिति भावः।

(४) इदानीमेव साकेतपुरस्य श्रेष्ठिनो दुहिता निवृत्तपुंसवना तस्य जाया श्रूयते। निर्वृत्तं पुंसवनं यस्याः सैतादृशी। तस्य वणिजः।

राजा । स खलु गर्भः पित्र्यमृक्थमर्हति, गत्वैवममात्यं ब्रूहि[1] ।

प्रती । जं देवो आणवेदि[2] । इति प्रस्थिता ।

राजा । एहि तावत् ।

प्रती । प्रतिनिवृत्य । एसाह्मि[3] ।

राजा । किमनेन सन्ततिरस्ति नास्तीति[4] ।

येन येन वियुज्यन्ते प्रजाः स्निग्धेन बन्धुना ।
स स पापादृते तासां दुष्यन्तइति घुष्यताम्[5] ॥

प्रती । एदं णाम घोसइदव्वं[6] । इति निष्क्रम्य पुनः प्रविश्य ।

देव । काले पबिट्ठं विअ अहिणन्दिदं देवस्स सासणं महाजणेण[7] ।

राजा । दीर्घमुष्णञ्च निश्वस्य । एवं भोः सन्ततिच्छेद-

(१) पित्र्यमिति । पितुरागतं पित्र्यमृक्थं धनम् अर्हति प्राप्नोति ।

(२) यद्देव आज्ञापयति ।

(३) एषाऽस्मि ।

(४) किमिति । गर्भोऽस्ति न वाऽस्तिचेत्तस्याधिकारोऽन्यथा राज्ञ एव स्यादित्यनेनालमितिभावः ।

(५) येनेति । प्रजाः जनाः । प्रजा स्यात्सन्ततौ जन इति कोषः । येन येन स्निग्धेन स्नेहयुक्तेन बन्धुना स्वजनेन वियुज्यन्ते । पापादृते पापिष्ठं विनाऽन्यारादिति ऋते योगे पापशब्दात्पञ्चमी । तासां प्रजानां स स बन्धुः दुष्यन्त इति दुष्यन्तामुच्चैः कथ्यताम् । यस्य वियोगे प्रजानान्दुःखं सतासां वनं राजगाम्यपि लभताम् इत्याशयः ।

(६) एतन्नाम घोषयितव्यम् ।

(७) देव काले प्रविष्टमिवाऽभिनन्दितं देवस्य शासनं महाजनेन ।

(१) सन्ततीति । मूलपुरुषस्याऽवसाने मरणे सन्ततेरन्वयस्य विच्छे-

निरवलम्बना मूलपुरुषावसाने सम्पदः परमुपतिष्ठन्ते, ममाप्यन्ते पुरुवंशश्रिय एष वृत्तान्तः।

प्रती। पडिहदं अमङ्गलं[1]।

राजा। धिङ्मामुपनतश्रेयोऽवमानिनम्।

मिश्र। असंसअं पिअसहीं ज्जेव हिअए कदुअ णिन्दिदो अणेण अप्पा[2]।

राजा।

संरोपितेऽप्यात्मनि धर्म्मपत्नी
त्यक्ता मया नाम कुलप्रतिष्ठा।
कल्पिष्यमाणा महते फलाय
वसुन्धरा काल इवोप्तबीजा[3]॥

मिश्र। अपरिच्छिन्ना दाणिं दे भविस्सदि[4]।

चेटी। जनान्तिकम्। अज्ज एदं पत्तं पेसअन्तेण किं विआरिदं अमच्चेण, पेक्ख दाव भट्टिणो बाहजलप्प-

---

इतः नाशान्निरवलम्बना आधाररहिता, परस्मात् इतरम् उपतिष्ठन्ते ममान्ते पुरुवंशश्रिय पुरुवंशलक्ष्म्या अपि ममान्ते मन्नाशे एष वृत्तान्तः प्रकारो भविष्यति।

(१) प्रतिहतममङ्गलम्।

(२) असंशयं प्रियसखीमिव हृदये कृत्वा निन्दितोऽनेनात्मा।

(३) संरोपित इति। काले समयेऽनतिक्रम्योप्तबीजा महते फलाय कल्पिष्यमाणा भविष्यन्ती वसुन्धरा धरित्रीव कुलस्य प्रतिष्ठा स्थिति यस्यास्तादृशी। प्रतिष्ठा गौरवे स्थितावपीति मेदिनी। धर्मपत्नी फलभोक्त्री। पत्युर्नो पत्नसंयोगे इति नादेशः। आत्मनि स्वस्मिन् संरोपितेऽपि गर्भरूपेण प्रवेशितेऽपि मया त्यक्ताऽनादृत्य निष्कासिता नामेति कुत्सायाम्।

(४) अपरित्यक्तेदानीं ते भविष्यति।

(५) आर्य्ये एतत्पत्रं प्रेषयता किं विचारितममात्येन, प्रेक्षस्व ताव-

बाहो संवुत्तो अधवा वा एसो सोअं बुद्धिपुव्वअं पडिवज्जिस्सदि, ता मेहच्छन्दागारट्ठिदं णिव्वाणसमत्थं अज्जमाहव्वं गेह्णिअ आअच्छ[1] ।

प्रती । सुट्ठु दे भणिदं[2] । इति निष्क्रान्ता ।

राजा । अहो ! दुष्यन्तस्य संशयमारूढाः पिण्डभाजः[3]।

कुतः अस्मात् परं बत यथाश्रुतिसंभृतानि

को नः कुले निवपनानि करिष्यतीति ।

नूनं प्रसूतिविकलेन मया प्रसिक्तं

धौताश्रुसेकमुदकं पितरः पिबन्ति[4] ॥

मिश्र । हद्धी हद्धी, सदि क्खु दीवे ववधाणदोसेण अन्धआरं अणुहोदि राएसी[5] ।

---

(१) ...र्जलप्रवाहः संवृत्तः, अथ वा नैषशोकं बुद्धिपूर्व्वकं परित्यजयिष्यति तन्मेघच्छन्नाऽगारस्थितं निर्व्वाणसमर्थम् आर्य्यमाधव्यं गृहीत्वाऽऽगच्छ ।

( २ ) सुष्टुतया भणितम् ।

( ३ ) अहो इति । पिण्डान् भजन्त इति पिण्डभाजः भजोण्विरिति ण्विः । पितृपितामहाः । संशयमस्मात्परं पिण्डदाता भविष्यति न वेति सन्देह-मारूढा अधिगताः अहो विषादे ।

( ४ ) अस्मादिति । अस्माद्दुष्यन्तात्परमतिरिक्तं नोऽस्माकं कुले वंशे यथाश्रुतिसंभृतानि यथाविधिकृतानि निवपनानि पिण्डदानानि । कः करिष्यति नकोऽपीत्यर्थः । इति कारणात् पितरः पितृपितामहाः प्रसूतिविकलेन सन्ततिरहितेन मया प्रसिक्तं दत्तम् उदकं जलं नूनं निश्चयेन धौताश्रुसेकं धावु धातोः क्तं उठि एत्येधत्यूठ्स्विति वृद्धिः । धौतो गलितो अश्रुसेको वाष्पविन्दुर्यस्मिन्कर्मणि तद्यथा स्यात्तथा पिबन्ति बत इति खेदे ।

( ५ ) हाधिक् हाधिक्, सति खलु दीपे व्यवधानदोषेणाऽन्धकारमनुभवति राजर्षिः । सत्यपि प्रसूतौ शापदोषेण तद्विकलं जानातीति भावः ।

चेटी । भट्टा अलं सन्दाविदेण वअस्सो ज्जेव पहू अवरासु देवीसु अणुरूवपुत्तजम्मेण पुव्वपुरिसाणं अणिणो भविस्सदि[1] । आत्मगतम् । ण मे वअणं पडिच्छदि, अणुरूवं पि ओषधं आदङ्कं णिवत्तेदि[2] ।

राजा । शोकनाटितकेन ।

आमूलशुद्धसन्तति कुलमेतत् पौरवं प्रजावन्ध्ये ।
अव्यस्तमितमनार्य्ये देश इव सरस्वतीस्रोतः[3] ॥

इति मोहमुपागतः ।

चेटी । ससम्भ्रमम् । समस्ससदु समस्ससदु भट्टा[4] ।

मिश्र । किं दाणिं ज्जेव णिव्वुदं करेमि? अधवा सुदं मए सउन्तलं समस्ससन्तीए देवजणणीए मुहादो

---

(१) भर्त्तः अलं सन्तापितेन, वयस्य एव प्रभुः, अपरासु देवीषु अनुरूपपुत्रजन्मना पूर्वपुरुषाणामनृणो भविष्यति । वयस्यस्तरुणः वयस्थस्तरुणो युवेत्यमरः ।

(२) न मे वचनं प्रतीच्छत्यनुरूपमप्यौषध आतङ्कन्निवर्त्तयति । अनुरूपं युक्तम् । आतङ्कं रोगम् । निवर्त्तयति शमयति । भवद्-नुरूपो माधव्य एव नाहमिति भावः ।

(३) आमूलेति । प्रजावन्ध्ये सजनमून्येऽतएवानार्य्ये गम्ये आमूलशुद्धसन्तति आमूलादादितः शुद्धा अविच्छिन्ना सन्ततिः धारा यस्य तदेतादृशं पौरवं भूयिष्टम् । पुरुभूयिष्टमित्यमरः । सरस्वत्या नद्याइव स्रोत इव प्रजावन्ध्ये पुत्रादिरहितेऽतएवाऽनार्य्ये अपूज्ये मयि आमूलमादितः शुद्धा दोषरहिता सन्ततिः पुत्रादिनाम्परम्परा यस्य तदेतादृशं पौरवं पुरुसम्बन्धि एतन्मम कुलं वंशः अस्तमितं गतम् इत्यागतौ तः । प्रजा स्यात्सन्ततौ जने । सन्ततिस्तु तनये दुहितर्य्यपि । परम्परा भवेपङ्क्तौ गोत्रविस्तारयोरपीत्युभयत्राप्यमरहेमचन्द्रौ ।

(४) समाश्वसितु समाश्वसितु भर्त्ता ।

(१) किमिदानीमेव निर्वृतं करोमि अथवा श्रुतं मया शकुन्तलां समाश्वासयन्त्या देवजनन्या मुखाद्यज्ञभागसमुत्सुका देवा एव तथा

जस्स भाअसमुस्सुआओ देवाओ ज्जेव तह अणुचिट्ठिस्सन्ति जह सो भट्टा अदूरेण धम्मपदिणीं तुमं अहिणन्दिस्सदित्ति, ता ण जुत्तं मे एत्थ विलम्बिदुं जाव इमिणा वुत्तन्तेण पिअसहीं सउन्तलं समस्सासेमि[1] ।

इत्युद्भ्रान्तकेन निष्क्रान्ता ।

नेपथ्ये । भो अब्बह्मणं अब्बह्मणं[2] ।

राजा । प्रत्यागतचेतनः कर्णं दत्त्वा । अये ! माधव्यस्येवार्त्तनादः ।

चेटी । सो णाम माधव्वो तवस्सी पिङ्गलिआमिस्सिआहिं चेडिआहिं चित्तफलअहत्थो पाविदो भवे[3] ? ।

राजा । चतुरिके ! गच्छ मद्वचनादनिषिद्धपरिजनां देवीमुपालभस्व ।

चेटी । निष्क्रान्ता ।

नेपथ्ये भूयः स एव शब्दः ।

राजा । परमार्थतो भीतभिन्नस्वरो ब्राह्मणः । कः कोऽत्र भोः ? ।

प्रविश्य कञ्चुकी । आज्ञापयतु देवः ।

राजा । निरूप्यतां किमेवं माधव्यब्राह्मणः क्रन्दतीति ।

कञ्चु । यावदवलोकयामि । इति निष्क्रम्य ससंभ्रमं पुनः प्रविष्टः ।

---

ऽनुष्ठास्यन्ति यथा स भर्त्ताऽचिरेण धर्मपत्नीं त्वामभिनन्दिष्यतीति तन्नयुक्तं मेऽत्र विलम्बितुं यावदनेन वृत्तान्तेन प्रियसखीं शकुन्तलां समाश्वासयामि । उद्भ्रान्तकेनाकाशमार्गगमनाऽभिनयेन ।

(२) भो अब्रह्मण्यमब्रह्मण्यम् । अब्रह्मण्यमबध्यम् । ब्राह्मणत्वादिति शेषः । अब्रह्मण्यमबध्योक्ताविल्यमरः ।

(३) सनाम माधव्यस्तपस्वी पिङ्गलिकामिश्रिताभिश्चेटिकाभिश्चित्रफलकहस्तः प्राप्तो भवेत् ।

राजा । पार्व्वतायन ! न खलु किञ्चिदत्याहितम् ?[1] ।

कञ्चु । नैवम्[2] ।

राजा । ततः कुतोऽयं वेपथुः ? [3] । तथाहि

प्रागेव जरसा कम्पः सविशेषस्तु सम्प्रति ।
आविष्करोति सर्व्वाङ्गमश्वत्थमिव मारुतः[4] ॥

कञ्चु । परित्रायतां सुहृदं महाराजः ।

राजा । कस्मात् परित्रातव्यः ? ।

कञ्चु । महतः कृच्छ्रात् ।

राजा । अये ! भिन्नार्थं मभिधीयताम्[5] ।

कञ्चु । योऽसौ दिगवलोकनप्रासादो मेघच्छन्नो नाम[6] ।

राजा । किन्तत्र ? ।

कञ्चु ।

तस्याग्रभागादुग्टहनीलकण्ठै-
रनेकविश्रामविलङ्घ्यश्टङ्गात् ।

(१) अत्याहितमिति । अत्याहितं महाभयम् । खल्विति निश्चये । अत्याहितं महाभीतिरित्यमरः ।

(२) नैवमिति । किमपि महाभयन्नास्तीत्यर्थः ।

(३) वल इति । भयाऽभावेऽयं कम्पकस्मादित्यर्थः ।

(४) प्रागेवेति । जरसा वार्द्धक्येन प्रागेव पूर्व्वमेव कम्पो जातः सम्प्रतीदानीन्तु सविशेषोतिशयः सन् मारुतोऽश्वत्थं पिप्पलमिव सर्व्वाङ्गमाविष्करोति । वायुरश्वत्थ इव कम्पः सर्व्वाऽवयवाऽवच्छेदेन व्याप्नोतीत्यर्थः ।

(५) भिन्नार्थमिति । भिन्नार्थं वक्रोक्तिरहितं अभिधीयताङ्कथ्यताम् ।

(६) दिगिति । दिशामवलोकनाय दर्शनाय प्रसादः । चतुर्थी तदर्थेति समासः ।

(१) तस्येति । ग्टहनीलकण्ठैः ग्टहेपालितमयूरैः । मयूरप-

सखा प्रकाशेतरमूर्त्तिना ते
केनापि सत्त्वेन निगृह्य नीतः[१] ॥

राजा । सहसोत्थाय । आः ममापि सत्त्वैरभिभूयन्ते गृहाः[२] । अथवा बहुप्रत्यवायं नृपत्वम् ।

अहन्यहन्यात्मन एव तावत्
ज्ञातुं प्रमादस्खलितं न शक्यम् ।
प्रजासु कः केन पथा प्रयाती-
त्यशेषतः कस्य पुनः प्रभुत्वम्[३] ॥

नेपथ्ये । अविधावेहि भो ! अविधावेहि[४] ।

राजा । आकर्ण्य गतिभेदं रूपयन् । सखे ! न भेतव्यं न भेतव्यम् ।

गृहं यस्य स तस्मादत्युच्चशिखरादित्यर्थः । गृहः कूटेऽद्रिशृङ्गे इति हेमः । तस्य प्रासादस्याग्रभागादुपरिभागात्प्रकाशेतरमूर्त्तिना विद्याविशेषेणाऽलक्षितस्वरूपेण केनाऽपि सत्त्वेन पिशाचादिना । सत्त्वं द्रव्ये गुणे चित्ते व्यवसायस्वभावयोः । पिशाचादिष्विति हेमचन्द्रः । निगृह्य तिरस्कृत्यतव सखा नीतो गृहीतः ।

(२) आ इति । ममाऽपि अपापिनः । पापिन एव तत्सम्भवादिति भावः । अभिभूयन्ते तिरस्क्रियन्ते । इदङ्कर्वनामकन्नाटकाङ्कम् । गर्वोऽवलेपजं वाक्यमित्युक्तेः ।

(३) अहेति । अहन्यहनि प्रतिदिनम् आत्मनः स्वस्य प्रमादेनाऽनवधानेन स्खलितं ज्ञातुं न शक्यम् । प्रजासु स्वदेशवासिजनेषु पुनः को जनः केन यथा मार्गेण प्रयाति गच्छति इति एतत् अशेषतो ज्ञातुं कस्य राज्ञः प्रभुत्वमस्ति कस्याऽपि शक्तिर्नास्तीत्यर्थः । प्रजाकृतस्याऽधर्मस्याऽपि षष्ठांशभागित्वेन मयि बहुप्रत्यवायित्वं युक्तमेवेति भावः ।

(४) अभिधाव अभिधाव । आभिमुख्यं धाव शत्रोरिति शेषः ।

नेपथ्ये। भो! कधं ण भाइस्सं? एसो-मं कोवि पच्चा मोड़िअ सिरोधरं इक्खुं विअ भग्गत्थिं करिदुमिच्छदि[1]।

राजा। सदृष्टिक्षेपम्। धनुर्धनुः।

प्रविश्य धनुर्हस्ता प्रतीहारी। जअदु जअदु भट्टा, एदं ससरं सरासणं हत्थावारओअ[2]।

राजा। सशरं धनुराधत्ते।

नेपथ्ये।

एष त्वामभिनवकण्ठशोणितार्थी
शार्दूलः पशुमिव हन्मि चेष्टमानम्।
आर्त्तानां भयमपनेतुमात्तधन्वा
दुष्यन्तस्तव शरणं भवत्विदानीम्[3]।

राजा। सक्रोधम्। कथं मामेवोद्दिशति। आस्तिष्ठ तिष्ठ कौणपापसद। त्वमिदानीं न भवसि। चापमारोप्य। पार्वतायन! सोपानमार्गमादेशय।

कञ्चु। इत इतो देवः।

सर्वे सत्वरमुपसर्पन्ति।

राजा। समन्तादवलोक्य। अये! शून्यं खल्विदम्।

(१) भोः कथन्न भेष्यामि एष मां कोऽपि प्रत्यामोच्य शिरोधराम्, इक्षुमिव मां भग्नास्थिं कर्त्तुमिच्छति। शिरोधरां ग्रीवां प्रत्यामोच्य भ्रमयित्वा।

(२) जयतु जयतु भर्त्ता, एतत्सशरं शरासनं हस्तावारकस्य।

(३) एषेति अभिनव नूतनम्। सद्यनिस्सृतमितियावत् कण्ठशोणि-तस्य कण्ठरुधिरस्यार्थीच्छुक एष उपस्थितोऽहं शार्दूलोव्याघ्रश्चेष्टमानमात्मत्राणाय यतमानं पशुमिवत्वां हन्मि। आर्त्तानां विपन्नानां भयम् अपनेतुन्नाशयितुम् आत्तं गृहीतं धनुर्येन स एतादृशो दुष्यन्त

नेपथ्ये। भो! परित्ताअहि परित्ताअहि, अहं तुमं पेक्खामि, तुमं मं ण पेक्खसि? मज्जारगहिदो उन्दुरुविअ णिरासोह्मि जीविदे[१] !

राजा। भोस्तिरस्कारिणीगर्व्वित! किमिदानीं मदीयमस्त्रमपि त्वां न पश्यति? स्थिरो भव, मा च ते वयस्यसम्पर्काद्विश्वासोभूत्[२]। एष तमिषुं सन्दधे

यो हनिष्यति बध्यं त्वां रक्ष्यं रक्षिष्यति द्विजम्।
हंसो हि क्षीरमादत्ते तन्मिश्रा वर्जयत्यपः[३]॥

इति शरं सन्धत्ते।

ततः प्रविशति मातलिर्विदूषकश्च।

मात। आयुष्मन्!

कृताः शरव्यं हरिणा तवासुराः,
शरासनं तेषु विकृष्यतामिदम्।
प्रसादसौम्यानि सतां सुहृज्जने
पतन्ति चक्षूंषि न दारुणाः शराः[४]॥

---

(१) भोः परित्राहि यत्नपरित्राहि, यत्र अहन्त्वां प्रेक्षे त्वामान्न प्रेक्षसे मार्जारगृहीत उन्दुरुरिव निराशोऽस्मि जीविते। उन्दुरुरिव मूषिक इव। उन्दुरुर्मूषिकोऽप्याखुरित्यमरः।

(२) वयस्येति। मित्रस्य माधव्यस्य सम्पर्कात्सम्बन्धाद्विश्वासो मित्राङ्गे निपातशङ्कया शरन्नमोक्ष्यतीति विश्वासो माभूत्। नमाङ्-योगे इत्यडागमनिषेधः।

(३) य इति। यः बध्यं बधार्हं त्वां हनिष्यति। ऋद्धनोः स्य इतीडागमः। रक्ष्यं रक्षणार्हं द्विजं माधव्यं रक्षिष्यति पालयिष्यति तमिषुं वाणं सन्दध संयोजयामीति पूर्व्वेणान्वयः। हि तथाहि हंसः क्षीरं दुग्धम् आदत्ते गृह्णाति तन्मिश्रा दुग्धमिश्रा अपोजलानि वर्जयति।

(४) कृता इति। हरिणेन्द्रेण असुरा दैत्याः तव शरव्यं लक्ष्यं कृताः तेष्वसुरेषु इदं धनुर्विकृष्यतामाकृष्यतान्नमयि यस्मात्कारणात्

राजा । ससम्भ्रममस्त्रमुपसंहरन् । अये ! मातलिः, स्वागतं देवराजसारथेः ?

विदू । भो मणस्सिं ! इमिणा अहं पसुमारणं मारिदुं पाविदो, भवं उण इमं साअदेण अहिणन्ददि[१] ।

मात । सस्मितम् । आयुष्मन् ! श्रूयताम्, यदर्थमस्मि हरिणा भवत्सकाशं प्रेषितः ।

राजा । अवहितोऽस्मि ।

मात । अस्ति कालनेमिप्रसूतिदुर्ज्जयो नाम दानवगणः ।

राजा । अस्ति, श्रुतपूर्व्वो मया नारदात् ।

मात ।

सख्युस्ते स किल शतक्रतोरबध्य,
स्तस्य त्वं रणशिरसि स्मृतो निहन्ता ।
उच्छेत्तुं प्रभवति यन्न सप्तसप्ति,-
स्तन्नैशं तिमिरमपाकरोति चन्द्रः २ ॥

मनोहराणि चक्षूंषि नेत्राणि पतन्ति दारुणाः कठोराः शरा वाणा न पतन्ति ।

( १ ) भो मनस्विन्ननेनाहं पशुमारणं मारयितुं प्राप्तः भवान् पुनरिमं स्वागतेनाऽभिनन्दति ।

( २ ) सख्युरिति । ते तव सख्युर्मित्रस्य शतक्रतोः शतं क्रतवो यज्ञा यस्य तस्येन्द्रस्य सदुर्जयो दानवः अबध्यो बधानर्हः किलेति निश्चये । रणस्य सङ्ग्रामस्य शिरसि मूर्द्धनि तस्य त्वन्निहन्ता घातयिता स्मृतः । शतक्रतुनेति शेषः । इन्द्रेणाप्यशक्तस्य कार्य्यस्य करणे मम कथं शक्तिस्यादित्याह । नैशं रात्रिसम्बन्धियत्तिमिरमन्धकारं सप्त सप्तयो हया यस्य सः । सूर्य इत्यर्थः । हय-सैन्धव-सप्तय इत्यमरः । उच्छेत्तुं नाशयितुं न प्रभवति नसमर्थः । तदन्धकारं चन्द्र अपाकरोति नाशयति ।

स भवानात्तशस्त्र एवेदानीं देवरथमारुह्य विजयाय प्रतिष्ठताम्[१]।

राजा। अनुगृहीतोऽस्मि अनया मघवतः सम्भावनया। अथ माधव्यं प्रति भवता किमेवं प्रयुक्तम्?

मात। सस्मितम्। तदपि कथ्यते, किञ्चिन्निमित्तादपि मनःसन्तापादायुष्मान् मया विक्लवो दृष्टः, पश्चात् कोपयितुमायुष्मन्तं यथा कृतवानस्मि। कुतः

ज्वलति चलितेन्धनोऽग्नि, विप्रकृतः पन्नगः फणां कुरुते।
तेजस्वी संक्षोभात्प्रायः प्रतिपद्यते तेजः[२]॥

राजा। युक्तमनुष्ठितं भवद्भिः। विदूषकं प्रति। वयस्य! अनतिक्रमणीया दिवस्पतेराज्ञा, तद्गच्छ, परिगतार्थं कृत्वा मद्वचनादमात्यपिशुनं ब्रूहि।

त्वन्मतिः केवला तावत् प्रतिपालयतु प्रजाः।
अधिज्यमिदमन्यस्मिन् कर्म्मणि व्यापृतं धनुः[३]॥

विदू। जं भवं आणवेदि[४]। इति निष्क्रान्तः।

---

(१) स इति। आत्तशस्त्रः सन् गृहीतशस्त्रः सन्। विजयाय जयार्थं तादर्थ्ये चतुर्थी। प्रतिष्ठतां समवप्रविभ्यः स्थ इत्यात्मनेपदम्।

(२) ज्वलतीति। यथा चलितानि इन्धनानि यस्य स एतादृशोऽग्निर्ज्वलति विकाशते। विप्रकृतस्तिरस्कृतः पन्नगः सर्पः फणाङ्कुरुते तथा संक्षोभादुत्कोर्त्तनात्तेजस्वी प्रभाववान् पुरुषः प्रायो बहुधा तेजः प्रतिपद्यते प्राप्नोति। उत्तेजनार्थमेव मया तथा कृतन्नपरिभवार्थमिति भावः।

(३) त्वन्मतीति। तावन्मदागमनपर्यन्तं केवला सहायान्तररहिता त्वन्मतिस्तव बुद्धिः प्रजाः स्वदेशवासिजनान् प्रतिपालयतु। इदम् अधिज्यं ज्यामधिगतं धनु अन्यस्मिन् कर्म्मणि इन्द्रसहायकर्म्मणि व्यापृतमासक्तम्।

(४) यद्भवानाज्ञापयति।

मात । आयुष्मान् रथमारोहतु ।

राजा । तथा करोति ।

इति निष्क्रान्ताः सर्व्वे ।

षष्ठोऽङ्कः ।

---

इति श्रीपन्तोपनामकश्रीडमरुवल्लभशर्म्मकृतायां

शकुन्तलाव्याख्यायां षष्ठोऽङ्कः ।



# अभिज्ञानशाकुन्तलम् ।



अथ सप्तमोऽङ्कः ।

ततः प्रविशत्याकाशयानेन रथारूढो राजा मातलिश्च ।

राजा । मातले! अनुष्ठितनिदेशोऽपि मघवतः सत्क्रियाविशेषादनुपयुक्तमिवात्मानं समर्थये[१] ।

मातलिः । सस्मितम् । आयुष्मन्नुभयथाप्यसन्तोषमवगच्छ[२] । कुतः

उपकृत्य हरेस्तथा भवान्
लघु सत्कारमवेक्ष्य मन्यते ।
गणयत्यवदानसम्मितां
भवतः सोऽपि न सत्क्रियामिमाम्[३]॥

---

(१) मातल इति । हे मातले इन्द्रसारथिन् अनुष्ठित. सम्यक्कृतो निदेशः शासनं येन स एतादृशोऽप्यहम् । निदेशः स्यादुपकण्ठे शासने परिभाषणे इति हेमचन्द्रः । मघवतः इन्द्रस्य सत्क्रियाविशेषात्सत्कारातिशयात् । आत्मानं स्वम् अनुपयुक्तं प्रतीकारतोऽधिकं समर्थये निश्चितोऽस्मि ।

(२) आयुष्मन्निति । उभयथापि भवद्विषये मघवद्विषये च असन्तोषं परितोषाभावम् अवगच्छ जानीहि । यथा सत्काराधिक्यं मत्वा भवान् न सन्तुष्यति तथेन्द्रोऽपि तस्य न्यूनत्वं ज्ञात्वा न सन्तुष्यतीति भावः ।

(३) उपकृत्येति । हरेरिन्द्रस्य तथा इन्द्राटवध्यभूतस्यदानवस्य हननरूपम् उपकृत्य उपकारं कृत्वा । भवान् सत्कारमिन्द्रकृतसत्क्रियामवेक्ष्य दृष्ट्वा लघु स्वल्पम् । मन्यते । सन्मानाधिक्यं दृष्ट्वा महदुपकृतमपि स्वल्पज्ञानातीत्यर्थः । सोऽपि मघवाऽपि । इमां विसर्जनावसरे कृतां भवत सत्क्रियां सत्कार अवदानसम्मिता कार्य्याऽनुरूपाम् । अवदानं कर्म्म वृत्तमित्यमरः । न गणयति न मन्यते । गणसङ्ख्याने चुरादित्वाण्णिच् ।

राजा। मातले ! मामैवं। न खलु मनोरथानामपि
दूरवर्त्ती सो विसर्जनावसरे सत्कारः। मम हि
दिवौकसां समक्षमर्द्धासनोपवेशितस्य[1]।

अन्तर्गतप्रार्थनमन्तिकस्थं जयन्तमुद्वीक्ष्य कृतस्मितेन।
आमृष्टवक्षोहरिचन्दनाङ्का मन्दारमाला हरिणा पिनद्धा[2]॥

मात। किमिव नायुष्मानमरेश्वरादर्हति। पश्य

सुखपरस्य हरेरुभयैः कृतं
त्रिदिवमुद्धृतदानवकण्टकम्।
तव शरैरधुना नतपर्व्वभिः
पुरुषकेशरिणश्च पुरा नखैः[3]।

---

(१) मामैवमिति। एवं मावद कस्मात् विसर्जनाऽवसरे विसर्जनस्याऽवसरे काले य सत्कारः तेन कृत स मनोरथानामप्यविषय मनसोऽप्यऽविषयीभूत इत्यर्थः। हि यत दिवौकसां दिव लोको येषान्तेषान्देवाना समक्षं प्रत्यक्षमर्द्धासने उपवेशितस्य स्थितस्य ममेति अन्तर्गतेति श्लोकेनान्वयः।

(२) अन्तर्गतेति। अन्तर्गता प्रार्थना यस्य स तम्। मन्दारमालाग्रहीत हृदये कृताऽभिलाषमित्यर्थः। जयन्तं स्वपुत्रम् अन्तिकस्थं निकटस्थम् उद्वीक्ष्य दृष्ट्वा कृतस्मितेन कृतेषद्धास्येन हरिणेन्द्रेण आमृष्टस्य स्पृष्टस्य वक्षोहरिचन्दन उरोलिप्तचन्दनविशेषस्याऽङ्कश्चिह्नं यस्यां सैताऽदृशी मम मन्दारमाला पिनद्धाऽऽच्छादिता। अपिपूर्व्वान्नहेः क्त प्रत्यये वष्टिभागुरीत्यनेनाल्लोपः।

(३) सुखपरस्येति। अधुनेदानीम् अधुनेतीदमोऽधुनाप्रत्यये इदम इशिति इदम इशादेशे तस्य यस्येति चेति लोपः। नतानि नम्राणि पर्वाणि यन्थयो येषान्तेभिः तव शरैर्वाणैः। पुरा पूर्व्वस्मिन्काले पुरुषकेशरिणो नरसिंहस्य नतपर्व्वभिर्नतानि कुञ्चितानि पर्वाणि येभ्यस्तैस्तथैस्तैरुभयैः सुखपरस्य सुखमात्रपरायणस्य हरेः उद्धृतम् उन्मूलितं दानवरूपं कण्टकं क्षुद्रशत्रुर्यस्मात्तथाभूतं त्रिदिवं स्वर्गं कृतम्। अतः किमिव कथमिवामरेश्वरादिन्द्रादायुष्मान्-

हता न लक्षितोऽयं प्रदेशो कथय तत्कतमस्मिन् पथि वर्त्तामहे मरुताम् ?[1] ।

मात । त्रिस्रोतसं वहति यो गगनप्रतिष्ठां,
ज्योतींषि वर्त्तयति च प्रविभक्तरश्मिः ।
तस्य व्यपेतरजसः प्रवहस्य वायो-
र्मार्गो द्वितीयहरिविक्रमपूत एषः[2] ॥

राजा । अतः खलु मे सबाह्यान्तःकरणोऽन्तरात्मा प्रसीदति । रथाङ्गमवलोक्य । मन्ये मेघपदवीमवतीर्णौ स्वः[3] ।

मात । आयुष्मन् कथमवगम्यते ? ।

---

प्रदेशो न लक्षितो न दृष्टः तत्तस्मात् मरुतामावहादीनां सप्तवायूनां कतमस्मिन् पथि कस्मिन् मार्गे वर्त्तामहे ।

(२) त्रिस्रोतसमिति । यः प्रवहनामको वायुर्गगनप्रतिष्ठाम् आकाशस्थिताम् । प्रतिष्ठा गौरवे स्थिताविति मेदिनीहेमचन्द्रौ । त्रिस्रोतसं वियद्गङ्गां वहति धारयति । तथा चक्रस्य भचक्रस्यानेकग्रहादिगणस्य विभक्ता भिन्नत्वेन गृहीता रश्मयः किरणा यस्मिन् सः । चक्रं प्रहरणे गणे इति हेमः । एतादृशः सन् ज्योतींषि तारकादीनि वर्त्तयति धारयति । ज्योतिः प्रकाशे दृष्टितारकास्विति विश्वप्रकाशः । व्यपेतानि असम्बद्धानि रजांसि धूलयो यस्मात् तस्य प्रसिद्धस्य प्रवहस्य प्रवहनामकस्य वायोः द्वितीयेन हरेर्वामनस्य विक्रमेण पादविक्षेपरूपपराक्रमेण पूतः पवित्र एष मार्गः । आकाशमार्ग इत्यर्थः । उक्तञ्च वामनपुराणे ततः स्वनाकं त्रिदशाधिपस्य सोमार्कनक्षत्रैरभिक्रान्तनभः । देवो द्वितीयेन जगामेति ।

(३) मेघपदवीमिति । मेघानां गमनमार्गम् । [illegible]नमावहनामकं भूवायुमित्यर्थः । तथोक्तं सिद्धान्तशिरोमणौ । भूमेर्बहिर्द्वादशयोजनानि भूवायुरत्राम्बुदविद्युदाद्याः तदूर्ध्वगः प्रवह इति ।

राजा। अयमरविवरेभ्यश्चातकैर्निष्पतद्भि-
 र्हरिभिरचिरभासां तेजसा चानुलिप्तैः।
गतमुपरि घनानां वारिगर्भोदराणां
 पिशुनयति रथस्ते शीकरक्लिन्ननेमिः॥१॥

मात। अथ किं, क्षणादायुष्मन् स्वाधिकारभूमौ वर्त्तिष्यते।

राजा। अधोऽवलोक्य। मातले! वेगादवतरणादाश्चर्यदर्शनः संलक्ष्यते मनुष्यलोकः। तथाहि

शैलानामवरोहतीव शिखरादुन्मज्जतां मेदिनी,
पर्णाभ्यन्तरलीनतां विजहति स्कन्धोदयात् पादपाः।
सन्तानं तनुभावनष्टसलिलव्यक्त्या व्रजन्त्यापगाः,
केनाप्युत्क्षिपतेव पश्य भुवनं मत्पार्श्वमानीयते॥२॥

---

(१) अयमिति। शीकरैर्जलकणैः क्लिन्नार्द्रा नेमी रथाङ्गं यस्य स एतादृशः तथा। अरविवरेभ्यो चक्ररन्ध्रेभ्यः कोटरेभ्य इति यावत्। निष्पतद्भिः रथस्योपरिचक्रताडितमेघनिःसृतजलबिन्दुपानाय पतद्भिश्चातकैर्युक्तस्तथा अचिरभासां विद्युतां तेजसा दीप्त्या च अनुलिप्तैः अश्वैः हरिभिरश्वैरुपलक्षितः ते तव रथः वारीणि गर्भे यस्य तद्वारिगर्भं तद्युक्तमुदरं येषान्तेषां घनानां मेघानाम् उपरि ऊर्द्ध्वभागे गतं गमनं पिशुनयति सूचयति। पिशुनः सूचके खल इति हेमचन्द्रः।

(२) शैलानामिति। उन्मज्जताम् ऊर्द्ध्वं नमतां शैलानां पर्वतानां शिखराच्छृङ्गान्मेदिनी पृथिवी अवरोहतीवाऽधोनमतीव। स्कन्धानां मूलाच्छाखावधिभागानाम् उदयात् द्रुमा वृक्षाः पर्णानां पत्राणामभ्यन्तरेषु मध्येषु लीनतां विजहति त्यजन्ति तथा तनुभावे अविस्तृतत्वहेतौ नष्टं दूरत्वाददर्शितपूर्वं यत्सलिलं जलं तस्य व्यक्त्या प्रकाशेन आपगा नद्यः सन्तानं सर्वांशव्यक्तं व्रजन्ति चक्षुर्विषयी भवन्ति। तथोत्क्षिपतेवावता केनाऽपि भुवनं मनुष्यलोको मत्पार्श्वं निकटमानीयत इव पश्य दृष्टिप्रेक्षके बोद्।

मात। आयुष्मन्! साधु दृष्टम्। सबहुमानमालोक्य। अहो! उदाररमणीया पृथिवी[1]।

राजा। मातले! कतमोऽयं पूर्व्वापरसमुद्रावगाढ़ः कनकरसनिष्यन्दी सान्ध्य इव मेघः सानुमानालोक्यते[2]?

मात। आयुष्मन्! एष खलु हेमकूटो नाम किंपुरुषपर्व्वतः परं तपस्विनां क्षेत्रम्[3]।

स्वायम्भुवान्मरीचेर्यः प्रबभूव प्रजापतिः।
सुरासुरगुरुः सोऽस्मिन् सपत्नीकस्तपस्यति[4]॥

राजा। सादरम्। तेन ह्यनतिक्रमणीयानि श्रेयांसि, प्रदक्षिणीकृत्य भगवन्तं गन्तुमिच्छामि।

मात। आयुष्मन्! प्रथमः कल्पः। अवतरणं नाटयम्। एताववतीर्णौ स्वः।

राजा। सविस्मयम्। मातले!

१ अहो इति। उदाररमणीयाऽतिशयमनोहरा।

(२) मातले इति। पूर्व्वश्चापरश्च पूर्व्वापरौ तौ च तौ समुद्रौ तयोरवगाढ़ः प्रविष्टः। दीर्घ इति यावत्। कनकरसं सुवर्णद्रवं निष्यन्दति तच्छीलः। गुणे रागे द्रवे रस इत्यमरः। सान्ध्य सन्ध्याकालिको मेघ इव रक्तवर्णविशिष्टमेघवत् अयं सानुमान् पर्व्वतः कतम आलक्ष्यते सन्दृश्यते।

(३) एष इति। किंपुरुषपर्व्वतः किंपुरुषवर्षस्य पर्व्वतः तपस्विनां तपोऽस्यास्तीति तपस्वी। अस्मायामेधेति विनिः। तेषां ऋषीणामित्यर्थः। परं वहुमतम्।

(४) स्वायम्भुवादिति। स्वायम्भुवाद्ब्रह्मणः पुत्रात् मरीचेः प्रजापतिः कश्यपनामा सुरासुरगुरुर्देवदानवानां गुरुः पिता प्रबभूव यः। स कश्यप सपत्नीकः पत्नीसहितः सन् अस्मिन् हेमकूटपर्व्वते तपस्यति तपः करोति।

उपोढशब्दा न रथाङ्गनेमयः,
प्रवर्त्तमानं न च दृश्यते रजः ।
अभूतलस्पर्शतया निरुद्धति-
स्तवावतीर्णोऽपि न लक्ष्यते रथः[1] ॥

मात । एतावानेव शतमन्योरायुष्मतश्च रथस्य विशेषः ।

राजा । मातले ! कतमस्मिन् प्रदेशे मारीचाश्रमः ?

मात । हस्तेन दर्शयन् । पश्य

वल्मीकार्द्धनिमग्नमूर्त्तिरुरगत्वग्ब्रह्मसूत्रान्तरः
कण्ठे जीर्णलताप्रतानवलयेनात्यर्थसंपीड़ितः ।
अंसव्यापि शकुन्तनीड़निचितं बिभ्रज्जटामण्डलं
यत्र स्थाणुरिवाचलो मुनिरसावभ्यर्कबिम्बं स्थितः २ ॥

राजा । विलोक्य । नमोऽस्मै कष्टतपसे ।

(१) उपोढेति । हे मातले न भूतले स्पर्शः सम्बन्धो यस्य तादृशतया रथाङ्गानां चक्राणां नेमयः प्रान्तभागाः उपोढशब्दा सञ्जातशब्दा न तथा प्रवर्त्तमानं स्पन्दनोद्भूतं रजश्च धुलिश्च न दृश्यते न लक्ष्यते । निरुद्धतिरवतरणादप्यनुद्घातोऽवतीर्णोऽपि तव रथो न लक्ष्यत असञ्जातशब्दतयाऽनुद्घाततया चावतीर्ण इति नानुभूयते ।

(२) वल्मीकेति । वल्मीकेऽर्द्धनिमग्ना मूर्त्तिस्तनुर्यस्य सः । तथा उरगस्य सर्पस्य त्वङ्निर्मोको ब्रह्मसूत्रान्तरं ब्रह्मयज्ञोपवीतसदृशं यस्य । अन्तरपर्य्याये छिद्रात्मीयविनाबहिरवसरमध्यात्ममदृशेष्विति मेदिनी । जीर्णस्य लताप्रतानस्य लताविस्तारस्य वलयेन कटकेन वेष्टनेनेति यावत् । कण्ठे अत्यर्थम् अतिशयं पीड़ितः । तथा शकुन्तानां पक्षिणां नीड़ैरालयैर्निचितं व्याप्तम् । अंसौ स्कन्धौ व्याप्नोतीति अंसव्यापि । जटानां मण्डलं समुदायं बिभ्रद्धारयन् स्थाणुरिव कील इव । स्थाणुः कीले हरे पुमानिति हेमः । अचलः क्रियारहितोऽसौ मुनिर्मननशीलः । यत्र अस्मिन्देशे अभ्यर्कबिम्बं सूर्य्यमण्डलं सम्मुखीकृत्य स्थितस्तत्र प्रजापतेराश्रम इति शेषः ।

मात। संयतप्रग्रहं रथं कृत्वा। एतावदितिपरिवर्द्धितमन्दारवृक्षं प्रजापतेराश्रमं प्रविष्टौ स्वः[1]।

राजा। अहो! स्वर्गादधिकतरं निर्वृतिस्थानम्, अमृतह्रदमिवावगाढोऽस्मि।

मात। रथं स्थापयित्वा। अवतरत्वायुष्मान्।

राजा। अवतीर्य। भवान् किमिदानीम्[2]?

मात। समययन्त्रितएवायमास्ते रथः तद्वयमप्यवतरामः। तथा कृत्वा। इत इत आयुष्मन्, दृश्यन्तामत्रभवतामृषीणां तपोवनभूमयः[3]।

राजा। ननु विस्मयादुभयमप्यवलोकयामि[4]।

प्राणानामनिलेन वृत्तिरुचिता सत्कल्पवृक्षे वने,
तोये काञ्चनपद्मरेणुकपिशे पुण्याभिषेकक्रिया।
ध्यानं रत्नशिलातलेषु, विबुधस्त्रीसन्निधौ संयमो
यद्वाञ्छन्ति तपोभिरन्यमुनयस्तस्मिंस्तपस्यन्त्यमी[5]॥

---

(१) एतावदिति। अदित्या प्रजापतिपत्न्या परिवर्द्धितो मन्दारवृक्षो यस्मिन् स एतादृशं प्रजापतेर्मारीचस्य।

(२) तस्याश्रमस्याज्ञातमार्गतया मातलिं प्रत्याह। भवानिति। भवानवतरिष्यतीति शेषः।

(३) समयेति। अयं रथः समयेन यावन्मम निवर्त्तनं तावत्त्वमेवमेव तिष्ठेति निर्देशेन यन्त्रितो बद्धः आस्ते तिष्ठति। समयः शपथाचारसिद्धान्तेषु तथा क्रियाकारे च निर्देश इति मेदिनी।

(४) विस्मयादिति। उभयमपि तपस्तपः फलञ्चेति द्वयमप्यवलोकयामि पश्यामि।

(५) प्राणानामिति। सन्तः कल्पवृक्षा देववृक्षविशेषा विद्यमाना यस्मिन् तादृशे वने विपिने अनिलेन वायुना प्राणानां वृत्तिः स्थितिरुचिताऽभ्यस्ता। काञ्चनपद्मानां स्वर्णकमलानां रेणुभिः धूलिभिः कपिशे पिङ्गलवर्णे तोये जले पुण्याऽभिषेकक्रिया पुण्यार्थं स्नानक्रिया। रत्नशिलातलेषु मणिमयप्रस्तरपृष्ठेषु ध्यानम् आत्मचिन्तनं विबुधस्त्रीणामप्

मात। उत्सर्पिणी खलु महतां प्रार्थना[1]। परिक्रम्य आकाशे। हे वृद्धशाकल्य[2]! किं व्यापारः सम्प्रति भगवान् मारीचः? आकर्ण्य। किं ब्रवीषि? दाक्षायण्या पतिव्रतापुण्यमधिकृत्य पृष्टस्तस्यै महर्षिपत्नीगणसहितायै कथयतीति, तत्प्रतिपाल्यावसरः खलु प्रस्तावः[3]। राजानमवलोक्य। अस्यामशोकच्छायायां तावदास्तामायुष्मान्, यावत्त्वामहमिन्द्रगुरवे निवेदयामि।

राजा। यथा भवान् मन्यते। इति स्थितः।

मातलिर्निष्क्रान्तः।

राजा। निमित्तं सूचयित्वा।

मनोरथाय नाशंसे किं बाहो! स्पन्दसे मुधा।
पूर्व्वावधीरितं श्रेयो दुःखं हि परिवर्त्तते[4]॥

एषां सन्निधौ निकटे संयम इन्द्रियनिरोधः। अन्यमुनयस्तपोभिर्य्यद्वाञ्छन्ति कामयन्ते तस्मिन् प्रदेशे अमीमुनय तपस्यन्ति तपःकुर्व्वन्ति स्वर्गसुखेष्वपि एतेषामनादर इति भावः।

(१) उत्सर्पिणीति। उत्तरोत्तरमधिकाऽधिकगामिनी।

(२) वृद्धशाकल्येति। हे वृद्धशाकल्य वृद्धसमुदाय सम्प्रतीदानीं भगवान् सर्व्वैश्वर्य्यसम्पन्नः मारीचो मरीचेरपत्यः काश्यपः किं व्यापारः किङ्कर्म्मा।

(३) दाक्षायण्येति। दक्षस्याऽपत्यं स्त्री दाक्षायणी तयाऽदित्या गर्गादित्वाद्यञि यदन्तात्स्त्रियां ष्फेति ष्फप्रत्यये तस्य षित्वसामर्थ्यात् ङीष्। पतिव्रताया पुण्यं धर्म्ममधिकृत्योद्दिश्य पृष्टो जिज्ञासितः तद्धर्म्ममस्यै वदितुं। प्रतिपाल्योऽवसरो यस्य सः। प्रतीक्षणीयाऽवकाश इत्यर्थः।

(४) मनोरथायेति। मनोरथाय शकुन्तलासमागमरूपाऽभिलषितवस्तुने नाशंसे न प्रार्थये हे बाहो भुजस्त्वं मुधा स्पन्दसे स्फुरसि। दक्षिणभुजस्फुरणस्येष्टसमागमसूचकतया तत्समागमेऽपि दुःखस्यैव

नेपथ्ये । मा क्खु चवलं करेहि, कहिं गदिं ज्जेव अत्तणो पइदिं दंसेसि[1] ? ।

राजा । कर्णं दत्त्वा । अभूमिरियमविनयस्य, तत् को नु खल्वेवं निषिध्यते ? । शब्दानुसारेणावलोक्य सविस्मयम् ॥ अये ! को नु खल्वयमवरुध्यमानस्तापसीभ्यामबालसत्त्वो बालः[2] ।

अर्द्धपीतस्तनं मातुरामर्द्दक्लिष्टकेशरम् ।
प्रक्रीड़ितुं सिंहशिशुं करेणैवावकर्षति[3] ॥

ततः प्रविशति यथानिर्द्दिष्टकर्म्मा तापसीभ्यां सह बालः[4] ।

परित्यागात् तदर्थं क्लेशदानाच्च तव सहनमिति भावः । हि यस्मात्पूर्वं प्रागवधीरितं तिरस्कृतं श्रेयः शकुन्तलालाभरूपं वस्तु दुःखं प्रवर्त्तते दुःखरूपेण हृदये वर्त्तते । बाहुस्फुरणेन शकुन्तलारूपस्य वस्तुनोऽपायाभावान्निश्चितफलप्राप्तिर्नियताप्तिः । उक्तञ्च अपायाभावतः प्राप्तिर्नियताप्तिस्तु निश्चितेति ।

(१) मा खलु चपलतां कुरु यत्र तत्रैवात्मनः प्रकृतिं दर्शयसि । अवसर एव दर्शनीय इत्यर्थः ।

(२) अये इति । तापसीभ्यामवरुध्यमानोऽवष्टभ्यमानः । अबालस्य यूनः सत्त्वं बलमिव सत्त्वं यस्य सोऽयं समीपस्थबालः क इत्यन्वयः । नु वितर्के ।

(३) अर्द्धेति । मातुरर्द्धमसम्पूर्णं पीतस्तनो येन स तम् । आमर्द्देन क्लिष्टा केशरा जटा यस्य स तम् । एतादृशं सिंहशिशुं मृगेन्द्रार्भकम् । पोतः पाकोऽर्भको डिम्भः पृथुकः शावकः शिशुरित्यमरः । प्रक्रीडितुं क्रीडाकर्त्तुं करेणैव हस्तेनैव कर्षति समीपमानयति ।

(४) ततः प्रविशतीत्यादिसप्तमाङ्कपर्य्यन्तो निर्वहणसन्धिः । शकुन्तलासमागमादि मुखसन्ध्यादिबीजानां सबलानामुपक्षिप्तानामेकार्थे शकुन्तलाप्राप्तिरूपत्वेन योजनात् । फलागमकार्य्यसम्बन्धात् । उक्तञ्च । बीजवन्तो मुखाद्यर्था विप्रकीर्णा यथायथम् । ऐकार्थ्यमुपनीयन्ते यत्र निर्वहणं हि तदिति । अत्र च [illegible]-

बालः । जिम्भ रे सिंहशावका ! जिम्भ, दन्ताइं दे गणइस्सं[1] ।

प्रथमा । अविणीद ! किं णो अवच्चणिव्विसेसाइं सत्ताइं विप्पअरेसि ? हन्त वड्ढइ विअ दे संरम्भो, ट्ठाणे क्खु इसिजणेण सव्वदमणोत्ति किदणामहेओसि[2] ।

राजा । किं नु खलु बालेऽस्मिन्नौरस इव पुत्रे स्निह्यति मे हृदयम् । विचिन्त्य । नूनमनपत्यता मां वत्सलयति[3] ।

द्वितीया । एसा तुमं केसरिणी लङ्घेइस्सदि जइ से पुत्तअं ण मुञ्चेसि[4] ॥

बालः । सस्मितम् ॥ अम्महे ! बलिअं क्खु भीदह्मि[5] ।

इत्यधरं दर्शयति ।

राजा । सविस्मयम् ।

---

र्यंयपरिभावणाऽऽनन्दसमयोपगूहनभाषणापूर्व्ववाक्यकाव्यसंहारप्रशस्तीन्यङ्गानि भवन्ति । अत्र प्रकृतत्वादूपं वस्तु कार्य्यम् । समापयन्तु यत्सिद्धेऽत्र तत्कार्य्यमिति सम्मतमित्युक्तेः ।

(१) जृम्भस्व रे सिंहशावक जृम्भस्व दन्तान्ते गणयिष्यामि ।

(२) अविनीत किन्नोपत्यनिर्विशेषाणि सत्वानि विप्रकरोषि हन्त वर्द्धत इव ते संरम्भः । स्थाने खलु ऋषिजनेन सर्वदमन इति कृतनामधेयोऽसि । हे अविनीत अशिक्षित अपत्येभ्यः स्वसन्ततिभ्यो निर्विशेषो विशेषाभावो येषान्तानि । अपत्यतुल्यानीत्यर्थः । सत्वानि जन्तून् विप्रकरोषि तिरस्करोषि । ते तव संरम्भो दर्प्पो वर्द्धत इव हन्तेति खेदे । स्थाने युक्तं सर्वान्दमयत इति सर्वदमनः ।

(३) किन्न्विति । अस्मिन्काले औरसे संस्कृते स्वक्षेत्रे स्वयमुत्पादितपुत्र इव मेऽस्य हृदयं चित्तं स्निह्यति प्रीतयति । स्निह प्रीतौ दिवादित्वाच्छ्यन् ।

(४) एषा त्वां केसरिणी लङ्घयिष्यति यद्यस्याः पुत्रकन्न मोचयसि । लङ्घयिष्यति तिरस्करिष्यति । अस्याः केशरिण्याः पुत्रकमल्पं पुत्रं सिंहशिशुम् । अल्पे इति कन् ।

(५) अहो बलीयः खलु भीतोऽस्मि ।

द्वितीया। सुव्वदे! मुञ्च णं; ण एसो सक्को वाआमेत्तेण समइदुं, ता गच्छ मम केरए उडए सङ्कोचणस्स इसिकुमारस्स वण्णचित्तिदो मट्टिआमोरओ चिट्ठदि, तं से उवहर[1]।

प्रथमा। तह[2]। इति निष्क्रान्ता।

बालः। दाव इमिणा ज्जेव कीलिस्सं[3]।

तापसी। विलोक्य हसन्ती। णं मुञ्च णं[4]।

राजा। स्पृहयामि खलु दुर्ललितायास्मै[5]। निघ्नस्य

आलक्ष्यदन्तमुकुलाननिमित्तहासै-
रव्यक्तवर्णरमणीयवचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान् वहन्तो
धन्यास्तदङ्गरजसा मलिनीभवन्ति[6]॥

---

(१) सुव्रते मुञ्चैनं, नैष शक्यो वाङ्मात्रेण शमयितुं, तद्गच्छ मदीये उटजे सङ्कोचनस्य ऋषिकुमारस्य वर्णचित्रितो मृत्तिकामयूरस्तिष्ठति तमस्योपहर।

(२) तथा।

(३) तावदनेनैव क्रीडिष्यामि।

(४) ननु मुञ्चैनम्।

(५) दुर्ललितायेति। दुर्ललिताय चपलायास्मै बालकाय। बालकानां चाञ्चल्यं हि प्रीतिं जनयति। स्पृहेरीप्सित इति सम्प्रदानत्वाच्चतुर्थी।

(६) आलक्ष्येति। अनिमित्तहासैरकारणहास्यैः आलक्ष्याणि ईषद्दृश्यानि दन्तानां मुकुलानि येषान्ते तान्। तथाऽव्यक्तैरस्पष्टैर्वर्णैरक्षरैः रमणीया मनोहरा वचसां प्रवृत्तयो येषान्ते तान्। अङ्काश्रयस्य प्रणयिनोऽर्थिनः तनयान् पुत्रान् वहन्तो धारयन्तो धन्याः पुण्यवन्तः तदङ्गानां बालकाङ्गानां रजसा मलिनीभवन्ति अमलिना अपि मलिनीभवन्तीत्यर्थः। अभूततद्भावे च्विः।

तापसी। (कौतुकितमवलोक्य) भो! ण मं गणेसि? (पार्श्वमवलोक्य) को एत्थ इसिकुमाराणं? (राजानं दृष्ट्वा) भद्दमुह! एहि दाव मोआवेहि इमिणा दुम्मोअहत्थग्गहेण डिम्भएण बाहीअमाणं बालमइन्दअं[1]।

राजा। (तथेत्युपगम्य सस्मितम्) अयि भो महर्षिपुत्रक!

एवमाश्रमविरुद्धवृत्तिना
संयमी किमिति जन्मदस्त्वया।
सत्त्वसंश्रयगुणोऽपि दूष्यते
कृष्णसर्पशिशुनेव चन्दनः[2]॥

तापसी। भद्दमुह! ण क्खु एसो इसिकुमारओ[3]।

---

(१) भो न मां गणयसि। कोऽत्र ऋषिकुमाराणाम्। भद्रमुख एहि तावन्मोचयाऽनेन दुर्मोचहस्तग्रहेण डिम्भकेन बाध्यमानं बालमृगेन्द्रकम्। दुर्मोचो दुःखेन मोचनीयो हस्तेन करेण ग्रहो ग्रहणं यस्य स तेन। डिम्भकेन कुत्सितबालकेन कुत्सित इति कन्। बाध्यमानम्पीडामानम्।

(२) एवमिति। आश्रमे विरुद्धाऽनर्हा वृत्तिराचारो यस्य स एतादृशेन त्वया। जन्मदो जन्म उत्पत्तिर्ददाति इति जन्मद उत्पादकः। आतोऽनुपसर्गे क इति कः। संयमी मुनिः। सत्त्वे आत्मनि संश्रय आश्रितो गुण इन्द्रियादि र्यस्य नियमितेन्द्रिय इत्यर्थः। गुणो ऽप्रधाने रूपादौ रज्जौ सत्त्वादौ सन्ध्यादौ शौर्यादौ भीमे इन्द्रिय इति हेमचन्द्रः। एतादृशोऽपि कृष्णसर्पशिशुना चन्दन इवैवं किमिति कस्माद् दूष्यते दोषाश्रयः क्रियते। मुनिशिशुतया सिंहशिशुं गृहीतुं न योग्यो ऽसीति भावः।

(३) भद्रमुख न खल्वेष ऋषिकुमारः।

(१) आकारसदृशमिति। अस्य बालस्याकारसदृशं आकृतितुल्यं चेष्टितमेव कथयति ऋषिपुत्रत्वाभावं प्रकाशयति। स्थानमा-

राजा । आकारसदृशं चेष्टितमेवास्य कथयति स्थानमस्त्यवाप्तु यथामेवं तर्कयः[1] । यथाभ्यर्थितमनुतिष्ठन् बालकस्य स्पर्शमुपलभ्य स्वगतम्

अनेन कस्यापि कुलाङ्कुरेण
स्पृष्टस्य गात्रे सुखिता ममैवम् ।
कां निर्वृतिं चेतसि तस्य कुर्य्याद्
यस्यायमङ्गात्कृतिनः प्रसूतः[2] ॥

तापसी । उभौ विलोक्य । अच्चरीअं अच्चरीअं[3] ।

राजा । आर्य्ये ! किमिव ?

तापसी । इमस्स बालअस्स असम्बद्धे वि भद्दमुहे संवादिणी आकिदि त्ति विम्हिदह्मि, अवि अ वामसीलोवि भविअ अपरिचिदस्सवि दे वअणेण पकिदित्थो संवुत्तो[4] ।

राजा । बालकमुपलालयन् । आर्य्ये ! न चेन्मुनिकुमारोऽयं तत्कोऽस्य व्यपदेशः?[5] ।

तापसी । पोरवोत्ति[6] ।

---

मानुषा भूम्याः प्रत्ययात् अस्यानराजकुमारः सञ्चरन्तीति विश्वासात् । एवमित्थं तर्किणोऽनुमातारः ।

(२) अनेनेति । कस्यापि महन्नस्यापि कुलाङ्कुरेण वंशस्याभिनवोद्गमेन अनेन शिशुना गात्रे स्पृष्टस्य सम्बद्धस्य ममैवं सुखिता । अस्य कृतिनो धन्यस्याङ्गात् शरीरात् अयं बालः प्रसूत उत्पन्नस्तस्य चेतसि कां निर्वृतिं कुर्य्यात् । वक्तुमशक्यत इति भावः ।

(३) आश्चर्यमाश्चर्य्यम् ।

(४) अस्य बालस्याऽसम्बद्धेऽपि भद्रमुखे संवादिनी आकृतिरिति विस्मिताऽस्मि अपि च वामशीलोऽपि भूत्वाऽपरिचितस्य ते वचनेन प्रकृतिस्थः संवृत्तः । असम्बद्धे सम्बन्धरहिते । वामशील विरुद्धस्वभावः ।

(५) व्यपदेश इति । व्यपदिश्यते प्रख्यायत इति व्यपदेशो वंशः ।

(६) पौरव इति । पुरुवंश्य इत्यर्थः ।

राजा । स्वगतम् । कथमेकान्वयोऽयमस्माकम् । अथवा खलु अदनुकारिणमेनमत्रभवती मन्यते । अस्त्येतत् पौरवाणामन्त्यं कुलव्रतम् ।

भवनेषु सुधासितेषु पूर्वं
क्षितिरक्षार्थमुशन्ति ये निवासम् ।
नियतैकयतिव्रतानि पश्चात्
तरुमूलानि गृहीभवन्ति तेषाम्[1] ॥

प्रकाशम् । कथं पुनरात्मगत्या मानुषाणामेष विषयः[2] ?

तापसी । जधा भद्दमुहो भणादि, किन्तु अच्छरासम्बन्धेण इमस्स बालअस्स जणणी इध्ध देवगुरुणो तवोवणे पसूदा[3] ।

राजा । स्वगतम् । हन्त ! द्वितीयमिदमाशाजननम्[4] ।

---

(१) भवनेष्विति । ये पुरुवंशोत्पन्ना पूर्वमाद्यवयसि सुधासितेषु चूर्णादिलेपनेन धवलेषु । सौधेष्वित्यर्थः । क्षितिरक्षार्थं क्षितेः पृथिव्या रक्षार्थं दुष्टतः पालनार्थं निवासम् उशन्ति इच्छन्ति । तेषां पौरवाणां पश्चादन्ते वयसि नियतम् विहितम् एकं मुख्यं यतीनां व्रतनियमं येषु तानि एतादृशानि तरुमूलानि वृक्षमूलानि गृहीभवन्ति । वानप्रस्था भवन्तीत्यर्थः ।

(२) कथमिति । मनुष्यलोके विमानादेरभावेन कथमस्या आगमनमित्यर्थः । अद्भुतस्याप्रयोपगूहननामकमङ्गमिदम् । तल्लक्षणमुपगूहनम् । यत्स्यादद्भुतसम्प्राप्तिरित्युक्तेः ।

(३) यथा भद्रमुखो भणति किन्तु अप्सरः सम्बन्धेन पुनरस्य बालकस्य जननीहैव देवगुरोस्तपोवने प्रसूता । भद्रमुखो यथा येन प्रकारेण सहकारान्तरमनपेक्ष्यात्मगत्या मनुष्याणामविषय इति वदति तथैवेत्यर्थः । देवगुरोर्हेकपितुः प्रजापतेरित्यर्थः ।

(४) आशाजननमिति । आशाजा त [illegible] । [illegible] । [illegible] वोक्ष्यः ।

महाभाग! अथ का तत्रभवती किंनाम्नस्तु राजर्षेर्धर्मपत्नी!

तापसी । को तस्स धम्मदारपरिच्चाइणो णामं कीत्तइ-
स्सदि[1] ।

राजा । स्वगतम् । कथमियं कथा मामेव लक्ष्यीकरोति? । यावदस्य शिशोर्मातरं नामतः पृच्छेयम् । विचिन्त्य । अथवा अनार्य्यः खलु परदारपृच्छाव्यापारः[2] ।

प्रविश्य मृण्मयूरहस्ता तापसी । सव्वदमण ! पेक्ख सउ-
न्तलावण्णं[3] ।

बालः । सदृष्टिक्षेपम् । कहिं सा मे अम्बा ?[4] ।

उभे । प्रहसतः ।

प्रथमा । णामसारिस्सेण उवञ्चिदो मादिवच्छलो[5] ।

द्वितीया । इमस्स मोरस्स रमणीअदं पेक्खत्ति भणिदोसि[6]।

राजा । स्वगतम् । किं शकुन्तलेत्यस्य मातुराख्या ?

---

(१) कस्तस्य धर्मदारपरित्यागिनो नाम कीर्त्तयिष्यति । निन्दा-वाक्यत्वेनेदं परिभाषणनामकमङ्गम् । परिवादकृतं वाक्यं वदन्ति परिभाषणमित्युक्तेः ।

(२) अनार्य्य इति । परस्त्रीविषयकप्रश्नकरणमशिष्टम् । चरित-त्वेन पापजनकमित्यर्थः ।

(३) सर्वदमन पश्य शकुन्तलावण्यम् । शकुन्तस्य पक्षिणो लाव-ण्यं शोभाविशेषम् । शकुन्तो विहगे भास इति हेमचन्द्रः ।

(४) कुत्र वर्त्तते अम्बा । अम्बा माता शकुन्तलेति यावत् ।

(५) नामसादृश्येनोपवञ्चितो मातृवत्सलः । उपवञ्चितो लोभितः ।

(६) अस्य मयूरस्य रमणीयत्वं पश्येति भणितोऽसि । न चापरं पश्य ते जननी कीर्त्तिता ।

(१) अथवेति । नाममात्र वाक्साम्यानि नामसाम्यानि । मनसि चि-

अथवा सन्ति पुनर्नामधेयसादृश्यानि, अपि नाम मृगतृष्णिकेव नाममात्रप्रस्तावो मे विषादाय कल्पते[1] ? ।

बालः । अन्तिए ! रोअदि मे चडुलके एशे मऊले[2] ।

इति क्रीड़नकमादत्ते ।

प्रथमा । विलोक्य सावेगम् । अम्मो ! रक्खाकाण्डओ से मणिबन्धे ण दीसदि[3] ।

राजा । आर्य्ये ! अलमावेगेन, नन्वयमस्य सिंहशावकस्य विमर्द्दात् परिभ्रष्टः, इत्यादातुमिच्छति ।

उभे । मा क्खु मा क्खु एदं । विलोक्य । कधं गहिदो ज्जेव ![4] । विस्मयादुरोनिहितहस्ते परस्परमवलोकयतः ।

राजा । किमर्थं भवतीभ्यां प्रतिषिद्धोऽस्मि ?

प्रथमा । सुणादु महाभाओ, एसा महाप्पहावा अवराजिदा णाम सुरमहोसही इमस्स दारअस्स जादकम्म-

---

केव मरीचिकेव नाममात्रप्रस्तावो नाममात्रोच्चारणं विषादाय खेदाय कल्पते उद्भवति । क्लृपि सम्पद्यमाने चेति चतुर्थी ।

(२) अन्तिके रोचते मे चटुलक एषः मयूरः । अन्तिके हे ज्येष्ठभगिनि । सम्बुद्धौ चेत्याय एकारः । अन्तिका भगिनी ज्येष्ठेत्यमरः । मे मह्यं रुच्यर्थानां प्रीयमाण इति सम्प्रदानत्वाच्चतुर्थी । एष चटुलकः सुन्दरो मयूरो बर्हीं रोचते प्रीणाति ।

(३) अम्ब रक्षाकाण्डोऽस्य मणिबन्धे न दृश्यते । अस्य सर्वदमनस्य मणिबन्धे पाणिपद्मयो रक्षाकाण्डो रक्षाकरणावशिष्टेषः । काण्डो ना-लेऽधम इति मेदिनी ।

(४) मा खलु मा खल्वेतम् । (स्पृशेति शेषः) । कथं गृहीत एव । नतु प्रतिषेध आहत इत्यर्थः ।

(५) शृणोतु महाभाग, एषा महाप्रभावाऽपराजिता नाम सुरमहौषधी अस्य दारकस्य जातकर्म समये भगवता मारीचेन दत्ता एतां

समए भअवदा मारीएण दिण्णा, एदं किल मादापिदरौ अप्पाणं अ वज्जिअ अवरो भूमिपडिदं ण गेह्णादि[1]।

राजा। अथ गृह्णाति?

प्रथमा। तदो सप्पो भविअ तं दंसइ[2]।

राजा। भवतीभ्यां कदाचिदन्यत्र प्रत्यक्षीकृतमिदम्?[3]

उभे। अणेअसो[4]।

राजा। सहर्षमात्मगतम्। तत् किं खल्विदानीं पूर्णमात्मनो मनोरथं नाभिनन्दामि इति बालकं परिष्वजते[5]।

द्वितीया। सुव्वदे! एहि इमं वुत्तन्तं णिअमव्वावडाए सउन्तलाए णिवेदेम्ह[6]। इति निष्क्रान्ते।

बालः। मुञ्च मं मुञ्च मं, अम्बाए सआसं गमिस्सं[7]।

---

किल मातापितरौ आत्मानञ्च वर्जयित्वा अपरो भूमिपतितान्न गृह्णाति। दारकस्य शिशोः। दारको बालकेऽपि स्यादिति मेदिनी। जातकर्म्मसमये। नालच्छेदात् पूर्व्वं कर्तव्यः शिशुसंस्कारविशेष काले।

(२) ततः सर्पो भूत्वा तं दंशति। तं ग्राहकम्। सर्पो भूत्वा अपराजितेति शेषः।

(३) अत्रेति। अस्मिन्विषये अन्यलोक जनातिरिक्तेषु प्रत्यक्षीकृतं सर्पो भूत्वा दर्शनं दृष्टम्।

(४) अनेकशः। बहुश्चैवेति वीप्सायां शस्। अनेनानुभूतार्थकथनान्निर्णयनामकमङ्गम्। अनुभूतार्थकथनन्निर्णय इत्युक्तेः।

(५) तत्किमिति। इदानीमस्मिन् काले। दानीञ्चेतीदमोदानीं प्रत्ययः। पूर्णं पूरितम् आत्मनः स्वस्य मनोरथं वाञ्छाम् अत्रहर्षाभिव्यक्तेर्हर्षनामकनाटकालङ्कारः। प्रहर्षः प्रमदाधिक्यमित्युक्तेः।

(६) सुव्रते एहि इमं वृत्तान्तं नियमव्यापृतायै शकुन्तलायै निवेदयामः। नियमव्यापृतायै नियमासक्तायै। चतुर्थीविभक्तेः स्थाने षष्ठी विभक्तिर्भवतीत्यर्थेन चतुर्थ्याः षष्ठीति प्राकृतसूत्रेण चतुर्थीस्थाने षष्ठ्यादेशः।

(७) मुञ्च मुञ्च मामम्बायाः सकाशं गमिष्यामि। सकाशं समीपम्।

राजा। पुत्र! मयैव सह मातरमभिगमिष्यसि।

बालः। दुष्यन्तो मम तादो ण क्खु तुमं[1]!

राजा। एष विवाद एव मां प्रत्याययति[2]।

ततः प्रविशत्येकवेणीधरा शकुन्तला।

शकु। सवितर्कम्। विआरकालेऽवि पकिदित्थं सव्वदमणस्स ओसहिं सुणिअ ण मे आसंसो अत्तणो भाअधेएसु, अथवा जधा मिस्सकेसीए मे आचक्खिदं तधा सम्भावीअदि एदं[3]। इति परिक्रामति।

राजा। शकुन्तलां विलोक्य सहर्षखेदम्। अये! सेयमत्रभवती शकुन्तला[4]।

वसने परिधूसरे वसाना,
नियमक्षाममुखी धृतैकवेणिः।
अतिनिष्करुणस्य शुद्धशीला
मम दीर्घं विरहव्रतं बिभर्त्ति[5]॥

(१) दुष्यन्तो मम तातो न त्वम्।

(२) एषेति। विवाद एव दुष्यन्तस्याहं पुत्र इति वाद एव। प्रत्याययति प्रत्ययं कारयति।

(३) विकारकालेऽपि प्रकृतिस्थां सर्वदमनस्यौषधिं श्रुत्वा न मे आशंसा आत्मनो भागधेयेषु, अथवा यथा मिश्रकेश्या मे आख्यातं तथा सम्भाव्यत एतत्। विकारकालेऽपि प्रकृतेरन्यथाभावकालेऽपि प्रकृतिस्थां स्वस्थाम्। मे मम भागधेयेषु भाग्येषु न आशंसा न प्रत्याशा।

(४) अये इति। अनेन दुष्यन्तस्याप्युपक्षिप्तस्य शकुन्तलासमागमरूपस्य बीजस्य पुनरुपगमनात्समाधानमुक्तम्। बीजोपगमनं सन्धिरिति।

(५) वसने इति। परिधूसरे परितः धूसरवर्णे वाससी वसाना परिदधाना। मलिनवस्त्रेत्यर्थः। नियमेन क्षामं क्षीणं मुखं यस्याः। धृतं एकैव वेणिर्यया। अतएव शुद्धं दोषरहितं शीलं स्वभावो यस्याः। अव्यभिचारिणीत्यर्थः। इयं शकुन्तला अतिनिष्करुणस्य

शकु० । पश्चात्तापविवर्णं राजानं दृष्ट्वा सवितर्कम् । ण क्खु अज्जउत्तो भवं, ता को एसो किदरक्खामङ्गलं दारअं मे गत्तसंसग्गेण दूसेदि ?[1] ।

बालः । मातरमुपगम्य । अज्ज ! को एसो मं पुत्तकेत्ति सणिणेहं आलिङ्गदि ?[2] ।

राजा । प्रिये ! क्रौर्य्यमपि मे त्वयि प्रयुक्तमनुकूलपरिणामं संवृत्तम् । तदहमिदानीं त्वया प्रत्यभिज्ञातमात्मानमिच्छामि[3] ।

शकु० । स्वगतम् । हिअअ ! समस्सस समस्सस, पहरिअ परिच्चत्तमच्छरेण अणुकम्पिदम्हि देव्वेण, अज्जउत्तो ज्जेव एसो[4] ।

राजा । प्रिये !

---

अत्यन्तं करुणारहितस्य मम दीर्घश्चिरकालपर्य्यन्तं विरहव्रतं वियोगरूपं नियमं बिभर्त्ति धारयति ।

(१) न खल्वार्यपुत्रोऽयं तत्क एष कृतरक्षामङ्गलं दारकं मे गात्रसंसर्गेण दूषयति । कृतं रक्षायै मङ्गलं यस्मिन्तम् । दारकं पुत्रम् । दूषयति रक्षाकाण्डस्य शक्त्यपकर्षेण दोषास्पदं करोति ।

(२) अम्ब क एष मां पुत्रक इति सस्नेहमालिङ्गति ।

(३) प्रिय इति । त्वयि प्रयुक्तं कृतं क्रौर्य्यमपि क्रूरत्वमपि मे मम अनुकूल आनन्दजनकः । सपुत्रायास्तव दर्शनादिति भावः ।

(४) हृदय समाश्वसिहि समाश्वसिहि प्रहृत्य परित्यक्तमत्सरेणानुकम्पितास्मि दैवेन आर्यपुत्र एवैषः । प्रहृत्य प्रहारं कृत्य । परित्यक्तो मत्सरः क्रोधो येनैवंविधेन । क्वचित् क्रोधेऽपि मत्सर इति रत्नकोषः । वाञ्छितस्य दुष्यन्तस्य प्राप्त्याऽऽनन्दनामकमङ्गम् । आनन्दो वाञ्छितागम इत्युक्तेः ।

(५) स्मृतेति । हे सुमुखि शोभनवदने स्मृत्या भूतसाक्षात्काररूपेण निरस्तं मोहरूपं तमो यस्य स एतादृशस्य मे मम प्रमुखे सन्निधौ

स्मृतिभिन्नमोहतमसो

दिष्ट्या प्रमुखे स्थितासि मे सुमुखि!।

उपरागान्ते शशिनः

समुपगता रोहिणी योगम्[1]॥

शकु। सहर्षम्। जयदु जयदु अज्जउत्तो[2]। इत्यर्द्धोक्ते बाष्पकण्ठी विरमति।

राजा। प्रिये!

बाष्पेण प्रतिषिद्धेऽपि जयशब्दे जितं मया।

यत्ते दृष्टमसंस्कारपाटलोष्ठपुटं मुखम्[3]॥

बालः। अम्ब! को एसो?[4]।

शकु। भाअधेआइं पुच्छ[5]। इति रोदिति।

राजा।

सुतनु! हृदयात् प्रत्यादेशव्यलीकमपैतु ते,

किमपि मनसः सम्मोहो मे तदा बलवानभूत्।

---

त्वं स्थितासि। दिष्ट्येति हर्षे। उपरागान्ते ग्रहणान्ते शशिनश्चन्द्रस्य योगं सम्बन्धं रोहिणी उपगता प्राप्ता।

(२) जयतु जयत्वार्य्यपुत्रः।

(३) बाष्पेणेति। बाष्पेणाऽश्रुणा जयशब्दे प्रतिषिद्धेऽपि बाधितेऽपि मया जितम्। हे प्रिये यद्यस्मात्कारणात्ते तव असंस्कारेण लाक्षारससंस्कारहीनेन पाटलः श्वेतरक्तवर्णः ओष्ठपुटो यस्मिन्नेतादृशं मुखं वदनं दृष्टम्। प्रोषिते भर्त्तरि अङ्गसंस्कारस्याऽविहिततयाऽऽक्तदनमुखान दर्शनेनामोदातिशयाज्जितमित्युक्तम्। श्वेतरक्तस्तु पाटलः इत्यमरः।

(४) अम्ब क एषः।

(५) भागधेयानि पृच्छ। भाग्यानीततया स्वे वा अस्माकं दर्शनः।

(६) सुतन्विति। हे सुतनु शोभनाङ्गि प्रत्यादेशेन निराकरणेन व्यलीकं दुःखं ते तव हृदयान्मनसः अपैतु बहिर्गच्छतु। तदा तस्मिन्

प्रबलतमसामेवंप्रायाः शुभेषु हि वृत्तयः,
स्रजमपि शिरस्यन्धः क्षिप्तां धुनोत्यहिशङ्कया[1] ॥

इति पादयोः पतति ।

शकु । उट्ठेदु उट्ठेदु अज्जउत्तो, णूणं मे सुहपडिबन्धअं पुराकिदं तेसु दिअहेसु परिणाममुहं आसी जेण साणुक्कोसोवि अज्जउत्तो मइ विरसो संवुत्तो[2] ।

राजा उत्तिष्ठति ।

शकु । अध कधं अज्जउत्तेण सुमरिदो दुक्खभाई अअं जणो ?[3] ।

राजा । उद्धृतविषादशल्यः कथयिष्यामि[4] ।

---

काले किमपि अचिन्तनीयं बलवान् मे मम सः संमोहो भ्रमोऽभूत् । हि यतः कारणात् प्रबलमधिकं तमो मोहो येषान्तेषां शुभेषु विषयेषु वृत्तयः प्रवृत्तयः एवंप्राया बाहुल्येनेदृक्प्रकाराः । तथाहि । अन्धश्चक्षुर्विकलः शिरसि मूर्ध्नि क्षिप्तान्यस्तां स्रजं मालामपि अहिशङ्कया धुनोति सर्पभ्रान्त्या कम्पयति । अहिर्वृत्रासुरे सर्पे इति कोषः । अनेन शकुन्तलायाः पर्युपासनात्प्रसादनामकमङ्गम् । शुश्रूषादिः प्रसादः स्यादित्युक्तेः ।

(२) उत्तिष्ठतु उत्तिष्ठतु आर्यपुत्र नूनम्मे सुखप्रतिबन्धकं पुराकृतं तेषु दिवसेषु परिणाममुखमासीत् येन सानुक्रोशोऽप्यार्यपुत्रो मयि विरसः संवृत्तः । तेषु दिवसेषु प्रत्यादेशकालेषु पुराकृतं पूर्वजन्मनि कृतं सुखप्रतिबन्धकं सुखव्याघातकं परिणाममुखं परिपाकमुखम् । येन कारणेन सानुक्रोशोऽपि सकृपोऽपि । कृपादयाऽनुकम्पा स्यादनुक्रोश इत्यमरः । अनेन दुःखनिर्गमात्समयनामकमङ्गम् । समयो दुःखनिर्गम इत्युक्तेः ।

(३) अथ कथमार्यपुत्रेण स्मृतो दुःखभागी अयञ्जनः ।

(४) उद्धृतेति । उद्धृतमुन्मूलितं विषादरूपं शल्यं शङ्कुर्येनतादृशः ।

मोहान्मया सुतनु ! पूर्वमुपेक्षितस्ते
यो बाष्पबिन्दुरधरं परिबाधमानः ।
तं तावदाकुटिलपक्ष्मविलग्नमद्य
कान्ते ! प्रमृज्य विगतानुशयो भवामि[1] ॥

इति यथोक्तं करोति ।

शकु । प्रमृष्टबाष्पा अङ्गुरीयकं विलोक्य । अज्जउत्त ! तं एदं अङ्गुलीअअं ?[2] ।

राजा । अथ किम्, अस्मादद्भुतोपलम्भान्मया स्मृतिरुपलब्धा ।

शकु । विसमं किदं क्खु इमिणा, जं तदा अज्जउत्तस्स पच्चाअणकाले दुल्लहं आसी[3] ।

राजा । तेन हि, ऋतुसमागमचिह्नं प्रतिपद्यतां लता कुसुमम्[4] ।

(१) मोहादिति । हे सुतनु अधरम् ओष्ठं परिबाधबाधमान पीड़यन् चुम्बयन्नित्यर्थः । ते तव यो बाष्पबिन्दुर्मया मोहात् भ्रमात् पूर्वं प्रत्यादेश समये उपेक्षित उपेक्षाकृतः । हे कान्ते अद्यास्मिन्काले आकुटिलेषु ईषद्वक्रेषु पक्ष्मसु अक्षिलोमसु विलग्नं सम्बद्धं तमश्रुबिन्दुं प्रमृज्य तावत्प्राकल्येन विगतानुशयः सन्तापरहित भवामि । अनुशयो दीर्घद्वेषानुतापयोरित्यमरः । अनेन कार्य्यायाः शकुन्तलाया उपन्यासात्प्रसादनाङ्गयनन्नामाङ्गम् उपन्यासस्तु कार्य्याणां यथनमित्युक्तं ।

(२) आर्य्यपुत्र तमिदमङ्गुलीयकम् । तं शचीतीर्थोदकं प्रणमन्त्या मम हस्तात्भ्रष्टम् ।

(३) विषमं कृतं खल्वनेन यदा तदार्य्यपुत्रस्य प्रत्यायनकाले दुर्लभमासीत् ।

(४) तेनेति । तेन मया भवत्यै समर्पितत्वात् भवद्वैमनस्येन । लता, ऋतुसमागमस्य वसन्तसम्बन्धस्य चिह्नं लक्षभूतं कुसुमं पुष्पं यथा विभर्त्ति तथात्वमपि मत्समागमज्ञापकम् इदमङ्गुलीयकं धारयेत्यर्थः ।

शकु। अ वे णिवेदेमि, अज्जउत्तो ज्जेव णं धारेदु[1]।

ततः प्रविशति मातलिः।

मात। दिष्ट्या धर्मपत्नीसमागमेन पुत्रमुखदर्शनेन चायुष्मान् वर्द्धते।

राजा। सुहृत्सम्पादितत्वात् साधुतरफलो मे मनोरथः, मातले! न खलु विदितोऽयमाखण्डलस्यार्थः[2]?

मात। अविदितम्। किमीश्वराणां परोक्षम्; एहि, भगवान् मारीचस्ते दर्शनमिच्छति।

राजा। प्रिये! अवलम्ब्यतां पुत्रः, त्वां पुरस्कृत्य भगवन्तं द्रष्टुमिच्छामि[3]।

शकु। लज्जेमि क्खु अज्जउत्तेण सह्ं गुरुअणसमीवं गन्तु[4]।

राजा। आचरितव्यमेतदभ्युदयकालेषु, तदेहि तावत्[5]।

इति सर्वे परिक्रामन्ति।

ततः प्रविशत्यदित्या सहासनोपविष्टो मारीचः।

मारीचः। राजानमवलोक्य। दाक्षायणि!

---

(१) मास्य विज्ञापयामि आर्यपुत्र एवैनद्धारयतु।

(२) सुहृदिति। सुहृदा मित्रेण सम्पादितत्वात् कृतत्वाच्च मम मनोरथ इच्छा साधुतरफल अतिशयेन साधु फलं यस्य स एतादृशः जातः सपुत्रायाः शकुन्तलाया लाभादिति भावः। अयं शकुन्तलामेलनरूप आखण्डलस्येन्द्रस्य न विदितो न ज्ञातः। खलुः प्रश्ने।

(३) प्रिय इति। पुत्रः पुन्नामनरकोत्तारकः। सर्वदमन इति यावत्। अवलम्ब्यतामाश्रियताम्,। पुरस्कृत्याग्रे कृत्वा।

(४) लज्जे खल्वार्यपुत्रेण सार्द्धं गुरुजनसमीपङ्गन्तुम्। आर्यपुत्रेणेति सहार्थेन योगे तृतीया।

(५) आचरितव्यमिति। एतद् भर्तृसाहचर्यम् अभ्युदय कालेषु उन्नतिकालेषु आचरितव्यं कर्त्तव्यम्। तथा शिष्टाचारादिति भावः।

(१) पुत्रस्येति। हे दाक्षायणि अदिति। जेयस्तम्भे न स्कन्धीवाक-

पुत्त्रस्य ते रणशिरस्ययमग्रगामी
दुष्मन्त इत्यभिहितो भुवनस्य भर्त्ता ।
चापेन यस्य विनिवर्त्तितकर्म्म जातं
तत्कोटिमत् कुलिशमाभरणं मघोनः[१] ॥

अदितिः । सम्भावणीअप्पहावा से आकिदी[२] ।

मातः । आयुष्मन् ! एतौ पुत्त्रप्रीतिपिशुनेन चक्षुषा दिवौकसां पितरावायुष्मन्तमवलोकयतः, तदुपसर्प[३] ।

राजा । मातले !

प्राहुर्द्वादशधा स्थितस्य मुनयो यत्तेजसः कारणं
भर्त्तारं भुवनत्रयस्य सुषुवे यद्यज्ञभागेश्वरम् ।
यस्मिन्नात्मभुवः परोऽपि पुरुषश्चक्रे भवायास्पदं,
द्वन्द्वं दक्षमरीचिसम्भवमिदं तत् स्रष्टुरेकान्तरम्[४] ॥

---

ज्येष्ठात्पत्यकलत्रयोरिति निषेधाद्वाच्यायणीत्युक्तम् । रणशिरसि सङ्ग्राम मूर्ध्नि ते तवपुत्त्रस्येन्द्रस्य अग्रयामी शत्रुसादनाय अग्रेसरः भुवनस्य जगतो भर्त्ता पालकः अयं समीपस्थो जनो दुष्मन्त इति अविहितो दुष्मन्त इति शब्दवाच्यः । तत्प्रसिद्धं कोटिमत कोटियुक्तम् । अत्युत्कर्षाश्रयः कोटि इत्यमरः । कुलिशं वज्रं यस्य चापेन धनुषा । विनिवर्त्तितं कृतं कर्म्म शत्रुमारणरूपं यस्य तदेतादृशं सत् मघोन इन्द्रस्य आभरणं भूषणं जातम् । रणे एतस्मिन् योद्धरि वज्रम् आभूषणार्थमेव जातम् किमपि कर्म्मसम्पादनार्थमिति भावः ।

(२) सम्भावनीय प्रभावास्याकृतिः ।

(३) आयुष्मन्निति । हे आयुष्मन् । पुत्त्रे इव या प्रीतिस्तत्सूचकेनचक्षुषा नयनेन दिवौकसां देवानां पितरौ मातापितरौ एतावदितिमारीचौ ।

(४) प्राहुरिति । हे मातले मुनय ऋषयः यद्द्वन्द्वं मिथुनकर्म द्वादशधा द्वादशप्रकारेण स्थितस्य तेजसोऽर्कस्य कारणं प्राहुः । तथा यद्द्वन्द्वं भुवनत्र यस्य त्रयोऽवयवा यस्य तत्त्रयं त्रिमस्त्रो-न्त्यपि वस्य दिविस्थालयस्याऽवशिष्टद प्राह ः । भुवनानां त्रीणा-ऽवयवानां त्रयं त्रयवयवं तस्य भर्त्तारं पालयितारं यज्ञस्य भागो येषा-

मातः । अथ किम् ।

राजा । प्रणिपत्य । उभाभ्यामपि वां वासवनियोज्यो दुष्यन्तः प्रणमति[1] ।

मारीचः । वत्स ! चिरं जीवन् पृथिवीं पालय ।

अदितिः । अप्पडिरधो होहि[2] ।

शकुन्तला पुत्रसहिता पादयोः पतति ।

मारीचः । वत्से !

आखण्डलसमो भर्त्ता, जयन्तप्रतिमः सुतः ।
आशीरन्या न ते योज्या, पौलोमीमङ्गला भव[3] ॥

अदितिः । जादे ! भत्तुणो बहुमदा होहि, अअञ्च दीहाऊ वच्छअओ उहअकुलणन्दणो होदु, एध उववि सध[4] ।

---

त्ते तेषान्देवानामीश्वरम् इन्द्रं सुषुवे असूत । तथा यस्मिन्नहं आत्मभुवः ब्रह्मणः।ब्रह्मात्मभूः सुरज्येष्ठ इत्यमरः । परोपि श्रेष्ठोऽपि पुरुषो नारायणो भवाय वामनरूपेण जन्मनेतादर्थ्ये चतुर्थी । आस्पदं पदम् । आस्पदं क्लृप्तपदयोरिति हेमचन्द्रः । चक्रेऽकृत। दक्षमरीचिसम्भवं ब्रह्मणः एकान्तरमेकेन पुरुषेण व्यवहितम् इदं समीपस्थं तदुद्वन्द्वमदितिकाश्यपात्मकमिथुनम् । एकव्यवहितत्वञ्चानयोरदितेर्ब्रह्मपुत्रस्य दक्षस्य पुत्रीत्वान्मरीचस्य ब्रह्मतनयमरीचिपुत्रत्वादिति बोध्यम् ।

(१) उभाभ्यामिति । उभाभ्यान्दाभ्यां वांयुवाभ्यां युष्मदस्मदोः षष्ठीचतुर्थीति युवाभ्यामित्यस्य वामित्यादेशः । वासवनियोज्य इन्द्रस्य किङ्कर दुष्यन्तनामकः प्रणमत्यभिवादयति ।

(२) अप्रतिरथो भव । अप्रतिरथः प्रतिभटरहितः ।

(३) आखण्डलेति । ते तव भर्त्ता पतिः आखण्डलसम इन्द्रतुल्यः । सुतः पुत्रो-जयन्त इन्द्रसूनुः प्रतिमा सादृश्यं यस्यैतादृशः । अस्माद्धेतोरन्या वक्ष्यमाणाद्भिन्ना आशिष्टार्थशंसनं न योज्या न कर्त्तव्या हे वत्से पौलोमी पुलोमपुत्री अपत्यान्ताच्छिड्ढेति ङीप् । इन्द्राणीत्यर्थः तद्वन्मङ्गलमङ्गलसंयुक्ता भव । भूधातोराशिषिलोट् । इन्द्राणी यथेन्द्रविप्रयुक्ता न भवति तथा त्वमप्यनेन राज्ञा विरहिता मा भूया इत्यर्थः ।

(४) जाते भर्त्तुर्बहुमता भव अयञ्च दीर्घायुरुभयपक्षमलङ्करोतु

उभौ प्रजापतिमभित उपविशन्ति।

मारीचः। एकैकं निर्दिशन्।

दिष्ट्या शकुन्तला साध्वी, सदपत्यमिदं, भवान्।
श्रद्धा, वित्तं, विधिश्चेति त्रितयं तत् समागतम्[१]॥

राजा। भगवन्! प्रागभिप्रेतसिद्धिः पश्चाद्दर्शनमित्यपूर्वः खलु वोऽनुग्रहः। कुतः

उदेति पूर्वं कुसुमं, ततः फलं, घनोदयः प्राक्, तदनन्तरं पयः।
निमित्तनैमित्तिकयोरयं क्रमस्तव प्रसादस्य पुरस्तु सम्पदः[२]॥

मात। आयुष्मन्! एवं प्रसीदन्ति विश्वगुरवः।

राजा। भगवन्! इमामाज्ञाकरीं वो गान्धर्वेण विवाहविधिनोपयम्य कस्यचित् कालस्य बन्धुभिरानीतां स्मृतिशैथिल्यात् प्रत्यादिशन्नपराद्धोऽस्मि तत्रभवतो यु-

---

गत उपविशत। उभयपक्षं मातृपक्षं पितृपक्षञ्च।

(१) दिष्ट्येति। इयं साध्वी पतिव्रता शकुन्तला, इदं सदपत्यं दोषलेशहीनं पुत्रम् अयं भवान् इति तस्माच्छ्रद्धा धर्मशास्त्रेषु प्रतीतिः वित्तं धनं विधिः प्रवर्त्तकवचनमिव त्रितयं अवयवकं समागतमुपस्थितं च इवार्थे। यथालोकश्रद्धाधनसम्बन्धाद्विधिविषयो भवति तथाहमपि पत्न्याः पुत्रस्य च सम्बन्धाद्भवद्विषयोऽस्मीत्यर्थः। तथाच शकुन्तलाश्रद्धा अपत्यमिदं धनं भवान् विधिसदृश इति भावः।

(२) अपूर्व्वत्वन्दर्शयति। उदेतीति। पूर्वं कुसुमं प्रसूनम् उदेति प्रादुर्भवति ततस्तस्मात् फलं भवति। प्राक् पूर्वं घनोदयो मेघप्रादुर्भावस्तदनन्तरं पयो वृष्टिर्जायते। निमित्तनैमित्तिकयोः कार्य्यकारणभावयोरयं क्रमोऽव्यवहितपौर्वापर्य्यरूपक्रमो लभ्यते तव प्रसादस्य प्रसन्नतायाः सम्पदः पुत्रादिरूपसम्पत्तयस्तु पुरोऽग्रे भवन्तीति शेषः। इदञ्च प्रियवचनमाख्यं वचनम्। आक्रममाणयितुं पूज्यं प्रियोक्तिर्हर्षभाषण-मित्युक्तेः।

(१) भगवन्निति। वो युष्माकमाज्ञाकरीं दासीं शकुन्तलामित्यर्थः। गान्धर्व्वेण मिथः समयपूर्व्वकेण विवाहविधिनोपयम्य परिणीय। क-

अत्रसगोत्रस्य कण्वस्य, पश्चादिमामङ्गुरीयकदर्शनादू-
र्द्धमृतिकृत्पूर्व्वामवगतोऽहं, तच्चित्रमिव मे प्रतिभाति[1] ।
यथा गजं साधु समक्षरूपेकस्मिन्नपि क्रामति संशयः स्यात्।
पदानि दृष्ट्वा यथभवेत् प्रतीतिस्तथाविधो मे मनसो विकारः[2]॥

मारीचः । वत्स ! अलमात्मापराधशङ्कया, सम्मोहोऽपि त्वय्युपपन्न एव, श्रूयताम्[3] ।

राजा । अवहितोऽस्मि ।

मारीचः । यदैवाप्सरस्तीर्थावतरणात् प्रत्याख्यानविक्लवां शकुन्तलामादाय दाक्षायणीमुपगता मेनका तदैव ध्यानादवगतवृत्तान्तोऽस्मि, दुर्व्वासस: शापादियं तपस्विनी सहधर्म्मचारिणी त्वया प्रत्यादिष्टा, स चाङ्गुरीयदर्शनावसानः शाप इति ।

---

स्थितिकालस्याऽनन्तरमितिशेषः । तत्र भवतः पूज्यस्य । युष्मत्सगोत्रस्य तव समानं गोत्रं यस्य तस्य कण्वस्य तन्नामक ऋषेः अपराद्धोऽस्मि कृताऽपराधोऽस्मि ।

(२) यथेति । साधु यथा स्यात्तथा समक्षरूपे प्रत्यक्षविषयीभूते कस्मिन्नपि गजे मातङ्गे क्रामति गच्छति सति संशयो हस्तीन वेति संशयः स्याद्भवेत् । अथानन्तरं पदानि पदक्षतचिनृह्नानि दृष्ट्वा यथा प्रतीतिः मम चेतसश्चित्तस्य विकारस्तथाविधस्तत्सदृशः । मङ्गलानन्तराऽऽरम्भप्रश्नकार्त्स्न्येष्वथो अथेत्यमरः ।

(३) वत्सेति । आत्मनः स्वस्याऽपराधशङ्कयाभयेन अलं पर्याप्तम् । अलंभूषणपर्याप्तिरित्यमरः । त्वयि त्वद्विषये सम्मोहोऽपि उपपन्न एव युक्त एव ।

(४) यदैवेति । अप्सरस्तीर्थाऽवतरणादवतीर्णाप्सरोयोनेः अदभिहितोभावो द्रव्यवत्प्रकाशत इत्यभियुक्तोक्तेः प्रत्याख्यानेन निराकरणेन विक्लवां विह्वलां शकुन्तलामादाय स्वहीत्वा मेनका यदैव यस्मिन्काल एवदाक्षायणीम् अदितिं उपगता प्राप्ता तदैव तस्मिन्काल एव अवगतवृत्तान्तो ज्ञातवृत्तान्तोऽस्मि ।

राजा । सोच्छ्वासमात्मगतम् । एष वचनीयान्मुक्तोऽस्मि ।

शकु । स्वगतम् । दिट्ठिआ अकारणपच्चादेसी ण अज्जउत्तो, ण उण सत्तं अत्ताणं सुमरेमि, अथवा ण सुदो सुण्णहिअआए मए अअं सावो, जदो सहीहिं अच्चादरेण सन्दिट्ठम्हि, सो राआ जइ तुमं ण सुमरेदि तदा एदं अङ्गुलीअअं दंसेसित्ति[1] ।

मारीचः । शकुन्तलां विलोक्य । वत्से ! विदितार्थासि, तदिदानीं सहधर्म्मचारिणं प्रति न त्वया मन्युः करणीयः[2] । पश्य

> शापादसि प्रतिहता स्मृतिलोपरूक्षे
> भर्त्तर्य्यपेततमसि प्रभुता तवैव ।
> छाया न मूर्च्छति मलोपहतप्रसादे
> शुद्धे तु दर्पणतले सुलभावकाशा[3] ॥

राजा । यथाह भगवान् ।

---

(१) दिष्ट्याऽकारणप्रत्यादेशीनार्य्यपुत्रः । न पुनः सप्तमात्मान स्मरामि अथवा न श्रुतः शून्यहृदयया मयाऽयं शापः यतः सखीभ्या मत्यादरेण सन्दिष्टास्मि स राजा यदि त्वान स्मरिष्यसि तदाऽङ्गुलीयकं दर्शयिष्यसि । शून्यहृदयया अन्यत्वादत्तहृदयया राजमात्वमनसेत्यर्थः ।

(२) वत्स इति । विदितार्थासि ज्ञाताऽभिधेयासि । सहधर्म्मचारिणं पतिं प्रति । त्वया मन्युः क्रोधः । न करणीयः कर्त्तुमयोग्यः ।

(३) शापादसीति । शापाद्दुर्वाससः शापात् भर्त्तरि पत्यौ स्मृतिलोपरूक्षे स्मृतेर्लोपनाशाद्विस्मरणादितियावत् । रूक्षे स्नेहविहीने सति त्वं प्रतिहतासि प्राप्तप्रतिघातासि । भर्त्तरि अपेततमसि अपेतमपगतं तमो यस्य स एतादृशे सति तवैव प्रभुता सहधर्म्मचारिणित्वयोग्यता । हि मलेनोपहृतः प्रनष्टः प्रसाद निर्म्मलता यस्य तदेतादृशे दर्पणतले मुकुरस्वरूपे । अथ स्वरूपयोरस्त्रीत्यमरः । छाया प्रतिबिम्बस्वरूपाणि न पतित । शुद्धे तु मलरहिते तु सुलभः सुखेन लभ्योऽवकाशो यया सैतादृशी भवति ।

मारीचः। वत्स ! कच्चिदभिनन्दितस्त्वया अस्माभिर्विधिवदनुष्ठितजातकर्म्मादिक्रियः पुत्र एष शाकुन्तलेयः[1] ?

राजा। भगवन् ! अत्र खलु मे वंशप्रतिष्ठा। इति बालकं हस्तेन गृह्णाति।

मारीचः। भाविनं चक्रवर्त्तिनमेनमवगच्छतु भवान्। पश्यतु

रथेनानुद्घातस्तिमितगतिना तीर्णजलधिः
पुरा सप्तद्वीपां जयति वसुधामप्रतिरथः।
इहायं सत्त्वानां प्रसभदमनात् सर्व्वदमनः,
पुनर्यास्यत्याख्यां भरत इति लोकस्य भरणात्[2] ॥

राजा। भगवत्कृतसंस्कारेऽस्मिन् सर्व्वमाशंसे।

अदितिः। इमाए दुहिदिमणोरहसम्पत्तीए कण्णो दाव सुदबित्थारो करीअदु, दुहिदिवच्छला मेणआ उण इध मं परिअरन्ती सण्णिहिदा ज्जेव[3]।

(१) वत्सेति। अस्माभिर्विधिवद्विधिपूर्व्वकं अनुष्ठिता अवधानेन कृता जातकर्म्मादि क्रिया यस्य स एतादृश एष निकटस्थितः पुत्रः पुन्नाननरकोत्तारकः शाकुन्तलेयः शकुन्तलापत्यं स्त्रीभ्यो ढगिति ढक् त्वया नाऽभिनन्दितः। कच्चिदिति प्रश्ने। कच्चित्कामप्रवेदन इत्यमरः।

(२) रथेनेति। अनुद्घातेनाऽस्खलनेन तिमिताचञ्चलरहिता गतिर्गमनं यस्य स एतादृशेन रथेन तीर्णजलधिर्लङ्घितसमुद्रः अप्रतिरथ प्रतिद्वन्द्विरहितः सोऽयं शकुन्तलात्मजः पुरा अग्रे सप्तद्वीपां वसुमतीं पृथिवीं जयति जेष्यति। यावत्पुरानिपातयोर्लडिति पुराशब्दयोगे भविष्यति लट्। इह सत्त्वानां प्राणिनां प्रसभदमनाद्बलात्कारेण शासनात् सर्व्वदमन इति नामकोऽयं पुन लोकस्य भुवनस्य। लोकस्तु भुवने जन इति कोषः। भरत इति आख्यां नाम यास्यति प्राप्स्यति।

(३) अस्या दुहितृमनोरथसम्पत्तेः कण्वस्तावच्छ्रुतविस्तारः क्रियतां दुहितृवत्सला मेनका पुनरिह मां परिचरन्ती सन्निहितैव। दुहितुः पुत्र्या मनोरथस्याऽभिलाषस्य सम्पत्तेः। श्रुतो विस्तारो येन स एतादृशः क्रियताम्। दुहितृवत्सला शकुन्तलाप्रीतिमती मेनका मां परिचरणं कुर्व्वती सन्निहितैव निकटस्थैव।

शकु । आत्मगतम् । मणोगदं मे वाहरिदं भअवदीए[1] ।

मारीचः । तपःप्रभावात् प्रत्यक्षमिदं तत्रभवतः कण्वस्य ।

राजा । अतः खलु ममानतिक्रुद्धो मुनिः[2] ।

मारीचः । तथाप्यसौ दुहितुः सपुत्रायाः पत्या परिग्रह-प्रियमस्माभिः श्रावयितव्यः । कः कोऽत्र भोः !

प्रविश्य शिष्यः । भगवन्नयमस्मि ।

मारीचः । वत्स गालव ! मद्वचनादिदानीमेव वैहायसा गत्वा तत्रभवते कण्वाय प्रियमावेदय, यथा पुत्रवती शकुन्तला दुर्वाससः शापनिवृत्तौ स्मृतिमता दुष्यन्तेन परिगृहीतेति[3] ।

शिष्यः । यथाज्ञापयन्ति गुरव इति निष्क्रान्तः ।

मारीचः । राजानं प्रति । वत्स ! त्वमपि सापत्यदारः सख्युराखण्डलस्य रथमारुह्य स्वां राजधानीं प्रतिष्ठस्व[4] ।

राजा । सप्रणामम् । यदाज्ञापयति भगवान् ।

मारीचः । सम्प्रति हि

तव भवतु बिडौजाः प्राज्यवृष्टिः प्रजासु,
त्वमपि विततयज्ञो वज्रिणं प्रीणयालम् ।

---

(१) मनोगतं मे व्याहृतं भवत्या ।

(२) अत इति । अतस्तपसा ज्ञाताखिलवृत्तान्तत्वात् मम सम्बन्धे मुनिः कण्वोऽनतिक्रुद्धः । तस्मिन्मदपराधस्याभावादिति भावः ।

(३) वत्सेति । वैहायसा गत्या आकाशमार्गेण । क्षिप्रं निवेदनीयत्वादिति भावः ।

(४) त्वमपीति । हे वत्स त्वमपि सापत्यदारः पुत्रकलत्रसहितः सख्युर्मित्रस्याखण्डलस्येन्द्रस्य । स्वां स्वकीयां राजधानीं नगरं प्रतिष्ठस्व गच्छ । इदं भाषणनामकमङ्गम् । सामदानादिभाषणमित्युक्तेः ।

(५) तवेति । विड्ओजा वेवेष्टि व्याप्नोतीति विट् विट् ओजो यस्य सः । इन्द्र इत्यर्थः । इन्द्रो मरुत्वान्मघवा विडौजेत्यमरः । तव प्रजासु प्राज्यवृष्टिः प्राज्या प्रभूता वृष्टिर्यस्य तादृशो भवतु । त्वमपि विततोऽनुष्ठितो यज्ञो येन स तथाभूतः सन् । वज्रिणमिन्द्रम् अलं पर्याप्तं प्री-

युगशतपरिवर्त्तैरेवमन्योन्यकृत्यै-
र्नयतमुभयलोकानुग्रहश्लाघनीयैः[१] ॥

राजा । भगवन् ! यथाशक्ति श्रेयसे यतिष्ये ।

मारीचः । वत्स ! किन्ते भूयः प्रियमुपहरामि[२] ? ।

राजा । अतः परमपि प्रियमस्ति ? तथाप्येतदस्तु ।

भरतवाक्यम् ।

प्रवर्त्ततां प्रकृतिहिताय पार्थिवः,
सरस्वती श्रुतिमहती न हीयताम् ।
ममापि च क्षपयतु नीललोहितः
पुनर्भवं परिगतशक्तिरात्मभूः[३] ॥

इति निष्क्रान्ताः सर्व्वे । इति सप्तमोऽङ्कः ।

समाप्तमिदं महाकविश्रीकालिदासविरचितमभिज्ञान-
शकुन्तलनामकं नाटकम् ।

---

यायत्त्वर्थ्य । युगशतपरिवर्त्तैर्युगशतं व्याप्य परिवर्त्तैर्जातविनिमयैस्तथोभयलोकयोः स्वर्लोकमर्त्यलोकयोरनुग्रहेण श्लाघनीयैः प्रशंसायोग्यैरेवम् अन्योन्यकृत्यैः परस्परकर्म्मभि नयतं सर्वोत्कर्षेण वर्त्तेथाम् । अयं समग्रफलोदयत्वात्फलयोगः । सावस्था फलयोगः स्याद्यः समग्रफलोदय इति दर्पणोक्तेः ।

(२) वत्सेति । भूयः पुनस्ते तव प्रियं प्रियभूतं किमुपहरामि किं कल्पयामि । इदं काव्यसंहारनामकमङ्गम् । वरप्रदानसम्प्राप्तिः काव्यसंहार इष्यत इति दर्पणोक्तेः ।

(३) प्रवर्त्ततामिति । पार्थिवो राजा प्रकृतीनां पौराणां हिताय हितकर्त्तुं प्रवर्त्तताम् । तथा श्रुति महती श्रवणे प्रशस्ता सरस्वती न हीयतां न त्यज्यताम् । अप्येवमर्थे । परिगतोऽज्ञातः शक्तिः स्त्रीशक्तिर्यस्यैतादृशः । आत्मभूरात्मनाभवतीति आत्मभूर्ब्रह्मा । तथा परिगतशक्ति गौरीयुक्तः नीललोहितः शिवः मम च पुनर्भवं पुनरुत्पत्तिं क्षपयतु निराकरोतु । परिगतं त्रिषु प्राप्ते विस्मृतज्ञातचेष्टित इति मेदिनी । इदं प्रशस्तिनामकमङ्गम् । नृपदेशादिशान्तिस्तु प्रशस्तिरभिधीयत इत्युक्तेरितिशिवम् ।

इतिश्रीपन्तोपनामक उमरुपल्लभकृतायांशकुन्तलाव्याख्यायां
रूपकप्रकाशाख्यायां सप्तमोऽङ्कः ॥ समाप्तश्चेदम् ॥

# विज्ञापनम् ।

| संस्कृतम् । | रु० | आ० |
|---|---|---|
| चक्रदत्तः | २ | ८ |
| सूर्यसिद्धान्तः | १ | ८ |
| भाषापरिच्छेदः | १ | ० |
| शिशुपालवधम् | ६ | ० |
| मुक्तिकोपनिषत् | ० | २ |
| मेघदूतम् | ० | १२ |
| रघुवंशम् | २ | ० |
| कुमारसम्भवम् | ० | १२ |
| नलोदय | ० | ४ |
| ऋतुसंहारः | ० | ६ |
| चरकसंहिता, १म खण्डम् | १ | ८ |
| किरातार्ज्जुनीयम् | २ | ८ |
| पूर्वनैषध चरितम् १।२ य खण्ड | १ | १४ |
| श्रीमद्भगवद्गीता | ६ | ० |
| वेणीसंहारः | १ | ० |
| सुश्रुतः आयुर्वेद | ४ | ० |
| विवेकचूडामणि | ० | ६ |
| उत्तरकुमारसम्भवम् | ० | ६ |
| साहित्यदर्पणः | १ | ८ |
| किरातार्ज्जुनीयम्, मूलमात्रम् | ० | ६ |
| दशकुमारचरितम्. पूर्वोत्तरखण्डद्वयम् | १ | २ |
| वसन्ततिलकभाण | ० | ६ |
| धातुमञ्जरी, | ० | १४ |
| गीतगोविन्दराधाविनोद, | ० | १० |

| हिन्दी । | रु० | आ० |
|---|---|---|
| श्रीमद्भगवद्गीता | १ | ८ |
| प्रेमसागर | १ | ८ |
| बैतालपच्चीसी | ० | १२ |
| माधवविलास | ० | ४ |
| नजीर की सैर | ० | ४ |
| दिग्विजय | ० | १२ |
| खैरशाहकीबारहमासी | ० | १ |
| रामकथा | ० | १ |
| ब्रजभाषा काव्यसंग्रह | ० | ३ |
| ज्ञानसमुद्र, ज्ञानविलास और नानकविलास | ० | ४ |

॥ मालविकाग्निमित्रं नाटक॥

# MALAVIKAGNIMITRA

A

DRAMA IN FIVE ACTS

BY

SRI KÁLI DÁSA,



# मालविकाग्निमित्रम्।

महाकवि श्रीकालिदास कृतम्।



CALCUTTA:

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHUNDRA VASÁKA.

At the sangbada Jnanaratnakara Press.

No. 8 Nimtollah Ghat Street.

1871.

# MALAVIKAGNIMITRA

A

DRAMA IN FIVE ACTS

BY

SRÍ KÁLI DÁSA.



# मालविकाग्निमित्रम् ।

## महाकवि श्रीकालिदास कृतम् ।



CALCUTTA

PRINTED & PUBLISHED BY

BÁBU BHUVANA CHANDRA VASÁKA

At the Sangbáda Jnanaratnakara Press.

No. 8 Nimtollah Ghat Street.

1871.

# मालविकाग्निमित्रम् ।



एकैश्वर्ये स्थितोऽपि प्रणतबहुफले यः स्वयं कृत्तिवासाः
कान्तासंमिश्रदेहोऽप्यविषयमनसां यः परस्ताद् यतीनाम् ।
अष्टाभिर्यस्य कृत्स्नं जगदपि तनुभिर्बिभ्रतो नाभिमानः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं वृत्तिमीशः ॥

नान्द्यन्ते

सूत्रधारः । अलमतिविस्तरेण नेपथ्याभिमुखमवलोक्य । मारिष ! इतस्तावत् ।

प्रविश्य । पारिपार्श्विकः । भाव ! अयमस्मि ।

सूत्र । अभिहितोऽस्मि, परिषदा श्रीकालिदासग्रथितवस्तु मालविकाग्निमित्रं नाम नाटकमस्मिन् वसन्तोत्सवे प्रयोक्तव्यमिति, तदारभ्यतां सङ्गीतकम् ।

पारिपार्श्विकः । मा तावत् । प्रथितयशसां धावकसौमिल्लकविपुत्रादीनां प्रबन्धानतिक्रम्य वर्त्तमानकवेः कालिदासस्य कृतौ किं कृतो बहुमानः ।

सूत्र । अयि विवेकविश्रान्तमभिहितम् । पश्य

पुराणमित्येव न साधु सर्वं न चापि काव्यं नवमित्यवद्यम् ।
सन्तः परीक्ष्यान्यतरद्भजन्ते मूढः परप्रत्ययनेयबुद्धिः ॥

पारि । आर्यमिश्राः प्रमाणम् ।

सूत्र। तेन हि त्वरतां भवान्।

शिरसा प्रथमगृहीतामाज्ञामिच्छामि परिषदः कर्त्तुम्।

देव्या इव धारिण्याः सेवादक्षः परिजनोऽयम्॥

इति निष्क्रान्तौ।

प्रस्तावना।



ततः प्रविशति वकुलावलिका।

वकुला। आणत्तह्मि देवीए धारिणीए अचिरोवणीदा छलिअणामणट्टअन्तरे कीरिसी, मालविए त्ति णट्टाआरिअं अज्जगणदासं पुच्छिदुं ता जाव सङ्गीदसालं गच्छह्मि[1]। इति परिक्रामति।

ततः प्रविशत्याभरणहस्ता द्वितीया चेटी।

प्रथमा। द्वितीयां दृष्ट्वा। हला कोमुदिए! कुदो दाणीं इअं दे धीरदा जं समीए वि अदिक्कमन्ती इदो दिट्ठिं ण देसि[2]।

द्वितीया। अम्मो बउलावलिया। सहि! देवीए इदं सिप्पिसआसादो आणीदं णागमुद्दासणाहं अङ्गुलीअअं सिणिद्धं णिभालअन्ती तुह उवालम्भे पडिदह्मि[3]।

---

(१) आज्ञप्तास्मि देव्या धारिण्या, अचिरोपनीता छलिकनामनाट्यान्तरे कीदृशी मालविकेति नाट्याचार्य्यं गणदासं प्रष्टुं, तद्यावत् सङ्गीतशालां गच्छामि।

(२) हला कौमुदिके! कुतस्ते इयं धीरता यत्समीपेऽप्यतिक्रामन्ती इतो दृष्टिं न ददासि।

(३) अहो वकुलावलिका। सखि! देव्याः इदं शिल्पिसकाशादानीतं नागमुद्रासनाथमङ्गुलीयकं स्निग्धं निभालयन्ती तवोपालम्भे पतितास्मि।

प्रथ। विलोक्य। ठाणे सज्जदि दे दिट्ठी। इमिणा अङ्गुलीअएण उब्भिण्णकिरणकेसरेण कुसुमिदो विअ दे अग्गहत्थो[1]।

द्विती। हला कहिं पत्थिदासि[2]।

प्रथ। देवीए वअणेण णट्टाआरिअं अज्जगणदासं पुच्छिदुं उवदेसग्गहणे कीरिसी मालविएत्ति[3]।

द्विती। सहि! ईरिसेन वावारेण असण्णिहिदावि सा भट्टिणा कहं दिट्ठा[4]।

प्रथ। आं। सो जणो देवीए पासगदो चित्ते दिट्ठो[5]।

द्विती। कहं विअ[6]।

प्रथ। सुणाहि। चित्तसालं गदा देवी जदा पच्चग्गवण्णराअं चित्तलेहं आआरिअस्स पलोअन्ती चिट्ठदि। तहिं अन्तरे भट्टा उवट्ठिदो[7]।

द्विती। तदो तदो[8]।

प्रथ। उवआराणन्तरं एक्कासणोवविट्ठेण भट्टिणा चित्त-

(१) स्थाने सज्जति ते दृष्टिः। अनेनाङ्गुलीयकेनोद्भिन्नकिरणकेसरेण कुसुमित इव तेऽग्रहस्तः। (२) हला कुत्र प्रस्थितासि।

(३) देव्या वचनेन नाट्याचार्य्यमार्य्यगणदासं प्रष्टुम् उपदेशग्रहणे कीदृशी मालविकेति।

(४) सखि! ईदृशेन व्यापारेणासन्निहितापि सा भर्त्रा कथं दृष्टा।

(५) आं। स जनो देव्याः पार्श्वगतश्चित्रे दृष्टः। (६) कथमिव।

(७) शृणु। चित्रशालां गता देवी यदा प्रत्यग्रवर्णरागां चित्रलेखामाचार्य्यस्यावलोकयन्ती तिष्ठति। तस्मिन्नन्तरे भर्त्तोपस्थितः।

(८) ततस्ततः।

(९) उपचारानन्तरमेकासनोपविष्टेन भर्त्रा चित्रगताया देव्याः परिजनमध्यगतामासन्नपरिचारिकां दृष्ट्वा देवी पृष्टा।

गदाए देवीए परिग्गहमज्झगदं आसस्सपरिआरिअं पेक्खिअ देवी पुच्छिदा[१]।

द्विती। किं त्ति[२]।

प्रथ। अपुब्बा इअं दारिआ देवीए आसस्सा लिहिदा किंणामहेए त्ति[३]।

द्विती। आकिदिबिसेसे आअरो पदं करेदि। तदो तदो[४]।

प्रथ। तदो अवहीरिअवअणो भट्टा सङ्किदो देवीं पुणोवि अणुबन्धिदुं पउत्तो। तदो कुमारीए वसुलच्छीए आअक्खिदं अज्ज एसा मालविए त्ति[५]।

द्विती। सस्मितम्। सरिसं क्खु एदं बालभावस्स। तदो अवरं कहेहि[६]।

प्रथ। किं अस्सं। संपदं मालविआ सविसेसं भट्टिणो दंसणपहादो रक्खीअदि[७]।

द्विती। हला अणुचिट्ठ अत्तणो णिओअं। अहं पि एदं अङ्गुलीअअं देवीए उअणइस्सं[८]। इति निष्क्रान्ता।

---

(२) किमिति।

(३) अपूर्वेयं दारिका देव्या आसन्ना लिखिता किंनामधेयेति।

(४) आकृतिविशेषे आदरः पदं करोति। ततस्ततः।

(५) ततोऽवधीरितवचनो भर्ता शङ्कितो देवीं पुनरप्यनुबन्धुं प्रवृत्तः। ततः कुमार्या वसुलक्ष्म्याख्यातम्। आर्य्य! एषा मालविकेति।

(६) सदृशं खलु एतद् बालभावस्य। ततोऽपरं कथय।

(७) किमन्यत्। साम्प्रतं मालविका सविशेषं भर्तुर्दर्शनपथात् रक्ष्यते।

(८) हला अनुतिष्ठात्मनो नियोगम्। अहमप्येतदङ्गुलीयकं देव्यै उपनेष्यामि।

प्रथ। परिक्रम्यावलोक्य च। एसो णट्टाआरिओ संगीद-सालादो णिग्गच्छदि। दाव से अत्ताणं दंसेमि[1]।

इति परिक्रामति।

प्रविश्य।

गणदासः। कामं खलु सर्व्वस्यापि कुलविद्या बहुमता न पुनरस्माकं नाट्यं प्रति मिथ्या गौरवम्। कुतः। तथा हि

देवानामिदमामनन्ति मुनयः कान्तं क्रतुं चाक्षुषं
रुद्रेणेदमुमाकृतव्यतिकरे स्वाङ्गे विभक्तं द्विधा।
त्रैगुण्योद्भवमत्र लोकचरितं नानारसं दृश्यते
नाट्यं भिन्नरुचेर्जनस्य बहुधाप्येकं समाराधनम्॥

बकुला। उपेत्य। अज्ज! बन्दामि[2]।

गण। भद्रे! चिरं जीव।

बकुला। अज्जं देवी पुच्छदि। अवि उवदेसग्गहणे णादिकिलिस्सदि वो सिस्सा मालविए त्ति[3]।

गण। भद्रे! विज्ञाप्यतां देवी परमनिपुणा मेधाविनी चेति किं बहुना।

यद्यत्प्रयोगविषये भाविकमुपदिश्यते मया तस्यै।
तत्तद्विशेषकरणात् प्रत्युपदिशतीव मे बाला॥

बकुला। आत्मगतम्। अदिक्कमन्तीं विअ दूरावदीं

(१) एष नाट्याचार्य्यः संगीतशालातो निर्गच्छति तावदस्यात्मानं दर्शयामि।

(२) आर्य्य! वन्दे।

(३) आर्य्यं देवी पृच्छति, अप्युपदेशग्रहणे नातिक्लिश्यति वः शिष्या मालविकेति।

पेक्खामि । प्रकाशम् । किदत्था दाणिं वो सिस्सा अस्सिं गुरुअणो एव्वं तुस्सदि[1] ।

गण । भद्रे ! तद्विधानामसुलभत्वात् पृच्छामि । कुतो देव्या तत्पात्रमानीतम् ।

बकुला । अत्थि देवीए वण्णावरो भादा वीरसेनो णाम । सो भट्टिणा अन्तवालदुग्गे णम्मदातीरे ठाविदो । तेण शिप्पाहिआरे जोग्गा इअं दारिएत्ति बहिणीए देवीए उवाअणं पेसिदा[2] ॥

गण । स्वगतम् । आकृतिविशेषप्रत्ययादेनामनूनवस्तुकां सम्भावयामि । प्रकाशम् । भद्रे ! मयापि यशस्विना भवितव्यम् । यतः

पात्रविशेषे न्यस्तं गुणान्तरं व्रजति शिल्पमाधातुः ।
जलमिव समुद्रशुक्तौ मुक्ताफलतां पयोदस्य ॥

बकुला । अज्ज ! कहिं दाणिं वो सिस्सा[3] ।

गण । इदानीमेव पञ्चाङ्गादिकमभिनयमुपदिश्य मया विश्रम्यतामित्यभिहिता, दीर्घिकावलोकनगवाक्षगता प्रवातमासेवमाना तिष्ठति ।

---

(१) अतिक्रामन्तीमिवेरावतीं प्रेक्षे । कृतार्थेदानीं वः शिष्या यस्यां गुरुजन एवं तुष्यति ।

(२) अस्ति देव्या वर्णावरो भ्राता वीरसेनो नाम । स भर्त्रान्तपालदुर्गे नर्मदातीरे स्थापितः । तेन शिल्पाधिकारे योग्येयं दारिकेति भगिन्या देव्या उपायनं प्रेषिता ।

(३) आर्य कुत्रेदानीं वः शिष्या ।

बकुला । तेण हि अणुजाणादु मं अज्जो जाव से अज्ज-परितोसणिवेदणेण उस्साहं वड्ढेमि[1] ।

गण । इष्यतां सखी । अहमपि लब्धक्षणः स्वगेहं गच्छामि ।

इति निष्क्रान्तौ ।

मिश्र विष्कम्भकः ।



ततः प्रविशत्येकान्तस्थितपरिजनो मन्त्रिणा लेखहस्तेनान्वास्य-मानो राजा ।

राजा । अनुवाचितलेखममात्यं विलोक्य । वाहतक ! किं प्रतिपद्यते वैदर्भः ? ।

अमात्य । देव ! आत्मविनाशम् ।

राजा । निदेशमिदानीं ज्ञातुमिच्छामि ।

अमा । इदमिदानीमनेन प्रतिलिखितम् । पूज्येनाहमा-दिष्टः । पितृव्यपुत्रो भवतः कुमारो माधवसेनः प्रति-श्रुतसम्बन्धो ममोपान्तिकमुपसर्पन्नन्तरा त्वदीयेनान्तपा-लेनवस्कान्द्य गृहीतः स त्वया मदपेक्षया सकलसोदर्यौ मोचयितव्य इति । तत्र वो न विदितं यत्तुल्याभिजनेषु भूमिधरेषु राज्ञां वृत्तिः । अतोऽत्र मध्यस्थः पूज्यो भवि-तुमर्हति । सोदरा पुनरस्य ग्रहणविप्लवे विनष्टा । तद-न्वेषणाय यतिष्ये । अथ अवश्यमेव माधवसेनो मया पूज्येन मोचयितव्यः । श्रूयतामभिसन्धिः ।

(१) तेन ह्यनुजानातु मामार्यः । यावदस्या आर्यपरितोषनिवे-दनेनोत्साहं वर्द्धयामि ।

आर्य्यसचिवं मुञ्चति यदि पूज्यः संयतं मम श्यालम्।
मोक्ता माधवसेनं ततोऽहमपि बन्धनात् सद्यः॥

राजा। सरोषम्। कथं कार्य्यविनिमयेन मयि व्यवहरत्यनात्मज्ञः। वाहतक! प्रकृत्यमित्रः प्रतिकूलकारी च मे वैदर्भः। तद् यातव्यपक्षे स्थितस्य पूर्वसङ्कल्पितसमुन्मूलनाय वीरसेनमुखं दण्डचक्रमाज्ञापय।

अमा। यदाज्ञापयति देवः।

राजा। अथ वा किं भवान्मन्यते।

अमा। शास्त्रदृष्टमाह देवः।

अचिराधिष्ठितराज्यः शत्रुः प्रकृतिष्वरूढमूलत्वात्।
नवसंरोपणशिथिलस्तरुरिव सुकरः समुद्धर्तुम्॥

राजा। तेन ह्यवितथं तन्त्रकारवचनम्। इदमेव निमित्तमादाय समुद्योज्यतां सेनापतिः।

अमा। तथा। इति निष्क्रान्तः।

परिजनो यथाव्यापारं राजानमभितः स्थितः।

प्रविश्य

विदू। आणत्तोम्हि तत्तभवदा रण्णा। गोदम! चिन्तेहि दाव उवाअं, मे जदिच्छादिट्ठपडिकिदी मालविआ पच्चक्खदंसणा होदि त्ति। मए अ तं तहा किदं दाव से णिवेदेमि[1]। इति परिक्रामति।

---

(१) आज्ञाप्तोऽस्मि। तत्रभवता राज्ञा। गौतम! चिन्तय तावदुपायं यथा मे यदृच्छादृष्टप्रतिकृतिर्मालविका प्रत्यक्षदर्शना भवतीति। मया च तत्तथा कृतं तावदस्य निवेदयामि।

राजा । विदूषकं दृष्ट्वा । अयमपरः कार्यान्तरसचिवोऽस्मानुपस्थितः ।

विदू । उपगम्य । वड्ढदु भवम्[1] ।

राजा । सशिरःकम्पम् । इत आस्यताम् ।

विदूषक उपविष्टः ।

राजा । कच्चिदुपायोपेयदर्शने व्यापृतं ते प्रज्ञाचक्षुः ? ।

विदू । पओअसिद्धिं पुच्छ[2] ।

राजा । कथमिव ।

विदू । कर्णे । एव्वं विअ[3] । इत्यावेदयति ।

राजा । साधु वयस्य ! निपुणमुपक्रान्तम्, इदानीं दुरधिगमसिद्धावप्यस्मिन्नारम्भे वयं त्वामाशंसामहे । कुतः

सप्रतिबन्धं कार्य्यं प्रभुरधिगन्तुं सहायवानेव ।
दृश्यं तमसि न पश्यति दीपेन विना सचक्षुरपि ॥

नेपथ्ये । अलमलं बहु विकत्थ्य । राज्ञः समक्षमेवावयोरधरोत्तरयोर्व्यक्तिर्भविष्यति ।

राजा । आकर्ण्य । सखे ! त्वत्सुनीतिपादपस्य पुष्पमुद्भिन्नमिदम् ।

विदू । फलं पि देक्खिस्ससि[4] ।

ततः प्रविशति कञ्चुकी ।

कञ्चु । देव ! अमात्यो विज्ञापयति अनुष्ठिता प्रभोराज्ञेति । एतौ पुनर्हरदत्तगणदासावुभावभिनयाचार्यौ परस्परजयैषिणौ त्वां द्रष्टुमुद्यतौ साक्षाद्भावाविव शरीरिणौ।

---

(१) वर्द्धतां भवान् । (२) प्रयोगसिद्धिं पृच्छ ।
(३) एवमिव । (४) फलमपि द्रक्ष्यसि ।

राजा। प्रवेशय तौ।

कञ्चु। यदाज्ञापयति देवः।

इति निष्क्रम्य ताभ्यां सह प्रविष्टः।

कञ्चु। इत इतो भवन्तौ।

गण। राजानं विलोक्य। अहो दुरासदो राजमहिमा।

न च न परिचितो नचाप्यरम्य
श्चकितमुपैमि तथापि पार्श्वमस्य।
सलिलनिधिरिव प्रतिक्षणं मे
भवति स एव नवो नवोऽयमक्ष्णोः॥

हरदत्तः। महत्खलु पुरुषाकारमिदं ज्योतिः। तथा हि

द्वारे नियुक्तपुरुषानुमतप्रवेशः
सिंहासनान्तिकचरेण सहोपसर्पन्।
तेजोभिरस्य विनिवर्तितदृष्टिपातै
र्वाक्यादृते पुनरिव प्रतिवारितोऽस्मि॥

कञ्चु। एष देवः, उपसर्पतां भवन्तौ।

उभौ। उपेत्य। विजयतां देवः।

राजा। स्वागतं भवद्भ्याम्। परिजनं विलोक्य। आसने तावदत्रभवतोः।

उभौ परिजनोपनीतयोरासनयोरुपविष्टौ।

राजा। किमिदं? शिष्योपदेशकाले युगपदाचार्याभ्यामत्रोपस्थानम्।

गण। देव! श्रूयताम्। मया सुतीर्थादभिनयविद्या सुशिक्षिता। दत्तप्रयोगश्चास्मि देवेन, देव्या च परिगृहीतः।

राजा । बाढ़ं जाने । ततः किम् ।

गण । सोऽहममुना हरदत्तेन प्रधानपुरुषसमक्षम् अयं न मे पादरजसापि तुल्य इत्यधिक्षिप्तः ।

हर । देव ! अयमेव प्रथमं परिवादकरः । अत्रभवतः किल मम च समुद्रपल्वलयोरिवान्तरमिति । तदत्रभवानिमं मां च शास्त्रे प्रयोगे च विमृशतु । देव एव नौ विशेषज्ञः प्राश्निकः ।

विदू । समत्थं पडिसादम्[1] ।

गण । प्रथमः कल्पः । अवहितो देवः श्रोतुमर्हति ।

राजा । तिष्ठ तावत् । पक्षपातमत्र देवी मन्यते । तदस्याः पण्डितकौशिकीसहितायाः समक्षमेव न्याय्यो व्यवहारः ।

विदू । सुट्ठु भवं भणादि[2] ।

आचार्यौ । यद्देवाय रोचते ।

राजा । मौद्गल्य ! अमुं प्रस्तावं निवेद्य पण्डितकौशिक्या सार्द्धमाहूयतां देवी ।

कञ्चु । यदाज्ञापयति देवः ।

इति निष्क्रम्य सपरिव्राजिकया देव्या सह प्रविष्टः ।

कञ्चु । इत इतो भवती ।

धारि । परिव्राजिकां विलोक्य । भअवदि ! हरदत्तस्स गणदासस्स अ संरम्भे कहं पेक्खसि[3] ।

परिव्राजिका । अलं स्वपक्षावसादशङ्कया । न परिहीयते प्रतिवादिनो गणदासः ।

---

( १ ) समर्थं प्रतिज्ञातम् । ( २ ) सुष्ठु भवान् भणति ।
( ३ ) भगवति ! हरदत्तस्य गणदासस्य च संरम्भे कथं प्रेक्षसे ।

धारि। जइवि एव्व तहवि राअपरिग्गहो से पहुत्तणं उवहरदि[1]।

परि। अयि राज्ञीशब्दभाजनमात्मानमपि विस्मयतु भवती। पश्य

अतिमात्रभासुरत्वं पुष्यति भानोः परिग्रहादनलः।
अधिगच्छति महिमानं चन्द्रोऽपि निशापरिगृहीतः।

विदू। अविहा अविहा! उवट्ठिदा देवी पीठमद्दिअं पण्डिदकोसिइं पुरोकरिअ तत्तभोदी धारिणी[2]।

राजा। पश्याम्येनां यैषा

मङ्गलालङ्कृता भाति कौशिक्या यतिवेषया।
त्रयीविग्रहवत्येव सममध्यात्मविद्यया॥

परि। उपेत्य। विजयतां देवः।

राजा। भगवति! अभिवादये।

परि।

महासारप्रसवयोः सदृशक्षमयोर्द्वयोः।
धारिणीभूतधारिण्योर्भव भर्ता शरच्छतम्॥

धारि। जेदु जेदु अज्जउत्तो[3]।

राजा। स्वागतं देव्यै। परिव्राजिकां विलोक्य। भगवति! क्रियतामासनपरिग्रहः।

सर्वे उपविशन्ति।

---

(१) यद्यप्येवं तथापि राजपरिग्रहोऽस्य प्रभुत्वमुपहरति।

(२) अविहा अविहा। उपस्थिता देवी पीठमर्दिकां पण्डितकौशिकीं पुरस्कृत्य तत्रभवती धारिणी।

(३) जयतु जयत्वार्यपुत्रः।

राजा। भगवति! अत्रभवतोर्हरदत्तगणदासयोः परस्परं विज्ञानसंघर्षिणोर्भगवत्या प्राश्निकपदमध्यासितव्यम्।

परि। वञ्चितम्। अलमुपालम्भेन पत्तने सति ग्रामे रत्नपरीक्षा?।

राजा। नैतदेवम्। पण्डितकौशिकी खलु भगवती। पक्षपातिनावहं देवी च।

गण। सम्यगाह देवः। मध्यस्था भगवती नौ गुणदोषतः परिच्छेत्तुमर्हति।

राजा। तेन हि प्रस्तूयतां विवादः।

परि। देव! प्रयोगप्रधानं हि नाट्यशास्त्रं किमत्र वाग्व्यवहारेण। कथं वा देवी मन्यते।

देवी। जइ मं पुच्छसि तदा एदाणं विवादो एव्व ण मे रुच्चदि[1]।

गण। देवि! न मां समानविद्यतया परिभवनीयमवगन्तुमर्हसि।

विदू। भो पेक्खामो उअरंभरिसंवादं किं मुधा वेदणदाणेण एदाणं[2]।

देवी। णं कलहप्पिओसि[3]।

विदू। मा एव्वं चण्डि! अण्णोण्णकलहप्पिआणं मत्तहत्थिणं एक्कदरस्सिं अणिज्जिदे कुदो उवसमो[4]।

---

(१) यदि मां पृच्छसि तदैतेषां विवाद एव न मे रोचते।

(२) भो पश्याम उदरंभरिसंवादम्। किं मुधा वेतनदानेन एतयोः।

(३) ननु कलहप्रियोऽसि।

(४) नैवं चण्डि! अन्योन्यकलहप्रियायां मत्तहस्तिनामेकतरस्मिन्ननिर्जिते कुत उपशमः।

राजा। ननु प्राकृष्टेनातिशयमुभयोर्भवतो भगवती।

परि। अथ किम्।

राजा। तद्दिदानीमतः परं किमाभ्यां प्रत्याययितव्यम्।

परि। तदेव वक्तुकामास्मि।

शिष्टा क्रिया कस्यचिदात्मसंस्था संक्रान्तिरन्यस्य विशेषयुक्ता।
यस्योभयं साधु स शिक्षकाणां धुरि प्रतिष्ठापयितव्य एव॥

विदू। सुदं अज्जेहिं भअवदीए वअणं। एस पिण्डितत्थो उवदेसदंसणादो णिण्णओत्ति[1]।

हर। परमभिमतं नः।

गण। देवि! एवं स्थितम्।

देवी। जदा उण मन्दमेधा सिस्सा उवदेसं मलिणेदि। तदाणीं आआरिअस्स दोसो[2]?।

राजा। देवि! एवमापद्यते। विनेतुरद्रव्यपरिग्रहोऽपि बुद्धिलाघवं प्रकाशयति।

देवी। जनान्तिकम्। कहं दाणिं। गणदासं विलोक्य। प्रकाशम्। अलं अज्जउत्तस्स उस्साहकारणं मणोरहं परिपूरिअ। विरम णिरत्थादो आरम्भादो[3]।

विदू। सुट्ठु भोदी भणादि। भो गणदास! सङ्गीदअ-

---

(१) श्रुतमार्याभ्यां भगवत्या वचनम्। एष पिण्डितार्थः। उपदेशदर्शनान्निर्णय इति।

(२) यदा पुनर्मन्दमेधा शिष्योपदेशं मलिनयति। तदानीम् आचार्यस्य दोषः?।

(३) कथमिदानीम्। अलमार्यपुत्रस्योत्साहकारणं मनोरथं परिपूर्य। विरम निरर्थादारम्भात्।

पदोवलम्भिअवरत्थुदुवाअणमोदआइं खादन्तस्स किं दे सुहणिग्गहेण विवादेण[1] ।

गण । सत्यमयमेवार्थो देवीवाक्यस्य । श्रूयतामवसरप्राप्तमिदानीम् ।

> लब्धास्पदोऽस्मीति विवादभीरो-
> स्तितिक्षमाणस्य परेण निन्दाम् ।
> यस्यागमः केवलजीविकायै
> तं ज्ञानपण्यं वणिजं वदन्ति ॥

देवी । अइरोवणीदा दे सिस्सा । अपरिणिट्ठिदस्स उवदेसस्स उण अणज्जं आवेदणम्[2] ।

गण । अत एव मे निर्बन्धः ।

देवी । तेण हि दुवेवि भअवदीए उवदेसं दंसेह[3] ।

परि । देवी नैतन्न्याय्यम् । सर्वज्ञस्याप्येकाकिनो निर्णयाभ्युपगमो दोषाय ।

देवी । जनान्तिकम् । मूढे परिव्वाजिए मं जग्गन्तिं पि सुत्तं विअ करेसि[4] । इति सासूयं परावर्तते ।

राजा देवीं परिव्राजिकायै दर्शयति ।

परि ।

> अनिमित्तमिन्दुवदने ! किमत्रभवतः पराङ्मुखी भवसि ।
> प्रभवन्त्योऽपि हि भर्तृषु कारणकोपाः कुटुम्बिन्यः ॥

---

(१) सुष्ठु भवती भणति । भो गणदास ! संगीतकपदोपलब्धवरवस्तूपायनमोदकानि खादमानस्य किं ते सुखनिग्रहेण विवादेन ।

(२) अचिरोपनीता ते शिष्या । अपरिनिष्ठितस्योपदेशस्य पुनरनार्यमावेदनम् ।

(३) तेन हि द्वावपि भगवत्यै उपदेशं दर्शयतम् ।

(४) मूढे ! परिव्राजिके ! मां जाग्रतीमपि सुप्तामिव करोषि ।

विदू। णं सकारणं एव्व। अत्तणो पक्खो रक्खिदव्वो (गणदासं विलोक्य)। णं दिट्ठिआ कोवव्वाजेण देवीए परित्ताहो भवम्। सुसिक्खिदो वि सव्वो उवदेसदंसणेण णिण्णादो होदि[1]।

गण। देवि श्रूयताम्! एवं जनो व्याहरति। तदिदानीं

विवादे दर्शयिष्यामि क्रियासंक्रान्तिमात्मनः।
यदि मां नानुजानासि परित्यक्तोऽस्म्यहं त्वया॥

आसनादुत्थातुमिच्छति।

देवी। का गई। पभवदि आआरिओ सिस्सजणस्स[2]।

गण। निरपदेशशङ्कितोऽस्मि। राजानमवलोक्य। अनुज्ञातं देव्या, तदाज्ञापयतु देवः। कस्मिन्नभिनयवस्तुन्युपदेशं दर्शयिष्यामि।

राजा। यदादिशति भगवती।

परि। किमपि देव्या मनसि वर्तते ततः शङ्कितास्मि।

देवी। भण वीसद्धं पभविस्सदि पहू अत्तणो परिअणस्स[3]।

राजा। मम चेति ब्रूहि।

देवी। भअवदि भण दाणिं[4]।

परि। देव शर्मिष्ठायाः कृतिं चतुष्पदोत्थं छलिकं

---

(१) ननु सकारणमेव। आत्मनः पक्षो रक्षितव्यः। ननु दिष्ट्या कोपव्याजेन देव्या परित्रातो भवान्। सुशिक्षितोऽपि सर्व उपदेशदर्शनेन निष्णातो भवति।

(२) का गतिः। प्रभवत्याचार्यकः शिष्यजनस्य।

(३) भण विस्रब्धम्। प्रभविष्यति प्रभुरात्मनः परिजनस्य।

(४) भगवति भणेदानीम्।

दुष्य, योऽयमुदाहरन्ति, तत्रैकार्थसंश्रयमुभयोः प्रयोगं पश्याम । तावता ज्ञायत एवात्रभवतोरुपदेशान्तरम् ।

आचार्यौ । यदाज्ञापयति भगवती ।

विदू । तेण हि दुवेवि वणापेक्खागेहे संगीदरअणं करिअ अत्तभवदो दूदं पेसध । अह वा म्दङ्गसद्दो ज्जेव्व णो उट्ठावइस्सदि[1] ।

हरदत्तः । तथा । इत्युत्तिष्ठति ।

गणदासो धारिणीमवलोकयति ।

देवी । गणदासं विलोक्य । जयी भोदु अज्जो । णं विजअब्भत्थिणी अहं अज्जस्स[2] ।

आचार्यौ प्रस्थितौ ।

परि । इतस्तावत् ।

आचार्यौ । परिवृत्य । इमौ स्वः ।

परि । निर्णयाधिकारे ब्रवीमि । सर्वाङ्गसौष्ठवाभिव्यक्तये विगतनेपथ्ययोः पात्रयोः प्रवेशोऽस्तु ।

उभौ । नेदमावयोरुपदेश्यम् । इति निष्क्रान्तौ ।

देवी । राजानमवलोक्य । जइ राअकज्जेसु वि ईदिसी णिउणदा अज्जउत्तस्स तदो सोहणं भोदि[3] ।

---

(१) तेन हि द्वावपि वर्णापेक्षागृहे संगीतरचनां कृत्वात्रभवतो दूतं प्रेषयतम् । अथ वा म्दङ्गशब्द एव न उत्थापयिष्यति ।

(२) जयी भवत्वार्यः । ननु विजयाभ्यर्थिन्यहमार्यस्य ।

(३) यदि राजकार्येषु अपीदृशी निपुणतार्यपुत्रस्य ततः शोभनं भवति ।

राजा ।

अलमन्यथा गृहीत्वा न खलु मनस्विनि मया प्रयुक्तमिदम् ।
प्रायः समानविद्याः परस्परयशःपुरोभागाः ॥

नेपथ्ये मृदङ्गध्वनिः ।

सर्वे कर्णं ददति ।

परि । हन्त प्रवृत्तं संगीतकम् । तथा ह्येषा

जीमूतस्तनितविशङ्किभिर्मयूरै-
रुद्ग्रीवैरनुरसितस्य पुष्करस्य ।
निर्ह्रादिन्युपहितमध्यमस्वरोत्था
मायूरी मदयति मार्जना मनांसि ॥

राजा । देवि ! तस्याः सामाजिका भवाम ।

देवी । स्वगतम् । अहो अविणयो अज्जउत्तस्स[1] ।

सर्वे उत्तिष्ठन्ति ।

विदू । अपवार्य । भो धीरं गच्छ । तत्तभोदी धारिणी विसंवादइस्सदि[2] ।

राजा ।

धैर्यावलम्बिनमपि त्वरयति मां मुरजवाद्यरावोऽयम् ।
अवतरतः सिद्धिपथं शब्दः स्वमनोरथस्येव ॥

इति निष्क्रान्ताः सर्वे ।

इति प्रथमोऽङ्कः ।

---

(१) अहो अविनयः आर्य्यपुत्रस्य ।

(२) भो धीरं गच्छ । तत्रभवती धारिणी विसंवदिष्यति ।



# द्वितीयोऽङ्कः।



ततः प्रविशति रचनायां कृतायामासनस्थः सवयस्यो राजा, धारिणी, परिव्राजिका, विभवतश्च परिवारः।

राजा। भगवति! अत्रभवतोराचार्य्ययोः कतरस्य प्रथमम् उपदेशो दृश्यताम्।

परि। ननु समानेऽपि ज्ञानभावे वयोऽधिकत्वात् गणदासः पुरस्कारमर्हति।

राजा। तेन हि मौद्गल्य! एवमत्रभवतोरावेद्य नियोगमशून्यं कुरु।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रान्तः।

प्रविश्य।

गण। देव! शर्म्मिष्ठायाः कृतिर्लयमध्या चतुष्पदास्ति। तस्यास्तु चतुष्पदवर्णकं छलिकप्रयोगमेकमना देवः श्रोतुमर्हति।

राजा। आचार्य्य! बहुमानादवहितोऽस्मि।

निष्क्रान्तो गणदासः।

राजा। जनान्तिकम्। वयस्य!

नेपथ्यगृहगतायाश्चक्षुर्दर्शनसमुत्सुकं तस्याः।
संहर्तुमधीरतया व्यवसितमिव मे तिरस्करिणीम्॥

विदू। अपवार्य। उवट्ठिदं णअणमहु सण्णिहिदम-क्खिअं च ता अप्पमत्तो दाणिं पेक्ख१।

ततः प्रविशत्याचार्यावेक्ष्यमाणाङ्गसौष्ठवा मालविका।

विदू। जनान्तिकम्। पेक्खदु भवम्। ण क्खु से पडिच्छन्दादोवि हीअदि महुरदा२।

राजा। अपवार्य। वयस्य!

चित्रगतायामस्यां कान्तिविसंवादशङ्कि मे हृदयम्।
संप्रति शिथिलसमाधिं मन्ये येनेयमालिखिता॥

गण। वत्से! मुक्तसाध्वसा सत्वस्था भव।

राजा। स्वगतम्। अहो सर्वास्ववस्थास्वनवद्यता रूपस्य तथा हि

दीर्घाक्षं शरदिन्दुकान्ति वदनं बाहू नतावंसयोः
संक्षिप्तं निविडोन्नतस्तनमुरः पार्श्वे प्रमृष्टे इव।
मध्यः पाणिमितोऽमितञ्च जघनं पादावरालाङ्गुली
छन्दो नर्तयितुर्यथैव मनसि श्लिष्टं तथास्या वपुः॥

माल। उपगानं कृत्वा चतुष्पद वस्तुकं गायति।

दुल्लहो पिओ तस्सिं भव हिअअ! णिरासं
अम्हो अपङ्गओ मे फुरइ किंपि वामओ।

---

(१) उपस्थितं नयनमधु सन्निहितमाक्षिकं, तदप्रमत्त इदानीं प्रेक्षस्व।

(२) प्रेक्षतां भवान्। न खल्वस्याः प्रतिच्छन्दादपि हीयते मधुरता।

(१) दुर्लभः प्रियस्तस्मिन् भव हृदय! निराशम्
अहह्यापाङ्गको मे स्फुरति किमपि वामकः।

एसो सो चिरदिट्ठो कहं उण दट्ठव्वो
णाह ! मं पराहीणं तुइ गणत्र सतिण्हम् १ ॥

ततो यथारसमभिनयति ।

विदू । अपवार्य । भो वअस्स ! चदुप्पदवत्थुं दुवारी करिअ तुइ उवट्ठाविदो विअ अप्पा अत्तभोदीए२ ।

राजा । सखे ! एवमावयोर्हृदयम् । अनया खलु

जनमिममनुरक्तं विद्धि नाथेति गेये
वचनमभिनयन्त्या स्वाङ्गनिर्देशपूर्व्वम् ।
प्रणयगतिमदृष्ट्वा धारिणीसन्निकर्षा
दहमिव सुकुमारप्रार्थनाव्याजमुक्तः ॥

मालविका गीतान्ते निष्क्रान्तुमारब्धा ।

विदू । भोदि चिट्ठ । किं पि वो विसुमरिदो तत्त कम्मभेदो । तं दाव पुच्छिस्सम्३ ।

गण । वत्से चणमात्रं स्थित्वोपदेशविशुद्धा यास्यसि ।

मालविका स्थिता ।

राजा । स्वगतम् । अहो सर्वास्ववस्थासु चारुता शोभान्तरं पुष्यति तथा हि

वामं सन्धिस्तिमितवलयं न्यस्य हस्तं नितम्बे
कृत्वा श्यामाविटपसदृशं स्रस्तमुक्तं द्वितीयम् ।
पादाङ्गुष्ठालुलितकुसुमे कुट्टिमे पातिताक्षं
नृत्यादस्याः स्थितमतितरां कान्तमृज्वायतार्द्धम् ॥

---

एष स चिरदृष्टः कथं पुनर्द्रष्टव्यो
नाथ ! मां पराधीनां त्वयि गणय सतृष्णाम् ॥

(२) भो वयस्य चतुष्पदावस्तुकं द्वारीकृत्य त्वमुपस्थापित इवात्मा त्वभवत्याः ।

(३) भवति तिष्ठ । किमपि वो विस्मृतः कर्मभेदः । तं तावत्प्रक्ष्यामि ।

देवी। यं गोदमवचणं पि पच्चो हिचए करेदि[1]।

गण। देवि मा मैवम्। देवप्रत्ययात् संभाव्यते सू-क्ष्मदर्शिता गौतमस्य। पश्य

मन्दोऽप्यमन्दतामेति संसर्गेण विपश्चितः।
पङ्कच्छिदः फलस्येव निकषेणाविलं पयः॥

विदूषकं विलोक्य। तच्छ्रुणुमो विवक्षितमर्थस्य।

विदू। गणदासं विलोक्य। कोसिइं दाव पुच्छ। पच्छा जो मए कम्मभेदो पिट्ठो तं भणिस्सम्[2]।

गण। भगवति! यथादृष्टमभिधीयतां गुणो वा दोषो वेति।

परि। यथा दर्शितं सर्वमनवद्यम्। कुतः।

अङ्गैरन्तर्निहितवचनैः सूचितः सम्यगर्थः
पादन्यासो लयमुपगतस्तन्मयत्वं रसेषु।
शाखायोनिर्मृदुरभिनयस्तद्विकल्पानुवृत्तौ
भावो भावं नुदति विषयाद्रागबन्धः स एव॥

गण। देवः कथं मन्यते।

राजा। वयं स्वपक्षशिथिलाभिमानाः संवृत्ताः।

गण। अद्य नर्तयितास्मि।

उपदेशं विदुः शुद्धं सन्तस्तमुपदेशिनः।
श्यामायते न विद्वत्सु यः काञ्चनमिवाग्निषु॥

देवी। दिट्ठिआ परिक्खाराहणेण अज्जो वड्ढदु[3]।

(१) ननु गौतमवचनमप्यार्यो हृदये करोति।

(२) कौशिकीं तावत्पृच्छ। पश्चाद्यो मया कर्मभेदो दृष्टस्तं भणि-ष्यामि।

(३) दिष्ट्या परीक्षाराधनेनार्यो वर्द्धताम्।

गण। देवि! त्वत्परिग्रहोऽपि मे हर्षहेतुः। विदूषकं विलोक्य। गौतम! यदिदानीं ते मनसि वर्त्तते।

विदू। पढमोवदेसदंसणे पढमं बम्हणपूआ कादव्वा। सा णं वो विसुमरिदा१।

परि। अहो प्रयोगाभ्यन्तरः प्रश्नः।

सर्वे प्रहसिताः। मालविकापि स्मितं करोति।

राजा। स्वगतम्। उपात्तसारश्चक्षुषा मे स्वविषयः। यदनेन

स्मयमानमायताक्ष्याः किंचिदभिव्यक्तदशनशोभि मुखम्।
असमग्रलक्ष्यकेशरमुच्छ्वसदिव पङ्कजं दृष्टम्॥

गण। महाब्राह्मण! न खलु प्रथमं नेपथ्यसवनमिदम्। अन्यथा कथं त्वां दक्षिणीयं नार्चयिष्यामः।

विदू। मए णाम सुक्खघणगज्जिदे अन्तरिक्खे जल-पाणेण चादआइदम्२।

परि। एवमेव।

विदू। तेण हि पण्डिदपरितोसपच्चआ णं मूढा जादी। जदि अत्तभोदीए सोहणं भणिदं तदो इमं से पारितोसिअं पअच्छामि३। इति राज्ञो हस्तात्कटकमाकर्षति।

---

(१) प्रथमोपदेशदर्शने प्रथमं ब्राह्मणपूजा कर्तव्या। सा ननु वो विस्मृता।

(२) मया नाम शुष्कघनगर्जितेऽन्तरीक्षे जलपानेन चातकायितम्।

(३) तेन हि पण्डितपरितोषप्रत्यया ननु मूढा जातिः। यद्यत्र-भवत्या शोभनं भणितं तत इदमस्यै पारितोषिकं प्रयच्छामि।

देवी। चिट्ठ गुणान्तरं अजाणन्तो किं णिमित्तं तुमं आहरणं देसि[1]।

विदू। परकेरंत्ति करिअ[2]।

देवी। आचार्यं विलोक्य। अज्ज! गणदास! णं दंसिदोवदेसा दे सिस्सा?[3]।

गण। वत्से! एहि गच्छाव इदानीम्।

सहाचार्येण निष्क्रान्ता मालविका।

विदू। जनान्तिकम्। एत्तिओ मे मदिविहओ भवन्तं सेविदुम्[4]।

राजा। अलमलं परिच्छेदेन। अहं हि

भाग्यास्तमयमिवाक्ष्णोर्हृदयस्य महोत्सवावसानमिव।
द्वारपिधानमिव धृतेर्मन्ये तस्यास्तिरस्करिणीम्॥

विदू। जनान्तिकम्। साधु दरिद्दादुरो विअ वेज्जेण ओसहं उप्पादीअमाणं इच्छसि[5]।

प्रविश्य हरदत्तः।

हर। देव! मदीयमिदानीं प्रयोगमवलोकयितुं प्रसादः क्रियताम्।

राजा। स्वगतम्। अवसितो मे दर्शनार्थः। दाक्षिण्यमवलम्ब्य प्रकाशम्। ननु पर्युत्सुका एव वयम्।

हर। अनुगृहीतोऽस्मि।

---

(१) तिष्ठ गुणान्तरमजानन् किं निमित्तं त्वमाभरणं ददासि।

(२) परकीयमिति कृत्वा।

(३) आर्य! गणदास! ननु दर्शितोपदेशा ते शिष्या।

(४) एतावान्मे मतिविभवो भवन्तं सेवितुम्।

(५) साधु दरिद्रातुर इव वैद्येनौषधमुत्पाद्यमानमिच्छसि।

नेपथ्ये। जयतु जयतु देवः। उपारूढो मध्याह्नः। तथा हि

पत्रच्छायासु हंसा मुकुलितनयना दीर्घिकापद्मिनीनां
सौधान्यत्यर्थतापाद्वलभिपरिचयद्वेषिपारावतानि।
बिन्दूत्क्षेपात् पिपासुः परिसरति शिखी भ्रान्तिमद्वारियन्त्र
सर्वैरुस्रैः समग्रस्त्वमिव नृप! गुणैर्दीप्यते सप्तसप्तिः॥

विदू। अविहा अविहा। अम्हाणं भोअणबेला। अत्तभवदो उइदबेलादिक्कमेण चिकित्सआ दोसं उदाहरन्ति। हरदत्त! किं भणासि[1]।

हर। अस्ति चान्यस्य वचनावकाशोऽत्र।

राजा। हरदत्तमवलोक्य। तेन हि त्वदीयमुपदेशं श्वो द्रक्ष्यामः। विरम्यतां भवान्।

हर। यदाज्ञापयति देवः। इति निष्क्रान्तः।

देवी। णिव्वत्तेदु अज्जउत्तो मज्झसविहिम्[2]।

विदू। भोदी विसेसेण पाणभोअणं तुवरावेदु[3]।

परि। उत्थाय। स्वस्ति भवते। इति देव्या सह निष्क्रान्ता।

विदू। भो ण केवलं रूबे सिप्पे वि अदुदीआ मालबिआ[4]।

राजा। वयस्य!

अव्याजसुन्दरीं तां विज्ञानेन ललितेन योजयता।
उपकल्पितो विधात्रा बाणः कामस्य विषदिग्धः॥

---

(१) अपिहा अपिहा। अस्माकं भोजनवेला। अत्रभवत उचितवेलातिक्रमेण चिकित्सका दोषमुदाहरन्ति। हरदत्त! किं भणसि।

(२) निर्वर्तयत्वार्यपुत्रो मध्याह्नविधिम्।

(३) भवती विशेषेण पानभोजनं त्वरयतु।

(४) भो न केवलं रूपे शिल्पेऽप्यद्वितीया मालविका।

किं बहुना चिन्तयितव्योऽस्मि ते ।

विदू । भवदावि अहं । इदं विपणिकन्दू विअ मे हिअअब्भन्तरं ढज्झदि[1] ।

राजा । एवमेव । भवानस्मदर्थे त्वरताम् ।

विदू । गिह्णीदट्ठक्खणोम्हि । किं तु मेहावलीअन्द-जोण्हा विअ पराहीणदंसणा तत्तभोदी मालविआ । भवंपि सूणापरिचरो विअ गिद्धो आमिसलोलुवो भीरुओ अ । अच्चन्तादुरो विअ कज्जसिद्धिं पत्थन्तो मे रोअसि[2] ।

राजा । कथमनातुरो भविष्यामि । यदा

सर्वान्तःपुरवनिताव्यापारं प्रति निवृत्तहृदयस्य ।
सा वामलोचना मे स्नेहस्यैकायनीभूता ॥

इति निष्क्रान्ताः सर्वे ।

इति द्वितीयोऽङ्कः ।

(१) भवताप्यहम् । इदं विपणिकन्दुरिव मे हृदयाभ्यन्तरं दह्यते ।
(२) गृहीतदृक्षणोऽस्मि । किं तु मेघावलीचन्द्रज्योत्स्नेव पराधीनदर्शना तत्रभवती मालविका । भवानपि सूनापरिचर इव गृध्र आमिषलोलुपो भीरुकश्च । अत्यन्तातुर इव कार्यसिद्धिं प्रार्थयमानो मे रोचसे ।



# तृतीयोऽङ्कः ।



ततः प्रविशति परिव्राजिकायाः परिचारिका समाहितिका ।

समा । आणत्तम्हि भअवदीए । समाहिदिए ! देवस्स उववणादो बीअपूरअं गेण्हिअ आअच्छेत्ति । ता दाव पमदवणपालिअं महुअरिअं अण्णेसामि । परिक्रम्यावलोक्य च । एसा तवणीआसोअं आलोअन्ती महुअरिआ चिट्ठदि । जाव णं संभावेमि[1] ।

ततः प्रविशत्युद्यानपालिका ।

समा । उपसृत्य । आलि ! सुहो दे उज्जाणवणव्वावारो[2] ।

मधु । अम्मो समाहिदिआ ? सहि ! साअदं दे[3] ।

समा । हला भअवदी आणवेदि । अरित्तपाणिणा अम्हारिसजणेण अत्तभवं देक्खिदव्वो ता बीअपूरएण पेक्खिदुं इच्छामि त्ति[4] ।

---

(१) आज्ञप्तास्मि भगवत्या । समाहितिके ! देवस्योपवनस्थं बीजपूरकं गृहीत्वागच्छेति । तत्तावत्प्रमदवनपालिकां मधुकरिकामन्विष्यामि । एषा तपनीयाशोकमवलोकयन्ती मधुकरिका तिष्ठति । यावदेनां संभावयामि ।

(२) आलि सुखस्ते उद्यानवनव्यापारः ।

(३) अहह समाहितिका । सखि ! स्वागतं ते ।

(४) हला भगवत्याज्ञापयति । अरिक्तपाणिनास्मादृशजनेनात्रभवान्द्रष्टव्यः तद्बीजपूरकेण प्रेक्षितुम् इच्छामीति ।

मधु । णं सण्णिहिदं ज्जेव बीजपूरअम् । कहेहि अण्णोण्णसङ्घस्सिदाणं णट्टाआरिआणम् उवदेसं देक्खिअ कदरो भअवदीए पसंसिदो[1] ।

समा । दुवे वि किल आगमिणो पओअणिउणा अ । किं दु सिस्सागुणविसेसेण उण्णमिदो गणदासो[2] ।

मधु । अह मालविआगअं कोलीणं किं सुणीअदि[3] ।

समा । बाढं किल तस्सिं साहिलासो भट्टा । केवलं देवीए धारिणीए चित्तं रक्खन्तो अत्तणो पहुत्तणं ण दंसेदि । मालविआवि इमेसु दिअसेसु अणुहुदमुक्का विअ मालदीमाला मिलाअमाणा लक्खीअदि । अदो अवरं ण जाणे । विसज्जेहि मम्[4] ।

मधु । एदं साहावलम्बि बीजपूरअं गेण्ह[5] ।

समा । नाट्येन गृहीत्वा । हला तुमं वि इदो पेसलतरं साहुजणसुस्सूसाए फलं पावेहि[6] । इति प्रस्थिता ।

---

(१) ननु सन्निहितं बीजपूरकम् । कथय अन्योन्यं सङ्घर्षितानां नाट्याचार्ययोरुपदेशं दृष्ट्वा कतरो भगवत्या प्रशंसितः ।

(२) द्वावपि किल आगमिनौ प्रयोगनिपुणौ च । किं तु शिष्यागुणविशेषेणोन्नमितो गणदासः ।

(३) अथ मालविकागतं कौलीनं किं श्रूयते ।

(४) बाढं किल तस्यां साभिलाषो भर्ता । केवलं देव्या धारिण्याश्चित्तं रक्षन्नात्मनः प्रभुत्वं न दर्शयति । मालविकाप्येषु दिवसेष्वनुभूतमुक्तेव मालतीमाला म्लायमाना लक्ष्यते । अतोऽपरं न जाने । विसृज माम् ।

(५) एतच्छाखावलम्बि बीजपूरकं गृहाण ।

(६) हला त्वमपीतः पेशलतरं साधुजनशुश्रूषया फलं प्राप्नुहि ।

मधु। सहि समं ज्जेव गच्छम्ह। अहं वि इमस्स चिराअमाणकुसुमोग्गमस्स तवणीआसोअस्स दोहलणिमित्तं देवीए णिवेदेमि[1]।

समा। जुज्जदि, अहिआरो क्खु दे[2]।

इति निष्क्रान्ते।

प्रवेशकः।

ततः प्रविशति कामयमानावस्थो राजा विदूषकश्च।

राजा। आत्मानं विलोक्य।

शरीरं क्षामं स्यादसति दयितालिङ्गनसुखे
भवेत्सास्रं चक्षुः क्षणमपि न सा दृश्यत इति।
तया सारङ्गाक्ष्या त्वमसि न कदाचिद्विरहितं
प्रसक्ते निर्वाणे हृदय! परितापं व्रजसि किम्॥

विदू। अलं भवदो धीरदं उज्झिअ परिदेविदेण। दिट्ठा मए मालविआए पिअसही बउलावलिआ सुणाविदा अ अत्थं जो भवदा संदिट्ठो[3]।

राजा। ततः किमुक्तवती।

विदू। विण्णवेहि भट्टारअम्। अणुग्गिहीदम्हि इमिणा णिओएण। किं तु सा तवस्सिणी देवीए अहि-

---

(१) सखि! समं गच्छावः। अहमप्यस्य चिरायमाणकुसुमोद्गमस्य तपनीयाशोकस्य दोहदनिमित्तं देव्यै निवेदयामि।

(२) युज्यते। अधिकारः खलु ते।

(३) अलं भवतो धीरतामुज्झित्वा परिदेवितेन। दृष्टा मया मालविकायाः प्रियसखी बकुलावलिका श्राविता चार्थं यो भवता सन्दिष्टः।

(१) विज्ञापय भर्तारम्। अनुगृहीतास्म्यनेन नियोगेन।

अवरं रक्खीअमाणा रक्खिदाणं विअ णिहीणं सुहं समासादइदव्वा। तहवि जतिस्सं[1]।

राजा। भगवन्! सङ्कल्पयोने! प्रतिबन्धवत्स्वपि विषयेष्वभिनिवेश्य तथा प्रहरिष्यसि यथा जनोऽयं न कालान्तरक्षमो भवति! सविस्मयम्।

क्व रुजा हृदयप्रमाथिनी क्व च ते विश्वसनीयमायुधम्।
मृदुतीक्ष्णतरं यदुच्यते तदिदं मन्मथ! दृश्यते त्वयि॥

विदू। णं भणामि तस्सिं साहणिज्जे कज्जे किदो मए उवाअप्पोवक्खेवोत्ति। ता पज्जवत्थावेदु भवं अप्पाणं[2]।

राजा। अथेमं दिवसशेषम् उचितव्यापारविमुखेन चेतसा क्व नु यापयामि।

विदू। अज्ज एव्व पढमावदारसुहआणि रत्तकुरवआणि उवाअणं पेसिअ णववसन्तावदारव्ववदेसेण इरावदीए णिउणिआमुहेण आपत्थिदो। इच्छेमि अज्जउत्तेण सह दोलाधिरोहणं अणुभविदुं त्ति। भवदावि संपदिस्सादम्। ता पमदवणं एव्व गच्छम्ह[3]।

---

किन्तु सा तपस्विनी देव्याधिकतरं रक्ष्यमाणा रक्षितानामिव निधीनां सुखं समासादयितव्या। तथापि यतिष्ये।

(२) ननु भणामि तस्मिन् साधनीये कार्ये कृतो मयोपायोपक्षेप इति। तत्पर्यवस्थापयतत्रभवानात्मानम्।

(३) अद्यैव प्रथमावतारसुभगानि रक्तकुरवकाण्युपायनं प्रेष्य नववसन्तावतारव्यपदेशेनेरावत्या निपुणिकामुखेनाख्यातः। इच्छा-म्यार्यपुत्रेण सह दोलाधिरोहणमनुभवितुमिति। भवतापि सम्प्रतिश्रुतं तत्प्रमदवनमेव गच्छावः।

राजा। न क्षममिदम्।

विदू। कहं विअ[1]।

राजा। वयस्य निसर्गनिपुणाः स्त्रियः। कथं मामन्य संक्रान्तहृदयमुपलालयन्तमपि ते सखी न लक्षयिष्यति। अतः पश्यामि

उचितः प्रणयो वरं विहन्तुं
बहवः खण्डनहेतवो हि दृष्टाः।
उपचारविधिर्मनस्विनीनां
न तु पूर्व्वाभ्यधिकोऽपि भावशून्यः॥

विदू। णारिहदि भवं अन्तेउरादुदं दक्खिणं एक्कपदे पिड्ढोकादुम्[2]।

राजा। विचिन्त्य। तेन हि प्रमदवनमार्गमादेशय।

विदू। इदो इदो भवम्[3]।

उभौ परिक्रामतः।

विदू। णं एदं पमदवणं पवणवलचलाहिं पल्लवङ्गुलीहिं तुअरावेदि विअ भवन्तं पविसिदुम्[4]।

राजा। स्पर्शं रूपयित्वा। अभिजातः खलु वसन्तः। सखे! पश्य

उन्मत्तानां श्रवणसुभगैः कूजितैः कोकिलानां
सानुक्रोशं मनसिजरुजः सह्यतां पृच्छतेव।

---

(१) कथमिव।

(२) नार्हति भवानन्तःपुरस्थितं दाक्षिण्यमेकपदे दूरतः कर्त्तुम्।

(३) इत इतो भवान्।

(४) नन्वेतत्प्रमदवनं पवनबलचलाभिः पल्लवाङ्गुलीभिस्त्वरयतीव भवन्तं प्रवेष्टुम्।

अङ्के चूतप्रसवसुरभिर्दक्षिणो मारुतो मे
सान्द्रस्पर्शः करतल इव व्याप्टतो माधवेन ॥

विदू । पविस णिव्वुदिलाहाअ[1] ।

उभौ प्रविशतः ।

विदू । अवधाणेण दिट्ठिं देहि । एदं क्खु भवन्तं विअ लोहइदुकामाए पमदवणलच्छीए जुवदीवेसलज्जावअत्तिअं कुसुमणेवत्थं गहिदम्[2] ।

राजा । ननु विस्मयादवलोकयामि ।

रक्ताशोकलताविशेषितगुणो बिम्बाधरालक्तकः
प्रत्याख्यातविशेषकं कुरबकं श्यामावदातारुणम् ।
आक्रान्ता तिलकक्रियापि तिलकैर्लग्नद्विरेफाञ्जनैः
सावज्ञेव मुखप्रसाधनविधौ श्रीर्माधवी योषिताम् ॥

इत्युद्यानशोभां निरूपयतः ।

प्रविष्टा पर्युत्सुका मालविका ।

माल । अविण्णादहिअअं भट्टारअं अहिलसन्ती अत्तणोविं दाव लज्जेमि । कुदो विहवो सिणिद्धस्स सहीजणस्स वुत्तन्त आचक्खिदुम् । ण आणे अप्पडिआरगुरुअं वेदणं कित्तिअं कालं मअणो मं णइस्सदि त्ति । कतिचित्पदानि गत्वा । कहिं

(१) प्रविश निर्वृतिलाभाय ।

(२) अवधानेन दृष्टिं देहि । एतत्खलु भवन्तमिव लोभयितुकामया प्रमदवनलक्ष्म्या युवतिवेशलज्जापयितृकं कुसुमनेपथ्यं गृहीतम् ।

(१) अविज्ञातहृदयं भट्टारकमभिलषन्त्यात्मनोऽपि तावल्लज्जामि । कुतो विभवः स्निग्धस्य सखीजनस्य वृत्तान्तमाख्यातुम् । न जानेऽप्रतिकारगुरुकां वेदनां कियत्कालं मदनो मां नेष्यतीति । कुत्र तु

ण पत्थिदम्हि। विचिन्त्य। आ सन्दिट्ठम्हि देवीए। मालविए! गोदमचावलादो दोलापरिब्भट्ठाए सरुजो मह चलणो। ण सक्कुणोमि। तुमं दाव तवणीआसोअस्स दोहलं णिवट्टेहि। जइ सो पञ्चरत्तब्भन्तरे कुसुमं दंसेदि तदो तुह। इत्यन्तरा निःश्वस्य। अहिलासपूरइत्तिअं पसादं दाबइस्सं त्ति। ता जाव णिओअभूमिं पढमं गदा होमि। दाव अणुपदं मम चलणालङ्कारहत्थाए बउलावलिआए आअन्तव्वम्। ता दाव परिदेविस्सं विस्सद्धं मुहुत्तअं[1]। इति परिक्रामति।

विदू। दृष्ट्वा। ही ही एदं खु सीहुपाणुव्वेजिअस्स मच्छण्डिआ उवणदा[2]।

राजा। अये किमेतत्।

विदू। एसा णादिपरिक्खिदवेसा उस्सुअवअणा एआइणी मालविआ अदूरे बट्टदि[3]।

राजा। सहर्षम्। कथं मालविका।

विदू। अह इम्[4]।

(१) प्रस्थितास्मि। आ संदिष्टास्मि देव्या। गौतमचापलाद्दोलापरिभ्रष्टायाः सरुजौ मम चरणौ। न शक्नोमि त्वं तावत्तपनीयाशोकस्य दोहदं निवर्तय, यदि स पञ्चरात्राभ्यन्तरे कुसुमं दर्शयति ततस्त्वमभिलाषपूरयितृकं प्रसादं दापयिष्यामीति। यावन्नियोगभूमिं प्रथमं गता भवामि। तावदनुपदं मम चरणालङ्कारहस्तया बकुलावलिकया आगन्तव्यम्। तत्परिदेविष्ये तावद्विस्रब्धं मुहूर्तकम्।

(२) आश्चर्यम् एतत्खलु सीधुपानोद्वेजितस्य मत्स्यण्डिकोपनता।

(३) एषा नातिपरिष्कृतवेशोत्सुकवदना एकाकिनी मालविका अदूरे वर्तते। (४) अथ किम्।

राजा। शक्यमिदानीं जीवितमवलम्बयितुम्।

त्वदुपलभ्य समीपगतां प्रियां
हृदयमुच्छ्वसितं मम विक्लवम्।
तरुवृतां पथिकस्य जलार्थिनः
सरितमारसितादिव सारसात्॥

क्व तत्रभवती।

विदू। एसा तरुराइमज्झादो णिक्कन्ता इदो ज्जेव परिवट्टन्ती दीसदि[1]।

राजा। पश्याम्येनाम्।

विपुलं नितम्बदेशे मध्ये क्षामं समुन्नतं कुचयोः।
अत्यायतं नयनयोर्मम जीवितमेतदायाति॥

सखे! पूर्वस्मादवस्थान्तरमुपारूढ़ा तत्रभवती। तथा हि

शरकाण्डपाण्डुगण्डस्थलेयमाभाति परिमिताभरणा।
माधवपरिणतपत्रा कतिपयकुसुमेव कुन्दलता॥

विदू। एसावि भवं विअ मअणव्वाहिणा परिमिट्ठा भविस्सदि[2]।

राजा। सौहार्दमेवं पश्यति।

माल। अअं सो ललिदसुउमारदोहलापेक्खी अगिहीदकुसुमणेवत्थो उक्कण्ठिदाए मए सोअं अणुकरेदि।

---

(१) एषा तरुराजिमध्यान्निष्क्रान्ता इत एव परिवर्तमाना दृश्यते।
(२) एषापि भवानिव मदनव्याधिना परिमृष्टा भविष्यति।
(३) अयं सः ललितसुकुमारदोहदापेक्षी अगृहीतकुसुमनेपथ्य

जाव से पच्छाअसीअले सिलापट्टए णिसस्सा अत्ताणं विणोदेमि[1] ।

वि । सुदं भवदा उक्कण्ठिदम्हित्ति अत्तभोदी मन्तेदि[2] ।

राजा । नैतावता भवन्तं प्रसन्नतर्कं मन्ये । कुतः ।

वोढा कुरवकरजसां किसलयपुटभेदशीकरानुगतः ।
अनिमित्तोत्कण्ठामपि जनयति मनसो मलयवातः ॥

मालविकोपविष्टा ।

राजा । सखे ! इतस्तावदावां लतान्तरितौ भवावः ।

विदू । इरावदिं विअ अदूरे पेक्खामि[3] ।

राजा । न हि कमलिनीं दृष्ट्वा ग्राहमवेक्षते मतङ्गजः । इति विलोकयन् स्थितः ।

माल । हिअअ ! णिरवलम्बणादो अदिभूमिलङ्घिणो मणोरहादो विरम । किं मं आआसिअ[4] ।

विदूषको राजानं वीक्ष्यते ।

राजा । पश्य सखे ! स्नेहस्य ।

औत्सुक्यहेतुं विवृणोषि न त्वं
तत्त्वावबोधैकफलो न तर्कः ।
तथापि रम्भोरु ! करोमि लक्ष्य
मात्मानमेषां परिदेवितानाम् ॥

---

उत्कण्ठितताया मम शोकमनुकरोति । यावदस्य प्रच्छायशीतले शिलापट्टके निषण्णा आत्मानं विनोदयामि ।

(२) श्रुतं भवतोत्कण्ठितास्मीत्यत्रभवती मन्त्रयते ।

(३) इरावतीमिवादूरे प्रेक्षे ।   [किं मामायासयसि ।

(४) हृदय ! निरवलम्बनादतिभूमिलङ्घिनो मनोरथाद्विरम ।

विदू। सम्पदं भवदो णिस्संसअं भविस्सदि। एसा अचिरदमअणसंदेसा बिविक्ते णं बउलावलिआ उवगदा[1]।

राजा। अपि स्मरेदस्मदभ्यर्थनाम्?।

विदू। किं दाणिं एसा दासीए दुहिदा दाव गरुअं संदेसं बिसुमरेदि?[2]।

प्रविश्य चरणालंकारहस्ता बकुलावलिका।

बकुला। अवि सुहं सहीए[3]।

माल। अम्मो बउलावलिआ उवट्ठिदा?। सागदं दे, उवविस[4]।

बकुला। उपविश्य। हला तुमं दाणिं जोग्गदाए णिउत्ता। एक्कं दे चलणं उवणेहि जाव सालत्तअं सणेउरं करेमि[5]।

माल। स्वगतम्। हिअअ! अलं सुहिदाए। उवट्ठिदो अअं विहवो। कहं दाणिं अत्ताणं मोचेअम्। अहवा एदं एव्व मे मिच्चुमण्डणं भविस्सदि[6]।

---

(१) साम्प्रतं भवतः निःशंसयं भविष्यति।

(२) किमिदानीमेषा दास्या दुहिता तावद्गुरुकं संदेशं विस्मरति।

(३) अपि सुखं सख्यै।

(४) अहह बकुलावलिकोपस्थिता। स्वागतं ते उपविश।

(५) हला त्वमिदानीं योग्यतया नियुक्ता। एकं ते चरणमुपनय यावत्सालक्तकं सनूपुरं करोमि।

(६) हृदय! अलं सुखितया। उपस्थितोऽयं विभवः। कथमिदानीमात्मानं मुञ्चेयम्। अथ वैतदेव मे मृत्युमण्डनं भविष्यति।

बकुला। किं विआरेसि। उस्सुआ क्खु इमस्स तवणीआसोअस्स कुसुमोग्गमे देवी[1]।

राजा। कथमशोकदोहदनिमित्तोऽयमारम्भः।

विदू। किं क्खु ण आणासि। अकारणादो देवी इमं अन्तेउरणेवत्थेण जोजइस्सदि त्ति[2]।

माल। पादमुपहरति। हला मरिसेहि दाणिम्[3]।

बकुला। अइ सरीरंसि मे[4]। नाट्येन चरणसंस्कारमारभते।

राजा।

चरणान्तनिवेशितां प्रियायाः
सरसां पश्य वयस्य! रागलेखाम्।
प्रथमामिव पल्लवप्रसूतिं
हरदग्धस्य मनोभवद्रुमस्य॥

विदू। चलणाणुरूवो तत्तभोदीए अहिआरो उवक्खित्तो[5]।

राजा। सम्यगाह भवान्।

नवकिसलयरागेणाग्रपादेन बाला-
स्फुरितनखरुचा द्वौ हन्तुमर्हत्यनेन।

---

(१) किं विचारयसि। उत्सुका खल्वस्य तपनीयाशोकस्य कुसुमोद्गमे देवी।

(२) किं खलु न जानासि। अकारणाद् देवी इमामन्तःपुरनेपथ्येन योजयिष्यतीति।

(३) हला मर्षयेदानीम्।

(४) अयि शरीरमसि मे।

(५) चरणानुरूपस्तत्रभवत्या अधिकारः उपक्षिप्तः।

अकुसुमितमशोकं दोहदापेक्षया वा
प्रणमितशिरसं वा कान्तमार्द्रापराधम्।

विदू। पारइस्ससि तत्तभोदीए अवरद्धुं ?[१]।

राजा। मूर्ध्ना प्रतिगृहीतं वचः सिद्धिदर्शिनो ब्राह्मणस्य।

ततः प्रविशति युक्तमदा इरावती चेटी च।

इरा। हञ्जे णिउणिए! सुणामि बउलो मदो किल इत्थिआजणस्स विसेसमण्डणं त्ति। अवि सच्चो अअं लोअवादो[२]।

निपु। पढमं लोअवादो एव्व सम्पदं सच्चो संवुत्तो[३]।

इरा। अलं मह सिणेहेण। कहेहि कुदो दाणिं अवगमिदव्वं दोलाघरं पढमागदो भट्टा ण वेत्ति[४]।

निपु। भट्टिणीए अक्खलिददादो पणआदो[५]।

इरा। अलं सेवाए। मज्झत्थदं परिगह्णिअ भणाहि[६]।

निपु। णं वसन्तोस्सवुवाअणलोलुवेण अज्जगोदमेण कहिअं। तुवरदु भट्टिणी[७]।

---

(१) पारयिष्यसि तत्रभवत्यामपराद्धुम् ?।

(२) सखि! निपुणिके! शृणोमि बकुलो मदः किल स्त्रीजनस्य विशेषमण्डनमिति। अपि सत्य एषः लोकवादः।

(३) प्रथमं लोकवाद एव साम्प्रतं सत्यः संवृत्तः।

(४) मयि स्नेहेनालम्। कथय कुत इदानीमवगन्तव्यं दोलागृहं प्रथममागतो भर्त्ता न वेति।

(५) भट्टिन्याः अस्खलितात् प्रणयात्।

(६) अलं सेवया। मध्यस्थतां परिगृह्य भण। [भट्टिनी।

(७) ननु वसन्तोत्सवोपायनलोलुपेनार्य्यगौतमेन कथितम्। त्वरतां

इरा । अवस्थासदृशं परिक्रम्य । हञ्जे मदेण गिलाअमाणं अत्ताणं अज्जउत्तस्स दंसणे हिअअं तुवरावेदि चलणा उण ण ओसरन्ति[1] ।

निपु । णं संपत्तम्ह दोलाघरअं[2] ।

इरा । णिउणिए ! अज्जउत्तो एत्थ ण दीसदि[3] ।

निपु । णं भट्टिणी आलोएदु । परिहासणिमित्तं कहिंपि गूढेण भट्टिणा होदव्वम् । अम्हेवि इमं पिअङ्गुलदापरिक्खित्तं असोअसिलापट्टअं पविसामो[4] ।

इरा । तहा[5] ।

निपु । विलोक्य । आलोअदु भट्टिणी चूदङ्कुरं विचिणन्तीणं अम्हाणं पिपीलिआहिं दंसिदं[6] ।

इरा । किं विअ एदं ?[7] ।

निपु । एसा असोअपादवच्छाआए मालविआए बउलावलिआ चलणालङ्कारं णिवत्तेदि[8] ।

---

(१) सखि ! मदेन ग्लायमानमात्मानमार्य्यपुत्रस्य दर्शने हृदयं त्वरयति, चरणौ पुनः न प्रसरतः ।

(२) ननु संप्राप्ते स्वो दोलागृहकम् ।

(३) निपुणिके ! आर्य्यपुत्रः अत्र न दृश्यते ।

(४) ननु भर्त्र्यवलोकयतु । परिहासनिमित्तं कुत्रापि गूढेन भर्त्रा भवितव्यम् । आवामपीदं प्रियङ्गुलतापरिक्षिप्तमशोकशिलापट्टकं प्रविशावः ।

(५) तथा । [ कामिदंष्टम् ।

(६) आलोकतां भर्त्री चूताङ्कुरं विचिन्वत्योरावयोः पिपीलि-

(७) किमिवैतत् ? । [ चालङ्कारं निर्वर्त्तयति ।

(८) एषाशोकपादपच्छायायां मालविकाया बकुलावलिका चर-

इरा। शङ्कां रूपयित्वा। अभूमी इअं मालविआए। कहं एत्थ तक्केसि१।

निपु। तक्केमि दोलापरिब्भंसिदसहजचलणाए देवीए असोअदोहलाधिआरे मालविआ णिउत्तेत्ति। अणहा कहं देवी सअंधारिदं एदं णेउरजुअलं परिअणस्स अब्भणुजाणिस्सदि२।

इरा। महदी मे संभावणा३।

निपु। किं ण अण्णेसीअदि भट्टा४।

इरा। हल्ले मे चलणा अग्गदो ण पवट्टन्ति। मदो मं विआरेदि। आसङ्किदस्स दाव अन्तं गमिस्सं५।

मालविकां निरूप्यात्मगतम्। ठाणे क्खु कादरं मे हिअअं६।

बकुला। चरणं दर्शयति। किंवि? रोअदि दे राअरेहाविण्णासो७।

माल। अत्तणो चलणंत्ति लज्जेमि णं पसंसिदुं। केण? सिप्पसाहणकलाए एव्वं अभिणीदासि८।

---

(१) अभूमिरियं मालविकायाः। कथमत्र तर्कयसि।

(२) तर्कयामि दोलापरिभ्रष्टसहजचरणाया देव्या अशोकदोहदाधिकारे मालविका नियुक्तेति। अन्यथा कथं देवी स्वयंधारितमेतत् नूपुरयुगलं परिजनस्याभ्यनुज्ञास्यति।

(३) महती मे सम्भावना। (४) किं नान्विष्यते भर्त्ता।

(५) सखि! मम चरणावग्रतो न प्रवर्त्तेताम्। मदो मां विकारयति। आशङ्कितस्य तावदन्तं गमिष्यामि।

(६) स्थाने खलु कातरं मे हृदयम्।

(७) किमपि? रोचते ते रागरेखाविन्यासः।

(८) आत्मनश्चरणमिति लज्जाम्येतत्प्रशंसितुम्। केन? शिल्पसाधनकलायामेवमभिनीतासि।

बकुला । एत्थ क्खु, भट्टिणो सिस्सम्हि[1] ।

विदू । तुवरेहि दाणिं गुरुदक्खिणाए[2] ।

माल । दिट्ठिआ ण गव्विदासि[3] ? ।

बकुला । उवदेसाणुरूवे चलणे लम्भिअ दाणिं गव्विदा भविस्सं । रागं विलोक्यात्मगतम् । हन्त सिद्धो मे दप्पो । प्रकाशम् । सहि एक्कस्स अवसिदो रागणिक्खेवो । केवलं मुहमारुदो लम्भइदव्वो । अह वा पवादं एव्व एदं ठाणं[4]!

राजा । सखे पश्य पश्य ।

आर्द्रालक्तकमस्याश्चरणं मुखमारुतेन शोषयतः ।

प्रतिपन्नः प्रथमतरः संप्रति सेवावकाशो मे ॥

विदू । कुदो दे अणुसओ ? । एदं भवदा चिरकमेण अणुभ विदव्वं[5] ।

बकुला । सहि अरुणं सदपत्तं विअ सोहदि दे चलणं । सव्वहा भट्टिणो अङ्कपरिवट्टिणी होहि[6] ।

इरावती निपुणिकामवेक्षते ।

राजा । ममेयमाशीः ।

---

(१) अत्र खलु भर्तुः शिष्यास्मि ।

(२) त्वरयस्वेदानीं गुरुदक्षिणायै ।

(३) दिष्ट्या न गर्वितासि ? ।

(४) उपदेशानुरूपे चरणे लब्ध्वा इदानीं गर्विता भविष्यामि । हन्त सिद्धो मे दर्पः । सखि ! एकस्य ते चरणस्यावसितो रागनिक्षेपः । केवलं मुखमारुतो लम्भयितव्यः । अथ वा प्रवातमेवैतत्स्थानम् ।

(५) कुतस्तेऽनुशयः । एतद्भवता चिरक्रमेणानुभवितव्यम् ।

(६) सखि ! अरुणं शतपत्रमिव शोभते ते चरणम् । सर्वथा भर्तुरङ्कपरिवर्तिनी भव ।

माल । हला मा अविणीअं मन्तेहि[1] ।

बकुला । मन्तिदव्वं एव्व मए मन्तिदं[2] ।

माल । पिआ क्खु अहं तव[3] ।

बकुला । ण केवलं मम[4] ।

माल । कस्स ? वा अस्सस्स[5] ।

बकुला । गुणेसु अहिणिवेसिणो भट्टिणोवि[6] ।

माल । अलिअं मन्तेसि । एदं एव्व मइ णत्थि[7] ।

बकुला । सव्वं तुइ णत्थि । भट्टिणो किसेसु सुन्दरपाण्डुरेसु दीसइ अङ्गेसु[8] ।

निपु । पढमं गणिदं विअ हदासाए उत्तरं[9] ।

बकुला । अणुराओ अणुराएण परिक्खिदव्वोत्ति सुअणवअणं पमाणं करेहि[10] ।

माल । किं अत्तणो छन्देण मन्तेसि[11] ? ।

बकुला । ण हि ण हि । भट्टिणो क्खु एदाणि पणअमिदुआणि अक्खराणि विम्मेरिदाणि[12] !

---

(१) हला मा अविनीतं मन्त्रयस्व ।

(२) मन्त्रयितव्यमेव मया मन्त्रितम् ।

(३) प्रिया ! खल्वहं तव । (४) न केवलं मम ।

(५) कस्य वान्यस्य ? । (६) गुणेष्वभिनिवेशिनो भर्तुरपि ।

(७) अलीकं मन्त्रयसे । एतदेव मयि नास्ति ।

(८) सर्वं त्वयि नास्ति । भर्तुः कृशेषु सुन्दरपाण्डुरेषु दृश्यतेऽङ्गेषु ।

(९) प्रथमं गणितमिव हताशाया उत्तरम् ।

(१०) अनुरागोऽनुरागेण परीक्षितव्य इति सुजनवचनं प्रमाणं कुरु ।

(११) किमात्मनः छन्देन मन्त्रयसे ।

(१२) न हि न हि । भर्तुः खल्वेतानि प्रणयमृदुकान्यक्षराणि विम्रेरितानि ।

माल। हला देवीं चिन्तिअ ण मे हिअअं विस्ससदि[1]।

बकुला। मुद्धे! भमरसंबाधो अत्थि त्ति वसन्तावदार-संभूदो किं ण णवचूदप्पसवो ओदंसणिज्जो[2]।

माल। तुमं जाव दुज्जादे गच्छन्तस्स सहाइणी होहि[3]।

बकुला। विमद्दसुरही बउलावलिआ क्खु अहं[4]।

राजा। साधु बकुलावलिके! साधु

भावज्ञानानन्तरं प्रस्तुतेन
प्रत्याख्याने दत्तयुक्तोत्तरेण।
वाक्येनेयं स्थापिता स्वे निदेशे
स्थाने प्राणाः कामिनां दूत्यधीनाः।

इरा। हञ्जे पेक्ख कारिदं एव्व बउलावलिए एदस्सिं पदं मालविआए[5]।

निपु। भट्टिणि! णिव्विआरस्स अधिआरस्स उइदोव-देसो[6]।

इरा। ठाणे क्खु पङ्किदं मे हिअअं। गिह्णीदत्था अणन्तरं चिन्तइस्सं[7]।

(१) हला देवीं चिन्तयित्वा न मे हृदयं विश्वसिति।

(२) मुग्धे! भ्रमरसंबाधोऽस्तीति किं न वसन्तावतारसंभूतः नवचूतप्रसवोऽवतंसनीयः।

(३) त्वं यावत् दुर्ज्ञाते गच्छतः सहायिनी भव।

(४) विमर्द्दसुरभि बकुलावलिका खल्वहम्। [विकायाः।

(५) सखि! प्रेक्षस्व कारितमेव बकुलावलियैतस्मिन् पदं माल-

(६) भट्टिनि! निर्विकारस्याधिकारस्योचितोपदेशः।

(७) स्थाने खलु शङ्कितं मे हृदयम्। गृहीतार्थाऽनन्तरं चिन्तयिष्यामि।

बकुला। एसोम्हि दे संवुत्तपरिकम्मो चलणो जाव णं वि सणेउरं करेमि। नाट्येन नूपुरयुगलमामुच्य। हला उट्ठे-हि अणुचिट्ठ देवीए असोअस्स विआसन्तिअं णिओअं[1]।

उभे उत्तिष्ठतः।

इरा। सुदो देवीए णिओओत्ति! भोदु दाणिम्[2]।

बकुला। एसो उवारूढ़राओ उवभोगक्खमो पुरदो दे चिट्ठदि[3]।

माल। सहर्षम्। किं भट्टा?[4]।

बकुला। सस्मितम्। ण दाव भट्टा। असोअसाहाव-लम्बी गुच्छओ ओदंसेहि दाव णं[5]।

मालविका विषादं नाटयति।

विदू। किं सुदं भवदा?[6]।

राजा। सखे! पर्य्याप्तमेतावता कामिनाम्।

अनातुरोत्कण्ठितयोः प्रसिध्यता
समागमेनापि रतिर्न मां प्रति।
परस्परप्राप्तिनिराशयोर्वरं
शरीरनाशोऽपि समानुरागयोः॥

---

(१) एषोऽस्मि ते संवृत्तपरिकर्मा चरणः यावत् एनम् अपि सनूपुरं करोमि। हला उत्तिष्ठानुतिष्ठ देव्या अशोकस्य विकासवितकं नियोगम्।

(२) श्रुतो देव्या नियोग इति। भवत्विदानीम्।

(३) एष उपारूढरागः उपभोगक्षमः पुरतस्ते तिष्ठति।

(४) किं भर्त्ता।

(५) न तावद्भर्त्ता। अशोकशाखावलम्बी गुच्छकः अवतंसय ताव-देनम्।

(४) किं श्रुतं भवता?।

मालविका । रचितपल्लवावतंसा स्तीकमशोकाय पादं प्रहिणोतीति ।

राजा । वयस्य !

आदाय कर्णकिसलयमस्मादियमत्र चरणमर्पयति ।
उभयोः सदृशविनिमयादात्मानं वञ्चितं मन्ये ॥

माल । वामो क्खु एसो असोओ जो व्वञ्जअं पमाणीकदुय कुसुमुग्गमं ण दंसेदि अवि णाम अम्हाणं सम्भावणा सफला हवे ?[1] ।

वकुला । हला णत्थि दे दोसो अअं ज्जेव णिग्गुणो असोओ कुसुमुग्गममन्थरो हवे जो दे चलणसक्कारं लम्भितः[2]।

राजा । अनेन तनुमध्यया मुखरनूपुराराविणा
नवाम्बुरुहकोमलेन चरणेन सम्भावितः ।
अशोक ! यदि सद्य एव मुकुलैर्न सम्पत्स्यसे
मुधा वहसि दोहदं ललितकामिसाधारणम् ॥

सखे ! वचनावकाशपूर्व्वकं प्रवेष्टुमिच्छामि।

विदू । एहि णं परिहासइस्सं[3] ।

उभौ प्रवेशं कुरुतः ।

निपु । भट्टिणि ! भट्टिणि ! भट्टा एत्थ पविसदि[4] ।

इरा । एदं मम पढमं चिन्तिदं हिअएण[5] ।

---

(१) वामः खलु एष अशोको यो व्यञ्जकं प्रमाणीकृत्य कुसुमोद्गमं न दर्शयति । अपि नामावयोः सम्भावना सफला भवेत् ? ।

(२) हला नास्ति । ते दोषः । अयमेव निर्गुणोऽशोको यदि कुसुमोद्गमनमन्थरो भवेद्यस्ते चरणसत्कारं लम्भितः ।

(३) एह्येनां परिहासयिष्यामि ।

(४) भट्टिनि ! भट्टिनि ! भर्त्तात्र प्रविशति ।

(५) एतन्मम प्रथम चिन्तितं हृदयेन ।

विदू। उपेत्य। भोदि ! जुत्तं णाम अत्तभोदो पिअवअस्से असोओ वामपाएण ताडइदुं ?[१]।

उभे। ससंभ्रमम्। अम्हो भट्टा। जेदु जेदु भट्टा[२]।

विदू। बउलावलिए ! गिहीदत्थाए तुए अत्तभोदी ईदिसं अविणअं करन्ती कीस ण णिवारिदा[३]।

मालविका भयं रूपयति।

निपु। भट्टिणि ! पेक्ख किं पउत्तं अज्जगोदमेण[४]।

इरा। कहं क्खु बम्हबन्धू असरणा जीविस्सदि[५]।

बकुला। अज्ज एसा देवीए णिओअं अणुचिट्ठदि। एदस्सिं अदिक्कमे परवदी इअं। पसीददु भट्टा[६]।

इति आत्मना सहैनां प्रणिपातयति।

राज। यद्येवमनपराद्धासि। उत्तिष्ठ भद्रे !। हस्तेन गृहीतोत्थापयति।

विदू। जुज्जदि देवी एत्थ माणइदव्वा[७]।

राजा। विहस्य।

किसलयमृदोर्विलासिनि कठिने निहितस्य पादपस्कन्धे।
चरणस्य न ते बाधा संप्रति वामोरु ! वामस्य।

---

(१) भवति ! युक्तं नामात्रभवति प्रियवयस्ये अशोको वामपादेन ताडयितुम् ?।

(२) अहह भर्त्ता। जयति जयति भर्त्ता।

(३) बकुलावलिके ! गृहीतार्थया त्वयात्रभवतीदृशमविनयं कुर्वती कस्मात् न निवारिता।

(४) भट्टिनि ! प्रेक्षस्व किं प्रवृत्तमार्य्यगौतमेन।

(५) कथं खलु ब्राह्मणबन्धुरन्यथा जीविष्यति।

(६) आर्य्य ! एषा देव्या नियोगमनुतिष्ठति। एतस्मिन्नतिक्रमे परवतीयम्। प्रसीदतु भर्त्ता।  (७) युज्यते देव्यत्र मानयितव्या।

मालविका लज्जां नाटयति।

इरा। अहो णवणीदकप्पहिअओ अज्जउत्तो[1]।

माल। बउलावलिए! एहि अणुचिट्ठिदं अत्तणो णिओअं देवीए णिवेदेम्ह[2]।

बकुला। विण्णवेहि भट्टारं विसज्जेहि त्ति[3]।

राजा। भद्रे! यास्यसि। मम तावदुत्पन्नावसरमर्थित्वं श्रूयताम्।

बकुला। अवहिदा सुणाहि। आणवेदु भट्टा[4]।

राजा।

धृतपुष्पमयमपि जनो बध्नाति न तादृशं चिरात्प्रभृति।
स्पर्शामृतेन पूरय दोहदमस्याप्यनन्यरुचेः॥

इरा। सहसोपसृत्य। पूरेहि पूरेहि। असोओ कुसुमं ण दंसेदि। अअं क्खु उण उत्तम्भिदो एव्व[5]।

सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।

राजा। अपवार्य्य। वयस्य! का प्रतिपत्तिरत्र?

विदू। किं अण्णं? जङ्घाबलं एव्व[6]।

---

(१) अहो नवनीतकल्पहृदय आर्य्यपुत्रः।

(२) बकुलावलिके! एह्यनुष्ठितमात्मनो नियोगं देव्यै निवेदयावः।

(३) विज्ञापय भर्त्तारं विसर्जयेति।

(४) अवहिता शृणु आज्ञापयतु भर्त्ता।

(५) पूरय पूरय। अशोकः कुसुमं न दर्शयति। अयं खलु पुनरुत्त-म्भित एव।

(६) किमन्यत्? जङ्घाबलमेव।

इरा। साहु बउलावलिए! साहु तुए उवकन्तं दाणिं करेहि सफलप्पत्थणं अज्जउत्तं[1]।

उभे। पसीददु भट्टिणी। काओ वअं भट्टिणो पणअपरिग्गहस्स[2]। इति निष्क्रान्ते २।

इरा। अविस्ससणीआ पुरीसा। अत्तणो वञ्चणवअणं पमाणीकरिअ अहिकिदिप्पाए पिअवरिणीए हिअअसल्लं किदम्। एव्वं ण विण्णादं मए वाहजणगहीदचित्ताए अविसङ्किदाए हरिणीए विअ विणासोत्ति[3]।

विदू। जनान्तिकम्। भो पडिवज्जेहि किंपि उत्तरं। किं ण भणइ उदकान्दमूले विमद्दिदे विमद्दिदेण कुम्भीलेण सन्धिच्छेदो सिक्खिदव्वोत्ति वत्तव्वं होइ[4]।

राजा। सुन्दरि! न मे मालविकया कश्चिदर्थः। मया त्वं चिरयसीति यथा कथञ्चिदात्मा विनोदितः।

इरा। अविस्ससणीओसि। ण मए विण्णादं ईरिसं

---

(१) साधु बकुलावलिके! साधूपक्रान्तमिदानीम्। कुरु सफलप्रार्थनमार्यपुत्रम्।

(२) प्रसीदतु भट्टिनी। के आवां भर्तुः प्रणयपरिग्रहस्य।

(३) अविश्वसनीयाः पुरुषाः। आत्मनो वञ्चनवचनं प्रमाणीकृत्याधिक्षिप्तायाः प्रियवरिण्याः हृदयशल्यं कृतम्। एवं न विज्ञातं मया, व्याधजनगृहीतचित्ताया अविशङ्किताया हरिण्या इव विनाश इति।

(४) भो प्रतिपद्यस्व किमप्युत्तरम्। किं न भणति उदकान्तमूले विमर्दिते विमर्दितेन कुम्भीलेन सन्धिच्छेदः शिक्षितव्य इति वक्तव्यं भवति।

(५) अविश्वसनीयोऽसि। न मया विज्ञातमीदृशो विनोदहस्तात्मा आर्यपुत्रेणोपलब्धः इति। अन्यथा दुःखव्यापारिकैवं न करोमि।

विणोदअत्तन्तं अज्जउत्तेण जबलइं त्ति । अधवा दुक्ख-
व्वाबारिणी एव्वं ण करेमि[१] ।

विदू । मा दाव अत्तभोदो दक्खिण्णस्स उवरोहं करे-
हि समीवदिट्ठेण देवीए परिचारिइत्थिआजणेण संक-
हावि जइ वारीअदि एत्थ तुमं एव्व पमाणं[२] ।

इरा । णं संकहा णाम होदु किंति अत्ताणं आआस-
इस्सं[३] । इति रुष्टा प्रस्थिता ।

राजा । अनुसरन् । प्रसीदतु भवती ।

इरावती रसनासंदानितचरणा व्रजत्येव ।

राजा – सुन्दरि ! न शोभते प्रणयिजने निरपेक्षता ।

इरा । सठ ! अविस्ससणीओसि[४] ।

राजा । शठ इति मयि तावदस्तु ते
परिचयवत्यवधीरणा प्रिये ! ।
चरणपतितया न चण्डि ! तां
विसृजसि मेखलयापि याचिता ।

इरा । इअं पि हदासा तुमं एव्व अणुसरदि[५] ।

रसनामादाय राजानं ताडयितुमिच्छति ।

राजा वयस्य ! एषेरावती ।
बाष्पासारा हेमकाञ्चीगुणेन
श्रोणीबिम्बादप्युपेक्षाच्युतेन ।

---

(२) मा तावत्तत्रभवतो दाक्षिण्यस्योपरोधं कुरु समीपदृष्टेन देव्याः परिचारिकास्त्रीजनेन संकथापि यदि वार्य्यते अत्र त्वमेव प्रमाणम् ।

(३) ननु संकथा नाम भवतु किमित्यात्मानमायासयिष्यामि ।

(४) शठ ! अविश्वसनीयोऽसि ।

(५) इयमपि हताशा त्वामेवानुसरति ।

चण्डी चण्डं हन्तुमभ्युद्यता मां
विद्युद्दाम्ना मेघराजीव विन्ध्यम् ॥

इरा। किं एव्वं भूयोवि मं अवधीरिदं करेहि[1]।

राजा। सस्मितं हस्तमवलम्बयति।

अपराधिनि मयि दण्डं संहरसि समुद्यतं कुटिलकेशि !।
वर्द्धयसि विलसितं त्वं दासजनायात्र कुप्यसि च ॥
नूनमिदानीमनुज्ञातम्। इति पादयोः पतति।

इरा। ण क्खु इमे मालविआए चलणा जे दे विसेसेण दोहलं पूरयिस्सन्ति[2]। इति निष्क्रान्ता सचेटी।

विदू। उट्ठेहि अकिदप्पसादोसि[3]।

राजा। उत्थायेरवतीमपश्यन्। तत् कथं गतैव प्रिया ?।

विदू। अअस्स ! देव्वेहिं इमस्स अविणअस्स अपसारदा। अहं सिग्घं अपक्कमाम जाव अङ्गारकरासिं विअ अणुचक्कं ण करेदि[4]।

राजा। अहो मदनस्य वैषम्यम्।

मन्ये प्रियाहृतमनास्तस्याः प्रणिपातलङ्घनां सेवाम्।
एवं प्रणयवतो सा न हि शक्यमुपेक्षितुं कुपिता ॥
तदेहि कुपितां देवीं प्रसादयावः।

इति निष्क्रान्ताः सर्व्वे। इति तृतीयोऽङ्कः।

---

(१) किमेवं भूयोऽपि मामवधीरितां करोषि।
(२) न खल्विमौ मालविकायाश्चरणौ यौ ते विशेषेण दोहदं पूरयिष्यतः।
(३) उत्तिष्ठाकृतप्रसादोऽसि।
(४) वयस्य ! दैवैः अस्य अविनयस्य अपसारिता। अहं शीघ्रम् अपक्रमामि यावत् अङ्गारराशिमिव अनुचक्रं न करोति।

# चतुर्थोऽङ्कः ।



ततः प्रविशति पर्युत्सुको राजा प्रतीहारी च ।

राजा । आत्मगतम् ।

तामाश्रित्य श्रुतिपथगतामाशया बद्धमूलः
संप्राप्तायां नयनविषयं रूढरागप्रवालः ।
हस्तस्पर्शैः कुसुमित इव व्यक्तरोमोद्गमत्वात्
कुर्यात् कान्तं मनसिजतरुर्मां रसज्ञं फलस्य ॥

प्रकाशम् । सखे ! गौतम !

प्रती । जेदु जेदु भट्टा । असण्णिहिदो गोदमो[1] ।

राजा । आत्मगतम् । आः ! मालविकावृत्तान्तज्ञानाय मया प्रेषितः ।

प्रविश्य विदूषकः ।

विदू । जेदु जेदु भवम्[2] ।

राजा । जयसेने ! जानीहि तावत् । क्वासौ देवी धारिणी सरुजचरणत्वाद्विनोद्यत इति ।

प्रती । जं देवो आणवेदि[3] । इति निष्क्रान्ता ।

राजा । गौतम ! को वृत्तान्तस्तत्रभवत्यास्ते सख्याः ।

---

(१) जयतु जयतु भर्ता । असंनिहितो गौतमः ।

(२) जयतु जयतु भवान् । (३) यद्देव आज्ञापयति ।

विदू। ओविड़ालगिहीदाए परहुदिआए[1]।

राजा। सविषादम्। कथमिव।

विदू। सा क्खु तवस्सिणी ताए पिङ्गलक्खीए सारभण्ड-गेहमुहे परिक्खित्ता[2]।

राजा। नमु मत्संपर्कमुपलभ्य।

विदू। अध किं[3]।

राजा। क एवं विमुखोऽस्माकं येन चण्डीकृता देवी।

विदू। सुणादु भवम्। परिव्वाजिआ मे कहेदि। भोदिओ किल तत्तभोदी इरावदी रुजाअन्तचलणां देवीं सुहं पुच्छिदुं आअदा[4]।

राजा। ततस्ततः।

विदू। तदो सा देवीए पुच्छिदा। किं अत्तणोवि अणलं किदो हिअअजणो वल्लहोत्ति। तदो ताए उत्तम्मन्तीए मन्तिदम्। कुदो वा उवआरो जं परिअणे संकन्तं वल्लह-त्तणं जाणिस्सदित्ति[5]।

राजा। अस्तो निर्वेदादृते मालविकायामयमुपन्यासः शङ्कयति।

---

(१) ओ विडालग्रहीतायाः परभृतिकायाः।

(२) सा खलु तपस्विनी तया पिङ्गलाक्ष्या सारभाण्डगेहमुखे परिक्षिप्ता।

(३) अथ किम्।

(४) शृणोतु भवान्। परिव्राजिका मे कथयति। भोत्याः किल तत्रभवतीरावती रुजायमानचरणां देवीं सुखं प्रष्टुमागता।

(५) ततः सा देव्या दृष्टा। किमात्मनोऽप्यनलंकृतो हृदयजनो वल्लभ इति। ततस्तयोत्ताम्यन्त्या मन्त्रितम्। कुतो वोपचारः यत्परिजने संक्रान्तं वल्लभत्वं ज्ञास्यतीति।

विदू। तदो ताए अणुबन्धिज्जमाणाए भवदो अविणअं अन्तरेण परि गहदा किदा[1]।

राजा। अहो दीर्घरोषता तत्रभवत्याः। अतः परं कथय।

विदू। किं अवरम्। मालविआ बउलावलिआ अ णिगलपदीओ। अदिट्ठसुज्जपाआ पाआलवासं णागकण्णआ विअ अणुहवन्ति[2]।

राजा। कष्टं कष्टम्।

मधुरस्वरा परभृता भ्रमरी च विबुद्धचूतसङ्गिन्यौ।
कोटरमकालवृष्ट्या प्रबलपुरोवातया गमिते॥

अप्यत्र कस्यचिदुपक्रमस्य गतिः स्यात्।

विदू। कहं भविस्सदि। जं सारभाण्डगिहव्वावारिदा माहविआ देवीए संदिट्ठा। मम अङ्गुलीअमुद्दिअं अदेक्खिअ ण मोत्तव्वा तुए हदासा मालविआ बउलावलिआ चेत्ति[3]।

राजा। निःश्वस्य सपरामर्षम्। सखे! किमत्र कर्तव्यम्।

विदू। विचिन्त्य। अत्थि एत्थ उवाओ[4]।

---

(१) तत्रभवत्यानुबध्यमानया भवतोऽविनयमन्तरेण परिगतार्था कृता।

(२) किमपरम्। मालविका वकुलावलिका च निगडपद्यावदृष्टसूर्यपादे पातालवासं नागकन्यके इवानुभवतः।

(३) कथं भविष्यति। यत्सारभाण्डगृहव्यापारिता माधविका देव्या संदिष्टा। ममाङ्गुलीयमुद्रिकामदृष्ट्वा न मोक्तव्या त्वया हताशा मालविका वकुलावलिका चेति।

(४) अस्त्यत्रोपायः।

राजा। क इव।

विदू। सदृष्टिक्षेपम्। कोवि अदिट्ठो सुणादि। कण्णे दे कहेमि। उपश्लिष्य। एव्वं विअ[1]। इत्यावेदयति।

राजा। सहर्षम्। अनुष्ठेयं प्रयुज्यतां सिद्धये।

प्रविश्य प्रतिहारी।

प्रति। देव! पवादसअणे देवी! णिसण्णा रत्तचन्दणधारिणा परिअणहत्थगदेण चलणेण भअवदीए विणोदीअमाणा कहाहिं चिट्ठदि[2]।

राजा। तस्मादक्षतप्रयाणयोग्योऽयमवसरः।

विदू। भो गच्छदु भवम्। अहंपि देविं पेक्खिदुं अरित्तपाणी भविस्सम्[3]।

राजा। जयसेनायास्तावत्त्वं विदितं गच्छ।

विदू। तह। कर्णे। एव्वं विअ होदि[4]। इति निष्क्रान्तः।

राजा। जयसेने! प्रवातशयनमार्गमादेशय।

प्रति। इदो इदो देवो[5]।

ततः प्रविशति शयनस्था देवी परिव्राजिका

विभवश्च परिवारः।

देवी। भअवदि! रमणीआ कहा। तदो तदो[6]।

---

(१) कोऽप्यदृष्टः शृणोति। कर्णे ते कथयामि। एवमिव।

(२) देव! प्रवातशयने देवी निषण्णा रक्तचन्दनधारिणा परिजनहस्तगतेन चरणेन भगवत्या विनोद्यमाना कथाभिस्तिष्ठति।

(३) भो गच्छतु भवान्। अहमपि देवीं प्रेक्षितुमरिक्तपाणिः भविष्यामि।

(४) तथा। एवमिव भवति। (५) इत इतो देवः।

(६) भगवति! रमणीया कथा। ततस्ततः।

परि । यदादिष्टमेवम् । अतःपरं पुनः कथयिष्यामि यत्र-भवान् विदितविशेषः प्राप्तः ।

देवी । अम्मो भट्टा[1] । इत्युत्थातुमिच्छति ।

राजा । अलमलमुपचारयन्त्रणया ।

अनुचितनूपुरविरहं नार्हसि तपनीयपीठिकालम्बि ।
चरणं रुजापरीतं कलभाषिणि ! मां च पीड़यितुम् ।

धारि । जेदु जेदु अज्जउत्तो[2] ।

परि । विजयतां देवः ।

राजा । परिव्राजिकां प्रणम्योपविश्य च । देवि ! अपि सह्या वेदना ।

धारि । अत्थि मे विसेसो[3] ।

ततः प्रविशति यज्ञोपवीतसंवीताङ्गुष्ठः संभ्रान्तो विदूषकः ।

विदू । परित्ताअदु परित्ताअदु भवम् । सप्पेणम्हि दट्ठो[4] ।

सर्व्वे विषण्णाः ।

राजा । कष्टं कष्टम् । क्व भवान् परिभ्रान्तः ।

विदू । देवीं देक्खिस्संत्ति आआरपुप्फकारणादो पमदवणं गदोम्हि[5] ।

धारि । हद्धी हद्धी अहं ज्जेव्व जीविदसंसअणिमित्तं जादा बह्मणस्स[6] ।

---

(१) अहह भर्त्ता । (२) जयति जयत्वार्य्यपुत्रः ।
(३) अस्ति मे विशेषः ।
(४) परित्रायतां परित्रायतां भवान् । सर्पेणास्मि दष्टः ।
(५) देवीं द्रक्ष्यामीत्याचारपुष्पकारणात्प्रमदवनं गतोऽस्मि ।
(६) हा धिक् हा धिगहमेव जीवितसंशयनिमित्तं जाता ब्राह्मणस्य ।

विदू। तहिं असोअत्थपुप्फकारणादो पसारिदो द-क्खिणहत्थो। तदो कोड़रविणिग्गदेण सप्परूविणा कालेण दंसिदोह्मि। णं एदाणि दुवे दंसणपदाणि[1]। इति दर्शयति।

परिव्राजिका।

छेदो दंशस्य दाहो वा क्षतस्यारक्तमोक्षणम्।
एतानि दष्टमात्राणामायुष्याः प्रतिपत्तयः।

संप्रति विषवैद्यानां कर्म।

राजा। जयसेने! ध्रुवसिद्धिः क्षिप्रमाहूयताम्।

प्रति। जं देवो आणवेदि[2]। इति निष्क्रान्ता।

विदू। अहो पावेण मिच्चुणा गिहीदोह्मि[3]।

राजा। मा कातरो भूः। अविषोऽपि कदाचिद्दंशो भवेत्।

विदू। कहं ण भाइस्सम्। सिमिसिमाअन्ति मे अङ्गा-इम्[4]। इति विषवेगं रूपयति।

धारि। हा हा दंसिद विआरेण अवलम्बध बह्मणम्[5]।

परिव्राजिका ससंभ्रममवलम्बते।

विदू। राजानमवलोक्य। भो बालपिअवअस्सोह्मि तुए। अविआरेण अपुत्ताए जणणीए जोगक्खेमं वहेहि[6]।

---

(१) तस्मिन्नशोकस्य पुष्पकारणात्प्रसारितो दक्षिणहस्तः। ततः कोटरविनिर्गतेन सर्परूपिणा कालेन दंशितोऽस्मि। नन्वेते द्वे दंशनपदे।

(२) यद्देव आज्ञापयति।

(३) अहो पापेन मृत्युना गृहीतोऽस्मि।

(४) कथं न भेष्यामि। सिमसिमायन्ते मेऽङ्गानि।

(५) हा! हा! दंशितं विकारेणावलम्बध्वमेनम्।

(६) भो बालप्रियवयस्योऽस्मि ते। अविकारेणापुत्राये जनन्यै योगक्षेमं वह।

राजा । मा भैषीः । अचिरात् त्वां वैद्यश्चिकित्सिष्यति । स्थिरो भव ।

प्रविश्य जयसेना ।

जय । आणविदो धुवसिद्धी विण्णवेदि । इह ज्जेव्व गोदमो आणीअदुत्ति[१] ।

राजा । तेन हि वर्षवर प्रतिगृहीतमेव तत्रभवतः प्रकाशं प्रापय ।

जय । तहा[२] ।

विदू । देवीं विलोक्य । भोदि ! जीवेअं ण वा जं मए तत्तभवन्तं सेव्वमाणेण दे अवरद्धं तं मरिसेहि[३] ।

धारि । दीहाउसो होहि[४] ।

निष्क्रान्तो विदूषकः प्रतीहारी च ।

राजा । प्रकृतिभीरुस्तपस्वी ध्रुवसिद्धेरपि यथार्थनाम्नः सिद्धिं न मन्यते ।

प्रविश्य जयसेना ।

जेदु जेदु भट्टा । धुवसिद्धी विण्णवेदी । उदकुम्भविधाणेण सप्पमुद्दिआ कप्पिदव्वा । ता अण्णेसीअदुत्ति[५] ।

---

(१) आज्ञप्तो ध्रुवसिद्धिर्विज्ञापयति । इहैव गौतम आनीयतामिति ।

(२) तथा ।

(३) भवति ! जीवेयं न वा । यन्मया तत्रभवन्तं सेवमानेन तेऽपराद्धं तन्मर्षयस्व ।

(४) दीर्घायुर्भव ।

(५) जयति जयति भर्ता । ध्रुवसिद्धिर्विज्ञापयति । उदकुम्भविधानेन सर्पमुद्रिका कल्पितव्या तदन्विष्यतामिति ।

धारि। एदं सप्पमुद्दअं अङ्गुलीअअम्। पच्छा मह हत्थे देहि णम्[1]।

राजा। जयसेने! कर्मसिद्धावाशु प्रतिपत्तिमानय।

जय। जं देवो आणवेदि[2]। इति निष्क्रान्ता।

परि। यथा हृदयमाचष्टे तथा निर्विषो गौतमः।

राजा। भूयादेवम्।

प्रविश्य जयसेना।

जय। जेदु जेदु भट्टा। णिव्वुत्तविसवेगो गोदमो मुहुत्तेण पकिदित्थो संवुत्तो[3]।

धारि। दिट्ठिआ वअणीआदो मुत्तह्मि[4]।

प्रती। एसो उण वाहतओ अमच्चो विण्णवेदि। राअकज्जं बहु मन्तिदव्वम्। दंसणेन अणुग्गहं इच्छामि त्ति[5]।

धारि। गच्छदु अज्जउत्तो कज्जसिद्धीए[6]।

राजा। देवि! आतपाक्रान्तोऽयमुद्देशः। शीतक्रिया चास्यारुजः प्रशस्ता। तदन्यत्र नीयतां शयनीयम्।

धारि। पालिआ! अज्जउत्तवअणं अणुचिट्ठध[7]।

---

(१) एतत्सर्पमुद्रिकमंगुलीयकम्। पश्चान्मम हस्ते देह्येतत्।

(२) यद्देव आज्ञापयति।

(३) जयति जयति भर्ता। निवृत्तविषवेगो गौतमो मुहूर्तेन प्रकृतिस्थः संवृत्तः।

(४) दिष्ट्या वाच्यान्मुक्तास्मि।

(५) एष पुनर्वाहतकोऽमात्यो विज्ञापयति। राजकार्य्यं बहु मन्त्रितव्यम् दर्शनेनानुग्रहमिच्छामीति।

(६) गच्छत्वार्यपुत्रः कार्य्यसिद्धये।

(७) पालिताः! आर्य्यपुत्रवचनमनुतिष्ठत।

परिजनस्तथा प्रक्रान्तः ।

निष्क्रान्ता देवी परिव्राजिका परिजनश्च ।

राजा । जयसेने ! गूढेन पथा प्रमदवनं प्रापय ।

जय । एदु एदु देवो[1] ।

राजा । जयसेने ! ननु समासन्नकार्यो गौतमः ? ।

जय । अध इम् ?[2] ।

राजा ।

दृष्टाधिगमनिमित्तं प्रयोगमेकान्तसाध्यमपि मत्वा ।
सन्दिग्धमेव सिद्धौ कातरमाशङ्कते चेतः ॥

प्रविश्य विदूषकः ।

विदू । जेदु जेदु भवम् । सिद्धाणि दे मङ्गलकम्माणि[3] ।

राजा । जयसेने ! त्वमपि नियोगमशून्यं कुरु ।

जय । जं देवो आणवेदि[4] । इति निष्क्रान्ता ।

राजा । गौतम ! क्षुद्रा माधविका न खलु किंचिद्विचारितमनया ।

विदू । देवीए अङ्गुलीअमुद्दिअं देक्खिअ कहं विआरेदि[5] ।

राजा । न खलु मुद्रामधिकृत्य ब्रवीमि । तयोर्द्वयोः किं निमित्तो मोक्षः किं वा देव्या परिजनमतिक्रम्य भवान् संदिष्ट इत्येव तया प्रष्टव्यम् ।

---

(१) एत्वेतु देवः । (२) अथ किम् ;

(३) जयति जयति भवान् । सिद्धानि ते मङ्गलकर्माणि ।

(४) यद्देव आज्ञापयति ।

(५) देव्या अङ्गुलीयमुद्रिकां दृष्ट्वा कथं विचारयति ।

विदू । णं पुच्छिदोम्हि । मन्दस्स वि पुणो मे तह पच्चुप्पण्णं उत्तरं आसि[१] ।

राजा । कथ्यताम् ।

विदू । भणिदं मए । देव्वचिन्तएहिं विण्णाविदो राआ सोवसग्गं वो णक्खत्तम् । ता अवस्सं सव्वबन्धमोक्खो करीअदु त्ति[२] ।

राजा । सहर्षम् । ततस्ततः ।

विदू । तं सुणिअ देवीए इरावदीए चित्तं रक्खन्तीए राआ किल मोअअदि त्ति अहं संदिट्ठोम्हि त्ति । तदो युज्जदि त्ति ताए सम्पादिदो अत्थो[३] ।

राजा । विदूषकं परिष्वज्य । सखे ! प्रियोऽहं खलु तव ।

न हि बुद्धिगुणेनैव सुहृदामर्थदर्शनम् ।
कार्यसिद्धिपथः सूक्ष्मः स्नेहेनाप्युपलभ्यते ॥

विदू । तुवरदु भवम् । समुद्दगेहके सहीसहिदं मालविअं ठाविअ भवन्तं पच्चुग्गदोम्हि[४] ।

राजा । अहमेनां संभावयामि । गच्छाग्रतः ।

विदू । एदु एदु भवम् । परिक्रम्य । एदं समुद्दगेहकम्[५] ।

---

( १ ) ननु पृष्टोऽस्मि । मन्दस्यापि पुनर्मे तथा प्रत्युत्पन्नमुत्तरमासीत् ।

( २ ) भणितं मया । दैवचिन्तकैर्विज्ञप्तो राजा सोपसर्गं वो नक्षत्रम् । तदवश्यं सर्वबन्धमोक्षः क्रियतामिति ।

( ३ ) तत् श्रुत्वा देव्या इरावत्याश्चित्तं रक्षन्त्या राजा किल मोचयति इत्यहं संदिष्ट इति । ततो युज्यत इति तया संपादितोऽर्थः ।

( ४ ) त्वरतां भवान् । समुद्रगृहके सखीसहितां मालविकां स्थापयित्वा भवन्तं प्रत्युद्गतोऽस्मि ।

( ५ ) एत्वेतु भवान् । एतत्समुद्रगृहकम् ।

राजा । सामङ्कम् । वयस्य एषा कुसुमावचयव्यग्रहस्ता सख्यास्ते इरावत्याः परिचारिका चन्द्रिका संनिकृष्टमागच्छति । इतस्तावदावां भित्तिगूढौ भवावः ।

विदू । अहो कुम्भीलएहिं कामुएहिं च परिहरणीआ चन्दिआ[1] ।

उभौ यथासमर्थितं कुरुतः ।

राजा । कथं नु ते सखी मां प्रतिपालयति । एनां गवाक्षमाश्रित्य यावदवलोकयामि ।

विदू । तहा ?[2] ।

उभौ विलोकयन्तौ स्थितौ ।

ततः प्रविशति मालविका बकुलावलिका च ।

बकुला । सहि पणम भट्टारं[3] ।

माल । णमो दे जो पासदो पिट्ठदो पेक्खीअदि[4] ।

राजा । शङ्के मे प्रतिकृतिं निर्दिशति ।

माल । सहर्षं द्वारमवलोक्य । हला मं बिप्पलम्भेसि[5] ।

राजा । हर्षविषादाभ्याम् अत्रभवत्याः प्रीतोऽस्मि ।

सूर्योदये भवति या सूर्यास्तमये च पुण्डरीकस्य ।
वदनेन सुवदनायास्ते समवस्थे क्षणादूढे ।

बकुला । णं एस चित्तगदो भट्टा चिट्ठदि[6] ।

---

१) अहो कुम्भीलकैः कामुकैश्च परिहरणीया चन्द्रिका ।
(२) तथा । (३) सखि ! प्रणम भर्तारम् ।
(४) नमो ते यः पार्श्वतः पृष्टतश्च दृश्यते ।
(५) हला मां विप्रलभसे ।
(६) नन्वेष चित्रगतो भर्ता ।

उभे। (प्रविश्य) जेदु जेदु भट्टा[1]।

माल। तह्निं संभमे ठिदा भट्टिणो रूवस्स णा तह वितिण्हह्मि जह अज्ज मए भाविदो अवितिण्हदंसणो भट्टा[2]।

विदू। सुदं भवदा। णं किं अत्तभोदी तुए जह दिट्ठा तह णं दिट्ठो भवम्। सुधा दाणिं मञ्जूसाविअ रअणभाण्डं जोव्वणगव्वं वहेसि[3]।

राजा। सखे! कुतूहलवानपि निसर्गशालीनः स्त्रीजनः।

पश्य

कार्त्स्न्येन निर्वर्णयितुं च रूप-
मिच्छन्ति तत्पूर्वसमागमानाम्।
न तु प्रियेष्वायतलोचनानाम्
समग्रवृत्तीनि विलोचनानि।

माल। हला का एसा पासपरिवत्तिदवअणेण भट्टिणा सिणिद्धाए दिट्ठीए णिज्झाअदि[4]।

---

(१) जयति जयति भर्ता।

(२) तस्मिन् संभ्रमे स्थिता भर्तृरूपस्य न तथा वितृष्णास्मि यथाद्य मया भावितोऽवितृष्णदर्शनो भर्ता।

(३) श्रुतं भवता। ननु किमत्रभवती त्वया यथा दृष्टा तथा न दृष्टो भवान्। मुधेदानीं मञ्जूषेव रत्नभाण्डं यौवनगर्वं वहसि।

(४) हला कैषा पार्श्वपरिवर्त्तितवदनेन भर्त्रा स्निग्धया दृष्ट्या निध्यायते।

बकुला। णं इअं पासगदा इरावदी[1]।

माल। सहि! अदक्खिणो विअ मे भट्टा पडिभादि जो सव्वं देवीअणं उज्झिअ एक्काए मुहे बद्धलक्खो[2]।

बकुला। आत्मगतम्। चित्तगदं भट्टारं परमत्थदो संकप्पिअ असूइस्सदि। भोदु कीलइस्सं दाव एदाए॥ प्रकाशम्। हला भट्टिणो वल्लहा एसा[3]।

माल। तदो किं दाणिं अत्ताणं आआसिअ[4]। इति सासूयं परावर्त्तते।

राजा। सखे! पश्य पश्य।

भ्रूभङ्गभिन्नतिलकं स्फुरिताधरोष्ठं
सासूयमाननमितः परिवर्त्तयन्त्या।
कान्तापराधकुपितेष्वनया विनेतुः
संदर्शितेव ललिताभिनयस्य शिक्षा॥

विदू। अणुणअसज्जो दाणिं होहि[5]।

माल। अज्जगोदमो एत्थ एव्व सेवदि णम्[6]। इति पुनः स्थानान्तराभिमुखी भवितुमिच्छति।

---

(१) नन्वियं पार्श्वगतेरावती।

(२) सखि! अदक्षिण इव मे भर्ता प्रतिभाति यः सर्वं देवीजनमुज्झित्वैकस्या मुखे बद्धलक्ष्यः।

(३) चित्रगतं भर्तारं परमार्थतः संकल्प्यासूयिष्यति। भवतु क्रीड़यिष्यामि तावदेतया। हला भर्तुर्वल्लभैषा।

(४) ततः किमिदानीमात्मानमायास्य।

(५) अनुनयसज्ज इदानीं भव।

(६) आर्यगौतमः अत्रैव सेवत्येनाम्।

बकुला। मालविकां हस्ते। ण हि ण हि। कुविदा दाणिं तुमम्[1]।

माल। जदि चिरं कुविदं एव्व मं मन्तेसि एस पञ्चाणी खु कोवो[2]।

राजा। उपेत्य।

कुप्यसि कुवलयनयने ! चित्रार्पितचेष्टया कथय किमिदं मे।
ननु तव साक्षाद्यमहमनन्यसाधारणो दासः॥

बकुला। जेदु जेदु भट्टा[3]।

माल। आत्मगतम्। कहं चित्तगदो भट्टा मए असू-दूदो[4]।

प्रकाशं सव्रीडवचनमञ्जलिं करोति।

राजा मदनकातर्यं रूपयति।

विदू। किं भवं उदासीणो विअ दिसदि[5]।

राजा। अविश्वसनीयत्वात्सख्यास्ते।

विदू। अत्तभोदीए कहं तव अविस्सासो[6]।

राजा। श्रूयताम्।

पथि नयनयोः स्थित्वास्थित्वा तिरोभवति क्षणात्
सरति सहसा बाह्वोर्मध्यं गतापि सखी तव।
मनसिजरुजाक्लिष्टस्यैवं समागममायया
कथमपि सखे ! विस्रब्धं स्यादिमां प्रति मे मनः॥

---

(१) न हि न हि। कुपितेदानीं त्वम्।

(२) यदि चिरं कुपितामेव मां मन्त्रयसि एष प्रत्यानीवतां कोपः।

(३) जयति जयति भर्ता। (४) कथं चित्रगतो भर्ता मयाभ्यसूयितः।

(५) किं भवानुदासीन इव दृश्यते।

(६) अत्रभवत्याः कथं तवाविश्वासः।

बकुला । सहि ! वङ्कसो किल भट्टा विप्पलद्धो । ता अत्ता वीसम्भणीओ करीअदु[1] ।

मालविका । मम उण मन्दभाआए सिविणसमाअमोवि भट्टिणो दुल्लहो आसि[2] ।

बकुला । एदु भट्टा देहि से उत्तरम्[3] ।

राजा । उत्तरेण किमात्मैव पञ्चबाणाग्निसाक्षिकम् ॥
तव सख्यै मया दत्तो न सेव्यः सेविता रहः ।

बकुला । अणुग्गहीदह्मि[4] ।

विदू । परिक्रम्य ससम्भ्रमम् । बउलावलिए असोअपल्लवाइं अहिलङ्घइदुं इच्छदि हरिणो । एहि णिवारेम णम्[5] ।

बकुला । तह[6] । इति प्रस्थिता ।

राजा । एवमेवास्मिन् रक्षणीयेऽवलम्बितेन भवितव्यम् ।

विदू । एव्वंपि गोदमो णिद्दिसदि[7] ।

बकुला । अज्ज ! गोदम ! अहं अप्पआसे चिट्ठामि । तुमं दुआररक्खओ होहि[8] ।

---

(१) सखि ! वङ्कश्च किल भर्ता विप्रलब्धः । तदात्मा विश्वसनीयः क्रियताम् ।

(२) मम पुनर्मन्दभागायाः स्वप्नसमागमोऽपि भर्तुर्दुर्लभ आसीत् ।

(३) एतु भर्ता देह्यस्या उत्तरम् ।

(४) अनुगृहीतास्मि ।

(५) बकुलावलिके ! अशोकपल्लवान्यभिलङ्घितुमिच्छति हरिणः एहि निवारयाव एनम् ।

(६) तथा ।

(७) एवमपि गौतमो निर्दिशति ।

(८) आर्य ! गौतम ! अहमप्रकाशे तिष्ठामि । त्वं द्वाररक्षको भव ।

विदू । जुज्जदि[1] ।

निष्क्रान्ता बकुलावलिका ।

विदू । इमं दाव फटिअत्थम्भं संसिदो भोमि । तथा कृत्वा । अहो सुहप्फरिसदा सिलाविसेसस्स[2] । इति निद्रायते ।

मालविका ससाध्वसं तिष्ठति ।

राजा । विसृज सुन्दरि ! संगमसाध्वसं
तव चिरात्प्रभृति प्रणयोन्मुखे ।
परिगृहाण गते सहकारतां
त्वमतिमुक्तलताचरितं मयि ॥

माल । देवीभआदो अत्तणोवि पिअं कादुं ण पारेमि[3] ।

राजा । न भेतव्यम् भेतव्यम् ।

माल । सोपालम्भम् । जो ण भाअदि सो मए भट्टिणीदंसणे दिट्ठसमत्थो भट्टा[4] ।

राजा ।

दाक्षिण्यं नाम बिम्बोष्ठि ! नायकानां कुलव्रतम् ।
तन्मे दीर्घाक्षि ! ये प्राणास्ते त्वदाशानिबन्धनाः ॥

तदनुगृह्यतां चिरानुरक्तोऽयं जनः । इति संश्लेषमुपजनयति ।

मालविका नाट्येन परिहरति ।

---

(१) युज्यते ।

(२) इमं तावत् स्फटिकस्तम्भं संश्रितो भवामि । अहो सुखस्पर्शता शिलाविशेषस्य ।

(३) देवीभयादात्मनोऽपि प्रियं कर्तुं न पारयामि ।

(४) यो न बिभेति स मया भट्टिनीदर्शने दृष्टसामर्थ्यो भर्ता ।

राजा । रमणीयः खलु नवाङ्गनानां मदनविषयावतारः । एषा हि ।

हस्तं कम्पयते रुणद्धि रसनाव्यापारलोलाङ्गुलीः
स्वौ हस्तौ नयति स्तनावरणतामालिङ्ग्यमाना बलात् ।
पातुं पक्ष्मलनेत्रमुन्नमयतः साचीकरोत्याननं
व्याजेनाप्यभिलाषपूरणसुखं निर्वर्तयत्येव मे ॥

ततः प्रविशतीरावती निपुणिका च ।

इरा । हञ्जे णिउणिए ! सच्चं तुमं परिगतत्था चन्दिआए । समुद्दगेहकालिन्दसद्दो अज्जमोदमो दिट्ठोत्ति[1] ।

निपु । अस्सहा कहं भट्ठिणीए विस्सवीअदि[2] ।

इरा । तेण हि तहिं एव्व गच्छम्ह संसआदो मुत्तं पिअवअस्सं पुच्छिदुं च[3] ।

निपु । सावसेसं विअ भट्ठिणीए वअणम्[4] ।

इरा । अण्णं च । चित्तगदं अज्जउत्तं पसाददुम्[5] ।

निपु । अह दाणिं कहं णु भट्टा एव्व अणुणीअदि[6] ।

इरा । मुद्धे जारिसो चित्तगदो तारिसो एव्व अस-

---

(१) चेटि ! निपुणिके ! सत्यं त्वं परिगतार्था चन्द्रिकया । समुद्रगृहकालिन्दशयित आर्यगोतमो दृष्ट इति ।

(२) अन्यथा कथं भट्टिन्या विश्वास्यते ।

(३) तेन हि तत्रैव गच्छाव संशयान्मुक्तं प्रियवयस्यं प्रष्टुं च ।

(४) सावशेषमिव भट्टिन्या वचनम् ।

(५) अन्यच्च । चित्रगतमार्य्यपुत्रं प्रसादयितुम् ।

(६) अथेदानीं कथं नु भर्तैवमनुनीयते ।

(१) मुग्धे ! यादृशश्चित्रगतस्तादृश एवान्यसंक्रान्तहृदय आर्य-

संकन्तहिअओ अज्जउत्तो । केवलं उवआरादिक्कमं पमज्जिदुं अअं आरम्भो[1]।

निपु । इदो इदो भट्टिणी[2]।

उभे परिक्रामतः । प्रविश्य चेटी ।

जेदु जेदु भट्टिणी । भट्टिणि ! देवी भणादि । ण एसो मह मच्छरस्स कालो तव बड्ढमाणं वड्ढदुं । इअं वअस्सिआए सह णिअलबन्धणं किदा मालविआ । जइ अणुमण्णेसि अज्जउत्तं पि तव किदे विण्णावइस्सम्[3] ।

इरा । णाअरिए ! विण्णवेहि देविम् । का अअं भट्टिणीं णिओजेदुं परिअणणिग्गहेण मइ दंसिदो अणुग्गहो । कस्स वा पसाएण अअं जणो वड्ढदित्ति[4] ।

चेटी । तह[5] । इति निष्क्रान्ता ।

निपु । परिक्रम्यावलोक्य च । एस दुवारे समुद्दगेहकस्स

---

पुत्रः । केवलमुपचारातिक्रमं प्रमार्जितुमयमारम्भः ।

( २ ) इत इतो भट्टिनी ।

( ३ ) जयति जयति भट्टिनी । भट्टिनी देवी भणति । नैष मे मत्सरस्य कालस्तव बड्ढमानं वर्धयितुम् । इयं वयस्यिकया सह निगडबन्धने नीता मालविका । यद्यनुमन्यसे आर्य्यपुत्रमपि तव कृते विज्ञापयिष्यामि ।

( ४ ) नागरिके ! विज्ञापय देवीम् । का वयं भट्टिनीं नियोजयितुं परिजननिग्रहेण मयि दर्शितोऽनुग्रहः कस्य वा प्रसादेनायं जनो वर्धत इति ।

( ५ ) तथा ।

( १ ) एष द्वारे समुद्रगृहकस्य विपणिगत इव वृषभः गौतम आसीन एव निद्रायते ।

बिपण्णिगदो बिअ बुसदो गोदमो आसीदो एव्व बिहा-अदि[1]।

इरा। किं णु क्खु अच्चाहिदम्। साबसेसो बिअ बिसबिआरो भवे[2]।

निपु। पसण्णमुहबण्णो दीसदि। अबि अ धुबसिद्धिणा चिइच्छिदो। ता से असङ्कणिज्जं पाबं[3]।

विदू। उत्स्वप्नायते। भोदि! मालबिए![4]।

निपु। सुदं भट्टिणीए। कस्स बा एसो अत्तणीणो अ-ब्भबहारिअसम्बन्धापेक्खी किदग्घो। इदो सव्वं कालं सोत्थिबअणमोदएहिं कुक्खिं पुरिअ संपदं मालबिअं सिबिणाबेदि[5]।

विदू। इराबदीं अदिक्कमन्तो होहि[6]।

निपु। एदं अच्चाहिदम्। भुअंगभीअं बह्मबन्धुं इमिणा भुअङ्गकुडिलेण अत्तणो दण्डकट्ठेण अन्तरिदा भीसेमि[7]।

---

(२) किं नु खल्वत्याहितम्। सावशेष इव विषविकारो भवेत्।

(३) प्रसन्नमुखवर्णो दृश्यते। अपि च ध्रुवसिद्धिना चिकित्सितः। तदस्य अशङ्कनीयं पापम्।

(४) भवति! मालविके!।

(५) श्रुतं भट्टिन्या। कस्य वैष आत्मनीनः। अभ्यवहार्यसम्बन्धापेक्षी कृतघ्नः। इतः सर्व्वं कालं स्वस्तिवचनमोदकैः कुक्षिं पूरयित्वा साम्प्रतं मालविकां स्वप्नायति।

(६) इरावतीमतिक्रामन्तो भव।

(७) एतदत्याहितम्। भुजङ्गभीतं ब्रह्मबन्धुमनेन भुजङ्गकुटिलेनात्मनो दण्डकाष्ठेनान्तरिता भययामि।

इरा। अरिहदि किदण्णो सप्पदंसणम्[1]।

निपुणिका विदूषकस्योपरि दण्डकाष्ठं पातयति।

विदू। सहसा प्रबुध्य। अविहा अविहा। दव्वीकरो मे उवरि परिपडिदो[2]।

राजा। सहसोपसृत्य। न भेतव्यं न भेतव्यम्।

माल। अनुसृत्य। मा दाव सहसा णिक्कमिस्ससि स-प्पोत्ति भणादि[3]।

इरा। हद्धी हद्धी। भट्टा दाव इदो एव्व धावदि[4]।

विदू। सप्रहासम्। कहं दण्डकाट्ठं एदम्। अहं पुण जाणे। जं मए केदअकण्डएहिं दंसं करिअ अ-प्पणो अयसो किदं तं मे फलिदं त्ति[5]।

ततः प्रविशति पटाक्षेपेण बकुलावलिका।

बकुला। मा क्खु भट्टा पविसदु। इह कुडिलगई सप्पो विअ दीसदि[6]।

इरा। राजानं सहसोपसृत्य। अवि णिव्विग्घमणोरहो दिवासंकेदो मिहुणस्स[7]।

---

(१) अर्हति कृतघ्नः सर्पदंशनम्।

(२) अविहा अविहा। दर्वीकरो मे उपरि परिपतितः।

(३) मा तावत्सहसा निष्क्रमिष्यति सर्प इति भणति।

(४) हा धिक् हा धिक्। भर्ता तावदित एव धावति।

(५) कथं दण्डकाष्ठमेतत्। अहं पुनर्जाने। यन्मया केतककण्टकैर्दंशं कृत्वा सर्पस्यायशः कृतं तन्मे फलितमिति।

(६) मा खलु भर्ता प्रविशतु। इह कुटिलगतिः सर्प इव दृश्यते।

(७) अपि निर्विघ्नमनोरथो दिवासङ्केतो मिथुनस्य।

सर्वे इरावतीं दृष्ट्वा संभ्रान्ताः।

राजा। प्रिये! अपूर्व्वोऽयमुपचारः।

इरा। बउलावलिए! भट्टाभिसारविसया संपुण्णा दे पइण्णा[1]।

बकुला। पसीददु भट्टिणी। किं मए किदं त्ति देवो पुच्छिदव्वो। दद्दुरा वाहरन्ति त्ति किं देवो पुहविं वरिसिदुं सुमरेदि?[2]।

विदू। मा दाव भोदीए दंसणमेत्तेण अत्तभवं पणिवादलङ्घणं विसुमरिदो भोदि। तुमं पुण पसादं ण गेह्णासि[3]।

इरा। कुविदावि अहं किं करिस्सम्[4]।

राजा। एवमेतत्। अस्थाने कोप इत्यनुपपन्नं त्वयि।

कदा मुखं वरतनु! कारणादृते
तवागतं क्षणमपि कोपपात्रताम्?।
अपर्वणि ग्रहकलुषेन्दुमण्डला
विभावरी कथय कथं भविष्यति॥

इरा। अत्थाणे त्ति सुट्ठु अवधारिदं अज्जउत्तेण।

---

(१) बकुलावलिके! भर्त्रभिसारविषया संपूर्णा ते प्रतिज्ञा।

(२) प्रसीदतु भट्टिनी। किं मया कृतमिति देवः प्रष्टव्यः। तद्दुरा व्याहरन्तीति किं देवः पृथिवीं वर्षितुं स्मरति?।

(३) मा तावद्भवत्या दर्शनमात्रेणात्रभवान् प्रणिपातलङ्घनं विस्मृतो भवति। त्वं पुनः प्रसादं न गृह्णासि।

(४) कुपिताप्यहं किं करिष्यामि।

(१) अस्थाने इति सुष्ठु अवधारितमार्यपुत्रेण। अन्यसंक्रान्तेष्वस्माकं भागधेयेषु यदि पुनः कुप्येयं नन्वहं हास्या भवेयम्।

अणासंकन्तेसु अण्णाणं भाअधेएसु जदि उण कुप्पेअं णं अहं हस्सा भवे[1]।

राजा। त्वमन्यथा कल्पयसि। अहं पुनः सत्यमेव कोपस्थानं न पश्यामि। कुतः

नार्हति कृतापराधोऽप्युत्सवदिवसेषु परिजनो बन्धम्।
इति मोचिते मयैते प्रणिपतितुं मामुपगते च॥

इरा। णिउणिए! गच्छिअ देविं विण्णवेहि। दिट्ठं पक्खवादित्तणम्। अवहिदं मे हिअअं अज्जेत्ति[2]।

निपु। तह[3]। इति निष्क्रान्ता।

विदू। आत्मगतम्। अहो अणत्थो संपडिदो बन्धणब्भट्ठो गेहकवोदओ बिडालिआए आलोए पडिदो[4]।

प्रविश्य निपुणिका।

निपु। देवि! जदिच्छादिट्ठाए माहविआए आचक्खिदम्। एव्वं णिमित्तम्[5]। इति कर्णे कथयति।

इरा। आत्मगतम्। उववण्णं सव्वं ज्जेव्व। बम्हबन्धुणा उब्भिण्णो पओओ। विदूषकं विलोक्य प्रकाशम्। इमस्स कामतन्तसचिवस्स बम्हबन्धुणो णीदी।

---

(२) निपुणिके! गत्वा देवीं विज्ञापय। दृष्टं पक्षपातित्वम्। अवहृतं मे हृदयमद्येति।

(३) तथा।

(४) अनर्थः संपतितो बन्धनभ्रष्टो गृहकपोतको बिडालिकाया आलोके पतितः।

(५) देवि! यदृच्छादृष्टया माधविकयाख्यातम्। एवं निमित्तम्।

(६) उपपन्नं सर्वमेव। ब्रह्मबन्धुनोद्भिन्नः प्रयोगः। इयमस्य कामतन्त्रसचिवस्य ब्रह्मबन्धोर्नीतिः।

विदू। भोदि ! जदि णीदीए एक्कं पि अक्खरं पढेअं ण अत्त भवं संसिदो भवे[1]।

राजा। अपवार्य। भोः कथं नु खल्वात्मसंकटान्मुच्यावहै।

प्रविश्य सावेगा जयसेना।

जय। देव कुमारी वसुलच्छी कन्दुअं अणुधावन्ती पिङ्गलवाणरेण बलिअं वित्तासिदा। अङ्कणिसण्णा अ देवीए पवादकिसलअं विअ वेवमाणा ण किंपि पडिवज्जदि[2]।

राजा। कष्टं कष्टम्। कातरो बालभावः।

इरा। सावेगम्। तुवरदु तुवरदु अज्जउत्तो णं समासासइदुं मा से संदावजणिदो विआरो वड्ढदु[3]।

राजा। अहमेनां संज्ञापयामि। इति सत्वरं निष्क्रामति।

विदू। साहु रे पिङ्गलवाणर ! साहु। परित्तादो तुए सवक्खो[4]।

निष्क्रान्तो राजा विदूषकश्चेरावती निपुणिका प्रतीहारी च।

---

(१) भवति ! यदि नीत्या एकमप्यक्षरं पठेयं न अत्रभवन्तं संश्रितो भवेयम्।

(२) देव ! कुमारी वसुलक्ष्मीः कन्दुकमनुधावन्ती पिङ्गलवानरेण बलीयो वित्रासिता। अङ्कनिषण्णा च देव्याः प्रवातकिसलयमिव वेपमाना न किमपि प्रतिपद्यते।

(३) त्वरतां त्वरतामार्यपुत्रः एनां समाश्वासयितुं मास्याः सन्तापजनितो विकारो वर्द्धताम्।

(४) साधु रे पिङ्गलवानर ! साधु ! परित्रातस्त्वया स्वपक्षः।

माल। देवीं चिन्तिअ वेवदि मे हिअअम्। ण आणे संपदं किं अदो अणुभविदव्वं भविस्सदित्ति[1]।

नेपथ्ये। अच्चरिअं अच्चरिअं। अपुण्णे पञ्चरत्ते दोहलस्स मउलेहिं संणद्धो तवणीआसोओ। जाव देवीए णिवेदेमि[2]।

उभे श्रुत्वा प्रहृष्टे।

बकुला। आसासदु सही सच्चपइण्णा देवी[3]।

माल। तेण अहं पमदवणपालिआए पिट्ठदो भोमि[4]।

इति निष्क्रान्ताः सर्वे।

इति चतुर्थोऽङ्कः।

---

(१) देवीं चिन्तयित्वा वेपते मे हृदयम्। न जाने संप्रति किमतोऽनुभवितव्यं भविष्यतीति।

(२) आश्चर्यमाश्चर्यम्। अपूर्णे पञ्चरात्रे दोहदस्य, मुकुलैः सनद्धस्तपनीयाशोकः। यावद्देव्यै निवेदयामि।

(३) आश्वसितु सखी। सत्यप्रतिज्ञा देवी।

(४) तेनाहं प्रमदवनपालिकायाः पृष्ठतो भवामि।



# पञ्चमोऽङ्कः ।



ततः प्रविशत्युद्यानपालिका ।

उद्यान । उवक्खित्तो मए सक्कारविहिणा तवणीआसो अस्स भित्तिवेदिआबन्धो । जाव अणुट्ठिदणिओअं अत्ताणं देवीए णिवेदेमि । परिक्रम्य । अहो देव्वस्स अणुकम्पणीआ मालविआ तस्सिं तह चण्डिआ देवी इमिणा असोअकुसुमदोहलवुत्तन्तेण पसादुम्मुही भविस्सदि । कहिं णु क्खु भवे देवी ? । विलोक्य । अम्मो एसो देवीए परिअणन्तरो किंपि जदुमुद्दालञ्छिदं मञ्जूसं गेण्हिअ चउस्सालादो कुज्जो णिक्कामदि । पुच्छिस्सं दाव णम्[1] ।

ततः प्रविशति यथानिर्दिष्टहस्तः कुब्जः ।

उद्यान । सारस ! कहिं पत्थिदोसि ?[2] ।

सार । महुअरिए ! विज्जाचरिआणं वह्मणाणं इमं णिव्वदक्खिणं मासिदं अज्जपुरोहिदस्स हत्थं पावइस्सम्[3] ।

---

(१) उपक्षिप्तो मया सत्कारविधिना तपनीयाशोकस्य भित्तिवेदिकाबन्धः । यावदनुष्ठितनियोगमात्मानं देव्यै निवेदयामि । अहो दैवस्यानुकम्पनीया मालविका । तस्यां तथा चण्डिका देवी अनेनाशोककुसुमदोहदवृत्तान्तेन प्रसादोन्मुखी भविष्यति । कुत्र नु खलु भवेत् देवी ? । अहह एष देव्याः परिजनान्तरं किमपि जतुमुद्रालाञ्छितां मञ्जूषां गृहीत्वा चतुःशालात् कुब्जो निष्क्रामति । पृच्छामि तावदेनम् ।

(२) सारस ! कुत्र प्रस्थितोऽसि ? ।

(३) मधुकरिके ! विद्याचरितानां ब्राह्मणानामिमां निवृत्तदक्षिणां मासिकीमार्यपुरोहितस्य हस्तं प्रापयिष्यामि ।

मधु। अह किं णिमित्तं ?[1]।

वार। जदा पहुदि सुदं सेणापदिणा। जण्णतुरंगरक्खणे णिउत्तो भट्टिदारओत्ति। तस्स आउसत्थं अट्ठसहस्सबस्सपरिमाणं दक्खिणा एहिं पडिस्सा होदि[2]।

मधु। अह कहिं देवी किं बा अणुचिट्ठदि ?[3]।

वार। मङ्गलगेहके आसणत्था विदब्भविसआदो भादुणा बीरसेणेण पेसिदं लेहं लिपिअरेहिं बाचीअमाणं सुणादि[4]।

मधु। को उण विदब्भराअबुत्तन्तो सुणीअदि ?[5]।

वार। बसीकिदो किल बीरसेणप्पमुहेहिं दण्डचक्केहिं भट्टिणो विदब्भणाहो। मोइदो किल से दाआदो माहबसेणो। दूदो अ महासाराणि रअणवाहणाणि सिप्पिदारिआभूइट्ठपरिअणं च उबाअणीकरिअ भट्टिणो स आसं पेसिदो। सो किल भट्टारअं पेक्खिस्सदि[6]।

(१) अथ किं निमित्तम् ?।

(२) यदा प्रभृति श्रुतं सेनापतिना। यज्ञतुरङ्गरक्षणे नियुक्तो भर्तृदारक इति तस्यायुष्यार्थमष्टशतसुवर्णपरिमाणं दक्षिणेभ्यः प्रतिज्ञा भवति।

(३) अथ कुत्र देवी किं वानुतिष्ठति ?।

(४) मङ्गलगृहके आसनस्था विदर्भविषयाद् भ्राता वीरसेनेन प्रेषितं लेखं लिपिकरैर्वाच्यमानं शृणोति।

(५) कः पुनर्विदर्भराजवृत्तान्तः श्रूयते ?।

(६) वशीकृतः किल वीरसेनप्रमुखैर्दण्डचक्रैर्भर्तुर्विदर्भनाथः। मोचितश्च किलास्य दायादो माधवसेनः। दूतश्च महासाराणि रत्नवाहनानि शिल्पिदारिकाभूयिष्ठं परिजनं चोपायनीकृत्य भर्तुः सकाशं प्रेषितः। स किल भट्टारकं प्रेक्षिष्यते।

मधु। गच्छ अणुचिट्ठ अत्तणो णिओअम्। अहं पि देविं पेक्खिस्सम्[1] ।

इति निष्क्रान्तौ ।

प्रवेशकः ।

ततः प्रविशति प्रतीहारी ।

प्रती। आणत्तम्हि देवीए असोअसक्कारव्वाविदाए, विण्णवेहि अज्जउत्तम् । इच्छामि अज्जउत्तेण सह असोअरुक्खस्स पसूणलच्छिं पच्चक्खीकादुं त्ति। ता जाव धम्मासणगदं देवं पडिवालेमि[2] । इति परिक्रामति ।

नेपथ्ये ।

वैता। दिष्ट्या दण्डेनैवारिशिरःसु वर्तते देवः ।

प्रथमः ।

परभृतकलव्याहारेषु त्वमात्तरतिर्मधुं
नयसि विदिशातीरोद्यानेष्वनङ्ग इवाङ्गवान् ।
विजयकरिणामालानाङ्कैरुपोढबलस्य ते
वरद ! वरदारोधोवृक्षैः सहावनतो रिपुः ॥

द्वितीयः ।

विरचितपदं वीरप्रीत्या सुरोपमसूरिभि
श्चरितमुभयोर्मध्येकृत्य स्थितं क्रथकैशिकान् ।
तव हृतवतो दण्डानीकैर्विदर्भपतेः श्रियं
परिघगुरुभिर्दोर्भिर्विष्णोः प्रसह्य च रुक्मिणीम् ॥

---

( १ ) गच्छानुतिष्ठात्मनो नियोगम् । अहमपि देवीं प्रेक्षिष्ये ।

( १ ) आज्ञप्तास्मि देव्याऽशोकसत्कारव्यापृतया, विज्ञापयार्यपुत्रम् । इच्छाम्यार्यपुत्रेण सहाशोकवृक्षस्य प्रसूनलक्ष्मीं प्रत्यक्षीकर्तुमिति । तद्यावद्धर्मासनगतं देवं प्रतिपालयामि ।

बकु। एसो जअसद्दसूइदप्पत्थाणो भट्टा इदो एव्व आ-अच्छदि। अहंपि दाव इमस्स मुहादो अवसरिअ एदं मुहालिन्दतोरणं समस्सिदा होमि¹। इत्येकान्ते स्थिता।

प्रविश्य सवयस्यो राजा।

कान्तां विचिन्त्य सुलभेतरसंप्रयोगां
श्रुत्वा विदर्भपतिमानमितं बलैश्च।
धाराभिरातप इवाभिहतं सरोजं
दुःखायते च हृदयं सुखमश्नुते च॥

विदू। इह पेक्खामि एकन्तसुहिदो भवं भविस्सदि त्ति²।

राजा। कथमिव?।

विदू। अज्ज किल देवीए धारिणीए पण्डिदकोसिआ भणिदा। भअवदि! तुमं जदि सज्जं पसाहणगव्वं वहेसि दंसेहि दाव मालविआए सरीरे विवाहणेवत्थं त्ति। तदो सविसेसकोदूहलं अलंकिदा मालविआ तत्तभोदीए। कदावि पूरए भवदो मणोरहं³।

राजा। सखे! मदपेक्षामनुरुध्य अनया धारिण्या पूर्वचरितैः सम्भाव्यत एवैतत्।

---

(१) एष जयशब्दसूचितप्रस्थानो भर्तेत एवागच्छति। अहमपि तावदस्य मुखात् समवसृत्यैतन्मुखालिन्दतोरणं समाश्रिता भवामि।

(२) इह प्रेक्षे एकान्तसुखितो भवान् भविष्यतीति।

(३) अद्य किल देव्या धारिण्या पण्डितकौशिकी भणिता। भगवति! त्वं यदि सज्जं प्रसाधनगर्वं वहसि दर्शय तावत् मालविकायाः शरीरे विवाहनेपथ्यमिति। ततः सविशेषकौतूहलमलङ्कृता मालविका तत्र-भवत्या। कदापि पूरयेत् भवतो मनोरथम्।

प्रती । उपगम्य । जेदु जेदु देवो । देवी विखवेदि । तवणी आसो अस्स कुसुमोग्गमसिरिं अज्जउत्तेण सह पच्चक्खीकादुं इच्छामि त्ति[1] ।

राजा । ननु तत्रैव देवी ? ।

प्रती । अध इं । जहा तुह सम्माणासुहं । अन्तेउरं बिसज्जिअ मालविआपुरोएण अत्तणो परिअणेण समं देवं पडिवालेदि[2] ।

राजा । सहर्षं विदूषकं विलोक्य । जयसेने ! गच्छाग्रतः ।

प्रती । एदु एदु देवो[3] । इति परिक्रामति ।

विदू । बिलोक्य । भो वअस्स ! किं चि परिवुत्तजोव्वणो विअ वसन्तो पमदवणे लक्खीअदि[4] ।

राजा यदाह भवान् ।

अग्रे विकीर्णकुरवकफलजालकभिद्यमानसहकारम् ।
परिणामसुखमिदन्ततोत्सुकयति यौवनं चेतः ॥

विदू । भो अअं सो दिण्णणवत्थो विअ कुसुमत्थवएहिं तवणी आसोओ । आलोएदु भवं[5] ।

---

(१) जयति जयति देवः । देवी विज्ञापयति । तपनीयाशोकस्य कुसुमोद्गमश्रियमार्यपुत्रेण सह प्रत्यक्षीकर्तुमिच्छामीति ।

(२) अथ किम् । यथा तव संमानसुखम् । अन्तःपुरं विसृज्य मालविकापुरोगेण आत्मनः परिजनेन समं देवं प्रतिपालयति ।

(३) एत्वेतु देवः ।

(४) भो वयस्य ! किञ्चित्परिहृत्तयौवन इव वसन्तः प्रमदवने लक्ष्यते ।

(५) भो अयं स दत्तनेपथ्य इव कुसुमस्तवकैस्तपनीयाशोकः । अवलोकयतु भवान् ।

राजा । स्थाने खलु प्रसवमन्थरोऽभूदयमिदानीमनन्यसाधारणीं शोभां पुष्यति । पश्य-

सर्वाशोकलतानां प्रथमं सूचितवसन्तविभवानाम् ।
निर्वृत्तदोहदेऽस्मिन् संक्रान्तानीव मुकुलानि ॥

विदू । तह वीसद्धो होहि । अम्हासु तह उवगदेसु विधारिणी पासपरिवत्तिणं मालविअं अणुमण्णेदि[1] ।

राजा । सहर्षम् । पश्य पश्य सखे !

मामियमभ्युत्तिष्ठति देवी विनयादनूत्थिता प्रियया ।
विसृतहस्तकमलया नरेन्द्रलक्ष्म्या वसुमतीव ॥

ततः प्रविशति धारिणी मालविका परिव्राजिका विभवतश्च परिवारः ।

माल । आत्मगतम् । जाणामि णिमित्तं मह कोदुआलंकारस्स । तहवि मे हिअअं बिसिणीपत्तगदं विअ सलिलं वेवदि । दक्खिणेदरं णअणं अ बहुसो फुरदि[2] ।

विदू । भो वअस्स ! विवाहणेवत्थेण सविसेसं क्खु सोहदि अत्तभोदी मालविआ[3] ।

राजा पश्याम्येनाम् । एषा

---

(१) तथा विश्रब्धो भव । अस्मासु तथा उपगतेष्वपि धारिणी पार्श्वपरिवर्तिकां मालविकामनुमन्यते ।

(२) जानामि निमित्तं मम कौतुकालङ्कारस्य । तथापि मे हृदयं बिसिनीपत्रगतमिव सलिलं वेपते । दक्षिणेतरं नयनं च बहुशः स्फुरति ।

(३) भो वयस्य विवाहनेपथ्येन सविशेषं खलु शोभतेऽत्रभवती मालविका ।

अनतिलम्बिदुकूलनिवासिनी बहुभिराभरणैः प्रतिभाति मे ।
उडुगणैरुदयोन्मुखचन्द्रिका हतहिमैरिव चैत्रविभावरी ॥

धारि । उपेत्य । जेदु जेदु अज्जउत्तो[1] ।

विदू । वड्ढदु भोदी[2] ।

परि । विजयतां देवः ।

राजा । भगवति ! अभिवादये ।

परि । अभिप्रेतसिद्धिरस्तु ।

देवी । सस्मितम् । अज्जउत्त ! एस दे अम्हेहिं तरुणीजणसहाअस्स असोओ संकेदगेहओ संकप्पिदो[3] ।

विदू । भो आराहिओसि[4] ।

राजा । सव्रीड़मशोकमभितः परिक्रामन् ।
नायं देव्या भाजनत्वं न नेयः सत्काराणामीदृशानामशोकः ।
यः सावज्ञो माधवश्रीनियोगे पुष्पैः शंसत्यादरं त्वत्प्रयत्ने ॥

विदू । भो वीसद्धो भविअ जोव्वणवदिं पेक्ख[5] ।

धारि । कां ?[6] ।

विदू । तवणीआसोअस्स कुसुमसोहं[7] ।

---

(१) जयति जयति आर्य्यपुत्रः ।

(२) वर्धतां भवती ।

(३) आर्य्यपुत्र ! एष तेऽस्माभिस्तरुणीजनसहायस्याशोकः संकेतगृहकः संकल्पितः ।

(४) भो आराधितोऽसि ।

(५) भो विश्रब्धो भूत्वा यौवनवतीं प्रेक्षस्व ।

(६) काम् ? ।

(७) तपनीयाशोकस्य कुसुमशोभाम् ।

सर्वे उपविशन्ति ।

राजा । मालविकां विलोक्यात्मगतम् । कष्टः खलु सन्निधि-वियोगः ।

अहं रथाङ्गनामेव प्रिया सहचरीव मे ।
अननुज्ञातसम्पर्का धारिणी रजनीव नौ ॥

प्रविश्य कञ्चुकी ।

कञ्चु । जयति जयति देवः । अमात्यो विज्ञापयति । तस्मिन् काले विदर्भराजोपायने द्वे शिल्पकारिके मार्ग-परिश्रमादलघुशरीरे इति कृत्वा न प्रवेशिते । सम्प्रति देवोपस्थानयोग्ये । तदाज्ञां देवो दातुमर्हति ।

राजा । प्रवेशय ते ।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रम्य ताभ्यां सह प्रविश्य । इत इतो भवत्यौ ।

प्रथ । जनान्तिकम् । हला रमणीए ! अपुव्वं विअ इमं राअउलं पविसन्तीए मे पसीददि हिअअब्भन्तरङ्गदो अप्पा[१] ।

द्वितो । जोसिणिए ! मह्हवि एव्वं । अत्थि क्खु लोअ-प्पवादो आगामि सुहं दुक्खं हिअअसमवत्था कधेदि त्ति[२] ।

प्रथ । सच्चो दाणिं होदु[३] ।

---

(१) हला रमणीये ! अपूर्वमिवेदं राजकुलं प्रविशन्त्या मे प्रसी-दति हृदयाभ्यन्तरसङ्गत आत्मा ।

(२) ज्योत्स्निके ! ममाप्येवम् । अस्ति खलु लोकप्रवादः आगामि सुखं दुःखं वा हृदयसमवस्था कथयति इति ।

(३) सत्य इदानीं भवतु ।

कञ्चु । एष देव्या सह देवस्तिष्ठति । उपसर्पतां भवत्यौ ।

उभे । उपसर्पतः मालविकां परिव्राजिकां च दृष्ट्वा परस्परमवलोकयतः ।

उभे । प्रणिपत्य । जेदु जेदु भट्टा । जेदु जेदु भट्टिणी[1] ।

राजा । निषीदतम् ।

उभे । राजाज्ञया उपविष्टे ।

राजा । कस्यां कलायामभिविनीते भवत्यौ ।

उभे । भट्टा ! सङ्गीदए अब्भन्तरम्ह[2] ।

राजा । देवि ! गृह्यतामनयोरन्यतरा ।

धारि । मालविए । इदो दक्खदरा सङ्गीदसहाइणी दे का रुच्चदि[3] ।

उभे । मालविकां दृष्ट्वा । अम्मो भट्टिदारिआ । जेदु जेदु भट्टिदारिआ[4] । इति प्रणिपत्य तया सह बाष्पं विसृजतः । सर्वे विलोकयन्ति ।

राजा । के भवत्यौ ? का वेयम् ? ।

प्रथ । अम्हाणं भट्टिदारिआ[5] ।

राजा । कथमिव ? ।

उभे । सुणादु भट्टा । जो सो भट्टिणा विजअदण्डेहिं

(१) जयति जयति भर्ता । जयति जयति भट्टिनी ।

(२) भर्तः ! सङ्गीतकाभ्यन्तरे स्वः ।

(३) मालविके ! इतः दक्षतरा संगीतसहायिनी ते का रोचते ।

(४) अहह भर्तृदारिका । जयति जयति भर्तृदारिका ।

(५) आवयोर्भर्तृदारिका ।

(१) शृणोतु भर्ता । यः स भर्त्रा विजयदण्डैर्विदर्भनाथं वशीकृत्य बन्धनान्मोचितः कुमारो माधवसेनो नाम । तस्येयं कनीयसी भगिनी मालविका नाम ।

विदब्भणाहं वसीकरिअ बन्धणादो मोइदो कुमारो माहवसेणो णाम। तस्स इअं कणीअसी बहिणिआ मालविआ णाम[1]।

धारि। कहं राअदारिआ इअम्?। चन्दणं क्खु मए पादुआवदेसेण दूसिदम्[2]।

राजा। अथात्रभवती कथमित्थम्भूता?।

माल। निःश्वस्यात्मगतम्। विहिणिओएण[3]।

द्विती। सुणादु भट्टा दाआदवसं गदे भट्टिदारए माहवसेणे तस्स अमच्चेण अज्जसुमदिणा अह्मारिसं परिअणं उज्झिअ गूढं आणीदा एसा[4]।

राजा। श्रुतपूर्व्वं मयैतत्। ततस्ततः।

द्विती। भट्टा! अदो अवरं ण आणामि[5]।

परि। अतः परमहं मन्दभागिनी कथयिष्यामि।

उभे। भट्टिदारिए! अज्जकोसिईए विअ सरसंजोगो। णं सा एव्व[6]।

माल। अह इम्[7]।

---

(२) कथं राजदारिकेयम्?। चन्दनं खलु मया पादुकापदेशेन दूषितम्।

(३) विधिनियोगेन।

(४) शृणोतु। भर्त्ता दायादवशंगते भर्त्तृदारके माधवसेने तस्यामात्येन सुमतिनास्मादृशं परिजनमुज्झित्वा गूढमानीतैषा।

(५) भर्त्तः! अतोऽपरं न जानामि।

(६) भर्त्तृदारिके! आर्य्यकौशिक्या इव स्वरसंयोगः?। ननु सैव।

(७) अथ किम्?।

उभे। जदिवेसधारिणी अज्जकोसिई दुक्खेण विभावीअदि। भअवदि! णमो दे[1]।

परि। स्वस्ति भवतीभ्याम्।

राजा। कथमाप्तवर्गोऽयं भगवत्याः।

परि। एवमेतत्।

विदू। तेण कहेदु दाणिं भअवदी अत्तभोदीवुत्तन्तं दाव असेसम्[2]।

परि। सविक्लवम्। तावत् श्रूयताम्। माधवसेनसचिवं ममाग्रजं सुमतिमवगच्छ।

राजा। उपलक्षितः। ततस्ततः।

परि। स इमां तथागतभ्रातृकां मया सार्धमपवाह्य भवत्सम्बन्धापेक्षया पथिकसार्थं विदिशागामिनमनुप्रविष्टः।

राजा। ततस्ततः।

परि। स च अटव्यन्तरे निविष्टो गताध्वा वणिग्गण इव विश्रमितुमारब्धः।

राजा। ततस्ततः।

परि। ततः। किं चान्यत्।

तूणीरपट्टपरिणद्धभुजान्तराल
मापार्ष्णिलम्बिशिखिबर्हकलापधारि।
कोदण्डपाणि निनदत्प्रतिरोधकाना
मापातदुःप्रसहमाविरभूदनीकम्॥

---

(१) यतिवेशधारिण्यार्यकौशिकी दुःखेन विभाव्यते। भगवति! नमस्ते।

(२) तेन कथयत्विदानीं भगवत्यत्रभवतीवृत्तान्तं तावदशेषम्।

मालविका भयं रूपयति ।

विदू । भोदि ! मा भाआहि । अदिक्कन्तं क्खु अत्तभोदी कहेदि ।[1]

राजा । ततस्ततः ।

परि । ततः मुहूर्तं बद्धायुधास्ते पराङ्मुखीभूताः सार्थवाहयोद्धारस्तस्करैः ।

राजा । भगवति । इन्त अतःकष्टतरमिदानीं श्रोतव्यम् ।

परि । ततः स मत्सोदर्यः ।

इमां परीप्सुर्दुर्जातेः पराभिभवकातराम् ।
भर्तृप्रियः प्रियैर्भर्तुरानृण्यमसुभिर्गतः ॥

प्रथ । आं हा हदो सुमदी आम्[2] ।

द्विती । तदो क्खु भट्टिदारिआए इअं समवत्था संवुत्ता[3] ।

परिव्राजिका वाष्पं सृजति ।

राजा । भगवति ! तनुत्यजामीदृशी लोकयात्रा । न शोच्यस्तत्रभवान् सफलीकृतभर्तृपिण्डस्तपस्वी ।

परि ततोऽहं मोहमुपागता यावत् संज्ञां प्रतिलभे तावदियं दुर्लभदर्शना संवृत्ता ।

राजा । मतृखलु कष्टमनुभूतं तत्रभवत्या ।

परि । ततो भ्रातुः शरीरमग्निसात्कृत्वा पुनर्नवीकृतदुःखया तदीयं देशमवतीर्य काषाये गृहीते ।

राजा । युक्तः सज्जनस्यैष पन्थाः ।

---

(१) भवति ! मा बिभेहि । अतिक्रान्तं खल्वत्रभवती कथयति ।

(२) आः हा हतः सुमतिर्ननु ।

(३) ततः खलु भर्तृदारिकाया इयं समवस्था संवृत्ता ।

परि । शेषमाटविकेभ्यो वीरसेनं वीरसेनाद्देवीं गता । देवीगृहे लब्धप्रवेशया मया चानन्तरं दृष्टेत्येवमवसानं कथायाः ।

माल । आत्मगतम् । किं णु क्खु भट्टा साम्पदं भणादि[1] ।

राजा । अहो परिभवोपहारिणो विनिपाताः । कुतः

प्रेष्यभावेन नामेयं देवीशब्दक्षमा सती ।
स्नानीयवस्त्रक्रियया पत्त्रोर्णं वोपयुज्यते ॥

धारि । भअवदि ! तुए अहिजणवदिं मालविअं अणाचक्खन्तीए असंपदं किदम्[2] ।

परि । शान्तं पापम् । कारणेन खलु मया नैष्ठुर्यमवलम्बितम् ।

धारि । किं विअ तं कारणम् ?[3] ।

परि । इयं पितरि जीवति केनापि देवयात्रागतेन सिद्धादेशकेन साधुना मत्समक्षं व्यादिष्टा । वत्सरमात्रमियं प्रेष्यभावमनुभूय ततः सदृशभर्तृगामिनी भविष्यति। विदर्भगतमनुष्ठेयमवधारितमस्माभिः । देवस्य तावदभिप्रायं श्रोतुमिच्छामीति ।

राजा । मौद्गल्य ! तत्रभवतोर्यज्ञसेनमाधवसेनयोर्द्वैराज्यमिदानीमवस्थापयितुकामोऽस्मि ।

---

(१) किं नु खलु भर्ता साम्प्रतं भणति ।

(२) भगवति ! त्वयाभिजनवतीं मालविकामनाचक्षाणया असांप्रतं कृतम् ।

(३) किमिव तत्कारणम् ।

तौ पृथगम्बरदाकूले शिष्टानुत्तरदक्षिणे ।
नक्तं दिवं विभज्योभौ शीतोष्णकिरणाविव ॥

कञ्चु । देव ! एवममात्यपरिषदे विज्ञापयामि ।

राजा । अङ्गुल्यानुमन्यते ।

निष्क्रान्तः कञ्चुकी ।

प्रथ । जनान्तिकम् । भट्टिदारिए ! दिट्ठिआ भट्टिदारओ अद्धरज्जे पडिट्ठं गमिस्सदि[1] ।

माल । एदं दाव बहुमणिदव्वं जं जीविदसंसआदो विमुक्तो[2] ।

पुनः प्रविश्य कञ्चुकी ।

विजयतां देवः । अमात्यो देवस्य विज्ञापयति कल्याणी देवस्य बुद्धिः । मन्त्रिपरिषदोऽप्येतदेव दर्शनम् ।

द्विधा विभक्तां श्रियमुद्वहन्तौ धुरं रथाश्वाविव संग्रहीतुः ।
तौ स्थास्यतस्ते नृपते ! निदेशे परस्परावग्रहनिर्विकारौ ॥

राजा । तेन हि मन्त्रिपरिषदं ब्रूहि सेनान्ये वीरसेनाय लेख्यतामेवं क्रियतामिति ।

कञ्चु । यदाज्ञापयति देवः । इति निष्क्रम्य सप्राभृतकं लेखं गृहीत्वा पुनः प्रविश्य । अनुष्ठिता प्रभोराज्ञा । अयं देवस्य सेनापतेः पुष्पमित्रस्य सकाशात्सोत्तरीयप्राभृतको लेखः प्राप्तः । प्रत्यक्षीकरोत्वेनं देवः ।

राजा । उत्थाय प्राभृतकं सोपचारं गृहीत्वा लेखं परिजनायार्पयति । परिजनो लेखं नाट्येनोद्घाटयति ।

---

(१) भर्तृदारिके ! दिष्ट्या भर्तृदारकोऽर्धराज्ये प्रतिष्ठां गमिष्यति ।

(२) एतत्तावद् बहु मन्तव्यं यद् जीवितसंशयाद्विमुक्तः ।

धारि। अम्महे तदोमुहं एव्व णो हिअअम्। सुणिस्सं दाव गुरुअणकुसलाणन्तरं वसुमित्तस्स वुत्तन्तम्। अदिभारे क्खु पुत्तओ सेणावदो णिउत्तो[1]।

राजा। उपविश्य वाचयति। स्वस्ति यज्ञशरणात्सेनापतिः पुष्यमित्रो वैदिशस्थं पुत्रमायुष्मन्तमग्निमित्रं स्नेहात्परिष्वज्यानुदर्शयति। विदितमस्तु। योऽसौ राजयज्ञदीक्षितेन मया राजपुत्रशतपरिवृतं वसुमित्रं गोप्तारमादिश्य वत्सराय निवर्त्तनीयो निरर्गलस्तुरङ्गमो विसर्ज्जितः। स सिन्धोर्दक्षिणे रोधसि चरन्नश्वानीकेन यवनेन प्रार्थितः। तत उभयोः सेनयोर्महानासीत् संमर्दः।

धारिणी विषादं नाटयति।

राजा। कथमीदृशं संवृत्तम्। पुनर्वाचयति।

ततः परान् पराजित्य वसुमित्रेण धन्विना।
प्रसह्य ह्रियमाणो मे वाजिराजो निवर्त्तितः॥

धारि। इमिणा आस्ससिदं मे हिअअम्[2]।

राजा। लेखशेषं वाचयति। सोऽहमिदानीमंशुमतेव सगरः पौत्रेण प्रत्याहृताश्वो यक्ष्ये। तदिदानीमकालहीनं विगतरोषचेतसा भवता वधूजनेन सह यज्ञसेवनायागन्तव्यमिति।

राजा। अनुगृहीतोऽस्मि।

---

(१) अहह तन्मुखमेव नो हृदयम्। श्रोष्यामि। तावद्गुरुजनकुशलानन्तरं वसुमित्रस्य वृत्तान्तम्। अतिभारे खलु पुत्रकः सेनापतिर्नियुक्तः।

(२) अनेनाश्वसितं मे हृदयम्।

परि। दिष्ट्या पुत्रविजयेन दम्पती वर्द्धते।

भर्त्रासि वीरपत्नीनां श्लाघ्यानां स्थापिता धुरि।
वीरसूरिति शब्दोऽयं तनयात्त्वामुपस्थितः॥

धारि। भोदि! परितुट्ठम्हि जं पिदरं अणुजादो वच्छओ[1]।

राजा। मौद्गल्य! ननु कलभेन यूथपतेरनुकृतम्।

कञ्चु।

नैतावता वीरविजृम्भितेन चित्तस्य नो विस्मयमादधाति।
यस्याप्रधृष्यः प्रभवस्त्वमुच्चैरग्नेरपां दग्धुरिवोरुजन्मा॥

राजा। मौद्गल्य! यज्ञसेनश्यालमुरीकृत्य मुच्यन्तां सर्वे बन्धनस्थाः।

कञ्चु। यदाज्ञापयति देवः। इति निष्क्रान्तः।

धारि। जयसेणे! गच्छ सेलकप्पमुहीणम् अन्तेउराणं पुत्तअस्स वुत्तन्तं णिवेदेहि[2]।

प्रतीहारी प्रस्थिता।

धारि। एहि दाव[3]।

प्रती। प्रतिनिवृत्य। इअम्हि[4]।

धारि। जनान्तिकम्। जं मए असोअदोहलणिओए मालविआए पडिस्सादं तं, से अभिअणं च णिवेदिअ मम

---

(१) भवति! परितुष्टास्मि यत्पितरमनुजातको वत्सकः।

(२) जयसेने! गच्छ सेलकप्रमुखीनामन्तःपुराणां पुत्रकस्य वृत्तान्तं निवेदय।

(३) एहि तावत्। (४) इयमस्मि।

(५) यन्मयाशोकदोहदनियोगे मालविकायाः प्रतिश्रुतं तत्,

ऽअणेण इरावदिं अणुणेहि । तुए क्खु अअं संवादो ण ऽंसिदव्वो त्ति[1] ।

मती । जं देवी आणवेदि । इति निष्क्रम्य पुनः प्रविश्य च । भट्टिणि पुत्तविजयणिमित्तेण परितोसेण अन्तेउराणं आभरणाणं मञ्जूसिअह्मि संवुत्ता[2] ।

धारि । अलम् । किं अच्चरिअम् । साधारणो णं अब्भुदओ[3] ।

मती । जनान्तिकम् । भट्टिणि ! इरावदी विण्णवेदि । सरिसं क्खु पहुवीए पहुवन्तीए तव वअणम् । संकप्पिदेण जुज्जदि अण्णहा कादुं त्ति[4] ।

धारि । भअवदि ! तुए अणुमदं इच्छामि अज्जसुमदिणा पढमं किदम् अज्जउत्तस्स मालविअम् उववादेदुम्[5]।

परि । इदानीमपि त्वमस्याः प्रभवसि ।

धारि । मालविकां हस्ते गृहीत्वा । इमं अज्जउत्तो पिअणिवेदणाणुरूअं पारितोसिअं पडिच्छदु[6] ।

---

तस्या अभिजनं च निवेद्य मम वचनेनेरावतीमनुनय । त्वया खल्वयं संवादो न भ्रंशितव्य इति ।

(२) यद्देव्याज्ञापयति । भट्टिनि ! पुत्रविजयनिमित्तेन परितोषेणान्तःपुराणाम् आभरणानां मञ्जूषिकास्मि संवृत्ता ।

(३) अलम् । किमाश्चर्यम् । साधारणो नन्वभ्युदयः ।

(४) भट्टिनि ! इरावती विज्ञापयति । सदृशं खलु पृथिव्याः प्रभवन्त्यास्तव वचनम् । सङ्कल्पितेन युज्यतेऽन्यथा कर्तुमिति ।

(५) भगवति ! त्वयानुमतमिच्छाम्यार्य्यसुमतिना प्रथमं कृतामार्य्यपुत्रस्य मालविकामुपपादयितुम् ।

(६) इममार्य्यपुत्रः प्रियनिवेदनानुरूपं पारितोषिकं प्रतीच्छतु ।

राजा व्रीड़ां नाटयति ।

धारि । सस्मितम् । किं अवधारेदि अज्जउत्तो[1] ।

विदू । भोदि ! अत्थि क्खु लोअप्पवादो सव्वो जणो णव्ववरो लज्जादुरो होदित्ति[2] ।

राजा विदूषकमवेक्षते ।

विदू । अह देवीए एव किदप्पणिव्विसेसं दिसदेवी-सद्दं मालविअम् अत्तभवं पडिगहिदुम् इच्छदि[3] ।

धारि । एदाए अ राअदारिआए अहिजणेण दिस्सो एव्व देवीसद्दो । किं पुणरुत्तेण[4]।

परि । मामैवम्

अस्माकमुत्तमणिर्मणिजातिपुरस्कृतः ।
जातरूपेण कल्याणि ! तर्हि संयोगमर्हति ॥

धारि । मरिसेदु भअवदी, अब्भुदअकहाए पढमं अवगुण्ठिदं वसणं णालक्खिदम् । जअसेणे ! गच्छ दाव कोसेअं पत्तोसं उवणेहि[5] ।

---

(१) किमवधारयत्यार्य्यपुत्रः ।

(२) भवति ! अस्ति खलु लोकप्रवादः सर्व्वो जनो नव्यो वरो लज्जातुरो भवतीति ।

(३) अथ देव्या एव कृतात्मनिर्विशेषां दत्तदेवीशब्दां मालविकामत्रभवान् प्रतिग्रहीतुमिच्छति ।

(४) एतस्यास्तु राजदारिकाया अभिजनेन एव दत्तः देवीशब्दः । किं पुनरुक्तेन ।

(५) मर्षयतु भगवती, अभ्युदयकथया प्रथमम् अवगुण्ठनं वसनं नालक्षितम् । जयसेने ! गच्छ तावत्कौषेयं पत्त्रोर्णमुपनय ।

प्रती । जं भट्टिणी आणवेदि । इति निष्क्रम्य पत्त्रोर्णं गृहीत्वा प्रविश्य । देवि । एदम्[1] ।

धारि । मालविकामवगुण्ठनवतीं कृत्वा । अज्जउत्त ! इमं पडिच्छीअदु[2] ।

राजा । त्वच्छासनं प्रत्यनुरक्ता वयम् । अपवार्य्य । हन्त प्रतिगृहीतम् ।

विदू । अह्महे देवीए अणुऊलदा धारिणीए[3] । इति परिजनमवलोकयति ।

परिजनः । मालविकामुपेत्य । जेदु जेदु भट्टिणी[4] ।

धारिणी परिव्राजिकां निर्द्देशयति ।

परि । देवि ! नैतच्चित्रं त्वयि ।

प्रतिपक्षेणापि पतिं सेवन्ते भर्तृ सेवनानार्य्यः ।
अन्यसरितामपि जलं समुद्रगाः प्रापयन्त्युदधिम् ॥

प्रविश्य निपुणिका ।

निपु । जेदु जेदु भट्टा । इरावदी विसवेदि । जं हि उवआरादिक्कमेण तदा अहं भट्टिणो अवराद्धा । णं सो अत्तणो भट्टा । अणुपदं भट्टिणो अणुरूवं एव्व

---

(१) यद्भट्टिन्याज्ञापयति । देवि ! एतत् ।

(२) आर्य्यपुत्र ! इयम् प्रतीष्यताम् ।

(३) अहह देव्या अनुकूलता धारिण्याः ।

(४) जयति जयति भट्टिनी ।

(५) जयति जयति भर्ता । इरावती विज्ञापयति । यद्धि उपचारातिक्रमेण तदाहं भर्तुरपराद्धा । ननु स आत्मनो भर्ता । अनुपदं भर्तुरनुरूपमेव मया आचरितम् । साम्प्रतं पूर्णमनोरथो भर्ता जातः । अहं प्रसादकालेन सम्भावयितव्येति ।

मए आअरिअं। सम्पदं पुत्तअणोरहो भट्टा जादो। अहं संपसादसेणेण संभावइदव्वेम्हि[1]।

धारि। णिउणिए! अवस्सं दे सेविअं अज्जउत्तो आणिस्सदि[2]।

निपु। अणुग्गिहीदम्हि[3]। इति निष्क्रान्ता।

परि। देव! अमुनात्वत्सम्बन्धेन चरितार्थं माधवसेनं त्वदाज्ञया द्रष्टा नयनसाफल्यं कर्तुमिच्छामि।

धारि। ण जुत्तं भअवदि! अम्हाणं परिच्चइदुं[4]।

राजा। भगवति मदीयेष्वेव लेखेषु तत्रभवतस्त्वामुद्दिश्य सभाजनानि वार्तयिष्यामः।

परि। युवयोः स्नेहात्परवानयं जनः।

धारि। आणावेदु अज्जउत्तो भूओवि दे किं पिअम् उवअरिस्सम्[5]।

राजा। मम तावदेतावदेव प्रियम्।

त्वं मे प्रसादसुमुखी भव चण्डि! देवि! नित्य
मेतावदेव मृगये प्रतिपक्षहेतोः।
आशास्यमीतिविगमप्रभृति प्रजानां
सम्पत्स्यते न खलु गोप्तरि नाग्निमित्रे॥

इति निष्क्रान्ताः सर्वे। इति पञ्चमोऽङ्कः।

इति श्रीमहाकवि-कालिदासप्रणीतम्मालविकाग्निमित्रं नाम नाटकं समाप्तम्।

---

(२) निपुणिके! अवश्यं ते सेवितमार्य्यपुत्रो ज्ञास्यतीति।

(३) अनुगृहीतास्मि।

(४) न युक्तं भगवति! अस्मान् परित्यक्तुम्।

(५) आज्ञापयत्वार्य्यपुत्रः। भूयोऽपि ते किं प्रियमुपकरिष्यामि।